॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥



श्रीमज्जयतीर्थयतिकृता

# श्रीमन्न्यायसुधा

परिमळाद्युपेता

**सम्पुटम् – १२ – द्वितीयाध्यायः**

प्रकाशनम्

**श्रीगुरुसार्वभौमसंस्कृतविद्यापीठम्**

श्रीमन्मध्वाचार्यमूलमहासंस्थानम्, श्रीराघवेन्द्रस्वामिमठः, मन्त्रालयः



॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

श्रीमज्जयतीर्थयतिकृता

# श्रीमन्न्यायसुधा

## परिमळाद्युपेता

सम्पुटम् – १२

## द्वितीयाध्यायस्य प्रथमपादे

नविलक्षणत्वाधिकरणम् (भागः २),
स्मृत्यधिकरणम्, असदधिकरणम् (भागः १)

प्रकाशनम्

श्रीगुरुसार्वभौमसंस्कृतविद्यापीठम्

श्रीमन्मध्वाचार्यमूलमहासंस्थानम्
श्रीराघवेन्द्रस्वामिमठः, मन्त्रालयः



# श्रीमन्न्यायसुधा

परिमळाद्युपेता

सम्पुटम् – १२

प्रथमं मुद्रणम् - ई.सन् २००७

# Śrīman-Nyāyasudhā

Parimaḷādyupetā

**Volume - 12**

First Edition -2007 A.D.

सर्वजित् संवत्सरम्, शके १९२९, भाद्रपद शुक्ल पौर्णिमा, बुधवासरः

मन्त्रालयम्

*Published by :*

**Śrī Gurusārvabhauma Saṁskṛt Vidyāpīṭham**
**Śrīman Madvāchārya Mūla Mahāsamsthāna**
**Śrī Rāghavendra Swāmy Mutt**
Mantrālayam - 518 345
India.

* मुद्रकः *

धनंजयाचार्य बाळाचार्य वरखेडकरः

**सुधा मुद्रणम्**
शंकरपुरम्, बेंगळूर - ५६० ००४
दूरवाणी– २६७२ ३१०७, ६५६० २८३६

**SUDHA MUDRANA**
Shankarpuram, Bangalore - 560 004
Phone : 2672 3107, 6560 2836



# समर्पणपत्रिका

श्रीमत्परमहंसपरिव्राजकाचार्यत्वाद्यमन्दबिरुदवृन्दविभूषित-
सर्वतन्त्रस्वतन्त्र-श्रीमद्वैष्णवसिद्धान्तस्थापनाचार्य-
षड्दर्शनाचार्यवर्य-नास्तिकदर्शननिराकरणधुरन्धर-
आस्तिकदर्शनमहाचार्य-
श्रीमन्मूलरघुपतिवेदव्यासदेवदिव्यश्रीपादपद्माराधक-

**श्रीमन्मध्वाचार्यसमलङ्कृतमूलमहासंस्थानाधिष्ठितानां**

श्रीमद्द्वैतसाम्राज्यदिग्विजयविद्यासिंहासनाधीश्वराणां
परमपूज्यानां कामधेनुकल्पवृक्षसदृशानां

**श्रीश्रीमद्राघवेन्द्रतीर्थगुरुसार्वभौमानां**

हृत्कमलनिवासि-

**श्रीरामकृष्णवेदव्यासाभिन्न-**

**श्रीमूलरघुपतिपादकमलयोः**

समर्पितोऽयं ग्रन्थः ॥

सुजयीन्द्रकृपापूर्णसुशमीन्द्रयतीश्वरैः ।
श्रीमन्न्यायसुधाग्रन्थ अर्पितोऽयं मुदा हरेः ॥





॥ श्रीमन्मूलरामो विजयते ॥

श्रीमद्धंसनामकपरमात्मसमारब्धपरम्परागत-श्रीमत्परमहंसेत्यादिबिरुदभूषित-

श्रीमदानन्दतीर्थभगवत्पादाचार्य-मूलमहासंस्थानाधीश्वर-

**श्रीमद्राघवेन्द्रगुरुसार्वभौम-**

वेदान्तसाम्राज्यदिग्विजयविद्यासिंहासनाधीश्वर-

**श्रीमत्सुयमीन्द्रतीर्थश्रीपादकरकमलसञ्जात-श्रीमत्सुजयीन्द्रतीर्थश्रीपादवरकुमारक-**

**श्री श्रीमत्सुशमीन्द्रतीर्थश्रीपादानाम्**

**तथा तेषामुत्तराधिकारिणां**

**श्री श्रीमत्सुयतीन्द्रतीर्थश्रीपादानाम्**

# अनुग्रहवचनम्

अस्मत्प्रियशिष्यान् तथैव अस्मन्मठीयान् नैकान् आस्थानविद्वज्जनान् वयम् अस्मद्गुरुवराणां श्रीमत्सुजयीन्द्रतीर्थश्रीमच्चरणानामाज्ञामनुरुध्य परिमलादि-बहुटिप्पणीभिर्युक्तां श्रीमन्न्यायसुधां संशोध्य प्रकाशयितुमादिष्टवन्तः स्मः ।

अस्मदादेशमनुरुध्य ग्रन्थमिमं संशोध्य मुद्रणप्रतिमपि संशोधितवद्भ्यः प्रधानसम्पादकेभ्यः वैकुण्ठवासिभ्यः साणूरु भीमभट्टेभ्यः तथा ग्रन्थमिमं प्रकाशितवद्भ्यः श्रीगुरुसार्वभौमसंस्कृत-विद्यापीठीयेभ्यः एवं ग्रन्थसंशोधने तथा मुद्रणप्रतिसंशोधने च सहायमाचरितवद्भ्यः अस्मद्विद्यापीठा-ध्यापकेभ्यः, तथाऽन्येभ्यो विद्वद्भ्यः, एवमल्पकाले सुष्ठु मुद्रणं कृतवद्भ्यः 'सुधा मुद्रण'नेतृभ्यः धनंजयाचार्येभ्यः तथा सर्वेभ्यः एतद्ग्रन्थाध्ययन-अध्यापनादिकर्तृभ्यः अस्मदुपास्यः श्री श्रीमद्राघवेन्द्र-तीर्थगुर्वन्तर्गत-श्रीभारतीरमण-मुख्यप्राणान्तर्गत-श्रीसीतापति-श्रीमूलरामचन्द्रदेवः इतोऽप्यतिशयित-आयुरारोग्यैश्वर्यादीनि, ज्ञानभक्तिवैराग्यादीनि च दत्वा अनुगृह्णातु इत्याशास्महे ।

*इति नारायणस्मृतिः ।*

मन्त्रालयक्षेत्रम्,

सर्वजित् संवत्सरम्, शके १९२९, भाद्रपद शुक्ल पौर्णिमा ।



श्रीमन्मध्वाचार्यमूलमहासंस्थान-श्रीराघवेन्द्रस्वामिमठाधीशानां

श्री श्री सुजयीन्द्रतीर्थश्रीपादानां वरकुमारकाणां

**श्री श्री सुशमीन्द्रतीर्थश्रीपादानां**

परमानुग्रहेण सम्पादितोऽयं ग्रन्थः ।

# सम्पादकविद्वन्मण्डली

**प्रधानसम्पादकाः**

**वैकुण्ठवासिनः श्री आचार्य साणूरु भीमभट्टाः**

आस्थानविद्वांसः, श्रीराघवेन्द्रस्वामिमठः, मन्त्रालयः

**सम्पादकाः**

विद्वान् श्री कुर्डि सुशीलेन्द्राचार्याः

विद्वान् श्री कडप राघवेन्द्राचार्याः, *प्रांशुपालाः श्री गु.सं.वि., मन्त्रालयः*

विद्वान् श्री पुराणिक सुब्रह्मण्याचार्याः

विद्वान् आहिताग्नि श्री वरखेडकर भीमसेनाचार्याः

**निर्वाहकाः**

**श्रीपादपुत्राः राजा एस्. राजगोपालाचार्याः**

श्री श्री सुशमीन्द्रतीर्थश्रीपादानाम् आप्तकार्यदर्शिनः,

श्रीमन्मध्वाचार्यमूलमहासंस्थानम् - श्रीराघवेन्द्रस्वामिमठः,

मन्त्रालयम्



# श्रीमन्न्यायसुधा – परिमळाद्युपेता

## टिप्पणीनां क्रमः तथा सङ्क्षिप्तनामानि

| क्र.सं. | कर्तृनाम | टिप्पणीनाम | सङ्क्षिप्तनाम |
|---|---|---|---|
| १ | श्री विजयीन्द्रतीर्थाः | न्यायसुधाबिन्दुः | बिन्दुः— |
| २ | श्री राघवेन्द्रतीर्थाः | परिमळः | परि०— |
| ३ | श्री श्रीपादराजतीर्थाः | वाग्वज्रः | वाग्वज्रः— |
| ४ | श्री वादिराजतीर्थाः | गुर्वर्थदीपिका | गु०दी०— |
| ५ | श्री यदुपत्याचार्याः | टिप्पणी | यादु०— |
| ६ | श्री वंशपल्ली श्रीनिवासाचार्याः | वाक्यार्थविवृतिः | वं०प०— |
| ७ | श्री गलगली नरसिंहाचार्याः | आनन्दः | आनन्दः— |
| ८ | श्री कंबाळूरु रामचन्द्रतीर्थाः | विवृतिः | कं०रा०— |
| ९ | श्री श्रीनिधितीर्थाः | टिप्पणी | श्रीनिधि०— |
| १० | श्री विद्याधीशतीर्थाः | वाक्यार्थचन्द्रिका | वा०चं०— |
| ११ | श्री पाण्डुरङ्गि केशवाचार्याः | शेषवाक्यार्थचन्द्रिका | शे०चं०— |
| १२ | श्री पाण्डुरङ्गि नरसिंहाचार्याः | वाक्यार्थरत्नमाला | वा०र०— |
| १३ | श्री सत्यव्रततीर्थाः | सुधाविवृतिः | स०व्र०— |
| १४ | श्री कुण्डलगिरिआचार्याः | रसकूलङ्कषः | कुण्डल०— |
| १५ | श्री सत्यनाथतीर्थाः | दुर्घटवाक्यार्थविचारः | स०ना०— |
| १६ | श्री विठ्ठलभट्टाः | टिप्पणी | विठ्ठ०— |
| १७ | श्री विष्णुतीर्थाः | रसरञ्जनी | रस०— |
| १८ | श्री अडवी कृष्णाचार्याः | लघुरसरञ्जनी | ल०र०— |
| १९ | श्री मन्नारी कृष्णाचार्याः | चषकः | चषकः— |
| २० | श्री एरी बाळाचार्याः | उपस्पर्शः | ए०बा०— |
| २१ | श्री काशी आचार्याः | काशी टिप्पणी | काशी०— |
| २२ | श्री गूढकर्तृकाचार्याः | गूढकर्तृका | गूढ०— |
| २३ | श्री प्रदीपकाराः | प्रदीपः | प्रदीपः— |
| २४ | श्री पांघ्री श्रीनिवासाचार्याः | टिप्पणी | पांघ्री०— |
| २५ | श्री कल्लापूर सत्याधिराजाचार्याः | हुग्गि | हुग्गि०— |



# टिप्पणीविषये स्पष्टीकरणम्

श्रीमज्जयतीर्थविरचितं महामेरुतुल्यं श्रीमन्न्यायसुधाग्रन्थमनेके व्याचख्युः। साम्प्रतमस्माभिः, उपलब्धाः श्रीमन्न्यायसुधाव्याख्याः सङ्गृह्यैकत्र मुद्रापयितव्याः इत्येकमात्रोद्देशेन अनेकव्याख्यासहिततया श्रीमन्न्यायसुधाग्रन्थः मुद्रापितः।

श्रीमद्विजयीन्द्रतीर्थश्रीपादानां श्रीमद्राघवेन्द्रतीर्थश्रीपादानां च सुधाव्याख्यानयोः इदानीं मुद्रापितायां यस्यां कस्याञ्चित् सुधाव्याख्यायां यस्मिन् कस्मिंश्चिद्विषये भिन्नाभिप्राये सति (विरुद्धाभिप्राये सति) सः तद्व्याख्यातॄणामभिप्राय एव। सः श्रीमद्विजयीन्द्रतीर्थश्रीपादानां वा परिमलकाराणां वा सम्पादकानां वा प्रकाशकानां वा सम्मत इति न मन्तव्यमिति एतन्मूलकतया स्पष्टीकुर्मः।

इत्थम्

**सम्पादकाः**



॥ श्रीमन्मूलरामो विजयते ॥

# प्रकाशकीयम्

द्वापरे श्रीगौतममहर्षिभिः शप्तेषु साधुजनेषु व्याकुलीभूतेषु श्रीब्रह्मरुद्रेन्द्रादिभिः प्रार्थितो भगवान्नारायणः श्रीवेदव्यासत्वेनावतीर्य राशीभूतान् वेदान् विभज्य, वेदार्थनिर्णायकानि चतुःषष्ट्यधिकपञ्चशत(५६४)ब्रह्मसूत्राणि व्यरचयत्।

एषां ब्रह्मसूत्राणां श्रीवाय्ववतारिणः सर्वज्ञाः श्रीमदानन्दतीर्थभगवत्पादाः भाष्यम्, श्रीमदनुव्याख्यानम्, न्यायविवरणम्, अणुभाष्यं चेति ग्रन्थचतुष्टयं विरचय्य महदुपाकुर्वन्।

श्रीमदाचार्याणां प्रियान्तेवासिनां श्रीत्रिविक्रमपण्डिताचार्याणां "व्यक्ततर्कततिं कुरु" इति प्रार्थनामनुरुध्य श्रीमदाचार्याः उपर्युक्तग्रन्थेष्वन्यतमं श्रीमदनुव्याख्यानग्रन्थं रचयामासुः।

अनुव्याख्यानस्यास्य इन्द्रांशसंभूताः श्रीमज्जयतीर्थश्रीमच्चरणाः श्रीमन्न्यायसुधानाम्नीं मेरुतुल्यामनुपमां टीकां व्यरचयन्।

ग्रन्थोऽयं चित्रपदपुञ्जमण्डितः, महागाम्भीर्यवान् महापण्डितवरेण्यानामपि महान्तं गर्वपर्वतं खण्डयितुं दक्षश्चकास्ति।

अस्यामोघस्य ग्रन्थस्य महत्त्वम् एतद्ग्रन्थस्य एतदीयानामनेकासां व्याख्यानां सङ्ख्यैव व्यञ्जयति।

| | **व्याख्यातारो महाभागाः** | **व्याख्यानस्य नाम** |
|---|---|---|
| १) | श्री श्रीपादराजतीर्थाः | वाग्वज्रम् |
| २) | श्री विजयीन्द्रतीर्थाः | न्यायसुधाबिन्दुः |
| ३) | श्री वादिराजतीर्थाः | गुर्वर्थदीपिका |
| ४) | श्री राघवेन्द्रतीर्थाः | परिमलः |
| ५) | श्री यदुपत्याचार्याः | टिप्पणी |
| ६) | श्री वंशपल्ली श्रीनिवासाचार्याः | वाक्यार्थविवृतिः |
| ७) | श्री गलगली नरसिंहाचार्याः | आनन्दः |
| ८) | श्री कंबालूरु रामचन्द्रतीर्थाः | विवृतिः |



| | | |
|---|---|---|
| ९) | श्री श्रीनिधितीर्थाः | टिप्पणी |
| १०) | श्री विद्याधीशतीर्थाः | वाक्यार्थचन्द्रिका |
| ११) | श्री पाण्डुरङ्गि नरसिंहाचार्याः | वाक्यार्थरत्नमाला |
| १२) | श्री पाण्डुरङ्गि केशवाचार्याः | शेषवाक्यार्थचन्द्रिका |
| १३) | श्री कुण्डलगिरि आचार्याः | रसकूलङ्कषः |
| १४) | श्री सत्यव्रततीर्थाः | सुधाविवृतिः |
| १५) | श्री सत्यनाथतीर्थाः | दुर्घटवाक्यार्थविचारः |
| १६) | श्री विठ्ठलभट्टाः | टिप्पणी |
| १७) | श्री कल्लापूर सत्याधिराजाचार्याः | हुग्गि |
| १८) | श्री विष्णुतीर्थाः | रसरञ्जनी |
| १९) | श्री अडवि कृष्णाचार्याः | लघुरसरञ्जनी |
| २०) | श्री मन्नारि कृष्णाचार्याः | चषकः |
| २१) | श्री एरी बाळाचार्याः | उपस्पर्शः |
| २२) | श्री काशी तिम्मणणाचार्याः | काशी टिप्पणी |
| २३) | श्री गूढकर्तृकटिप्पणीकाराः | टिप्पणी |
| २४) | श्री प्रदीपकाराः | प्रदीपः |
| २५) | श्री पांघ्री श्रीनिवासाचार्याः | टिप्पणी |
| २६) | श्री रोट्टि वेङ्कटभट्टाः | सुधाविवृतिः |
| २७) | श्री ताम्रपर्णी आचार्याः | टिप्पणी |
| २८) | श्री उमर्जी प्रह्लादकृष्णाचार्याः | उमर्जी |
| २९) | श्री व्यासतत्त्वज्ञतीर्थाः | कुलिशम् |
| ३०) | श्री महेश्वरसूरिः | टिप्पणी |
| ३१) | श्री पुट्ट तंबि आचार्याः | टिप्पणी |
| ३२) | श्री रत्नगर्भ ओडेयर् | टिप्पणी |
| ३३) | श्री अनन्तभट्टाः | टिप्पणी |
| ३४) | श्री सत्यनाथाचार्याः | टिप्पणी |
| ३५) | श्री जयवेङ्कटाचार्याः | टिप्पणी |
| ३६) | श्री गूढकर्तृकाचार्याः | सुधासारसङ्ग्रहः |
| ३७) | श्री गलगली गोविन्दाचार्याः | पञ्चरत्नस्तबकः |



| | | |
|---|---|---|
| ३८) | श्री श्रीमुष्णाचार्याः | पञ्चाधिकरणी |
| ३९) | श्री लिङ्गेरि श्रीनिवासाचार्याः | सिद्धान्तप्रभा |
| ४०) | श्री पाण्डुरङ्गि केशवाचार्याः | सुधावाक्यार्थविनोदः |
| ४१) | श्री उडुपि राघवेन्द्रतीर्थाः (पुत्तिगे मठः) | टिप्पणी |
| ४२) | श्री सत्यनाथाः | न्यायसुधापरशुः |
| ४३) | श्री सुमतीन्द्रतीर्थाः | भावरत्नकोशः |
| ४४) | श्री पाण्डुरङ्गि केशवाचार्याः | मञ्जरी |
| ४५) | श्री व्यासतत्त्वज्ञतीर्थाः | लघुरसरञ्जनी |
| ४६) | श्री व्यासतत्त्वज्ञतीर्थाः | गुरुरसरञ्जनी |
| ४७) | श्री भीमराव् कुलकर्णी कुम्बारगेरी | टिप्पणी |
| ४८) | श्री सत्यपराक्रमतीर्थाः | सुधाफक्किका |
| ४९) | श्री हुलिगि श्रीपत्याचार्याः | टिप्पणी |
| ५०) | श्री अहोबिलाचार्याः | टिप्पणी |
| ५१) | श्री सत्यप्रज्ञतीर्थाः | टिप्पणी |

एतादृशस्य अत्युत्तमग्रन्थस्य मुद्रणकार्यं श्रीमत्परमपूज्यानां प्रातःस्मरणीयानां श्रीमत्सुजयीन्द्रतीर्थ-श्रीमच्चरणानामादेशं सदिच्छां चानुरुध्य सम्प्रति श्रीराघवेन्द्रस्वामिमठीयपीठाधीश्वराः पूज्याः श्री १००८ श्रीमत्सुशमीन्द्रतीर्थश्रीपादाः कारयन्तीति अस्माकं परमं प्रमोदस्थानम् ।

अस्य ग्रन्थस्य संशोधनकार्ये अस्मद्विद्यापीठीयप्राच्यग्रन्थालयस्थाः अधोनिर्दिष्टाः टिप्पण्यः हस्तप्रति-कृतयोऽपि उपयोजिता इति निवेदयितुं नितान्तं तुष्यामः ।

ग्रन्थस्यास्य प्रकाशनार्थं श्रीसुधाव्याख्यानं विठ्ठलभट्टीयं हस्तलिखितं अनुगृहीतवद्भ्यः परमपूज्येभ्यः श्रीउत्तरादिमठाधीश्वरेभ्यः सभक्ति प्रणामगणं समर्पयामः । संशोधनादिकार्येष्वनुकूलयितुं श्रीसुधाव्याख्यानं श्रीनिधितीर्थीयं तालपत्रस्थं अनुगृहीतवद्भ्यः परमपूज्येभ्यः श्रीपुत्तिगेमठाधीश्वरेभ्यः सभक्ति प्रणामगणं समर्पयामः । एवमेव मुद्रणकार्येऽस्मिन् साक्षाद्वा परोक्षे वा सहकृतवद्भ्यः परमपूज्येभ्यः श्रीमठाधीश्वरेभ्यः सर्वेभ्यः सभक्तिप्रणामगणं कार्तज्ञ्यमाविष्कुर्मः । श्रीनिधितीर्थीयं व्याख्यानं तालपत्रस्थं तौलवलिपिगतं देवनागरिलिपिगतं कृतवतः विद्वान् श्री साणूरु भीमभट्टतनूजः श्री कृष्णमूर्ति महाशयान् सन्दर्भेऽस्मिन् सप्रश्रयं स्मरामः ।

ग्रन्थस्यास्य प्रधानसम्पादकेभ्यः विद्वद्भ्यः वैकुण्ठवासिभ्यः श्री आचार्य साणूरु भीमभट्टमहाशयेभ्यः तथा एतद्ग्रन्थसम्पादकेभ्यः विद्वद्भ्यः श्री कडप राघवेन्द्राचार्येभ्यः, विद्वद्भ्यः श्री पुराणिक सुब्रह्मण्याचार्येभ्यः, तथा



विद्वद्भ्यः आहिताग्नि श्री वरखेडकर भीमसेनाचार्येभ्यः, एवं विठ्ठलभट्टीयां टिप्पणीं तथा एरी बाळाचार्याणां टिप्पणीं दत्तवद्भ्यः विद्वद्भ्यः श्री व्यासनकेरे प्रभञ्जनाचार्येभ्यः, तथा पांग्री श्रीनिवासाचार्याणां टिप्पणीं दत्तवद्भ्यः विद्वद्भ्यः श्री पांग्री लक्ष्मणाचार्येभ्यः, तथा वाक्यार्थरत्नमालाख्यां टिप्पणीं, सत्यनाथतीर्थीयां टिप्पणीं, हुग्गिनामकटिप्पणीं च दत्वा उपकृतवद्भ्यः पंढरपुरीय पूर्णप्रज्ञमतोन्नाहिनीपाठशालाप्रांशुपालेभ्यः विद्वद्भ्यः श्री वरखेडकर भीमसेनाचार्येभ्यः, तथा वाक्यार्थरत्नमालाटिप्पण्याः प्रतिकृत्यन्तरं दत्तवद्भ्यः विद्वद्भ्यः श्री के. टि. पाण्डुरङ्गि महाशयेभ्यः एवमेव प्रदीपटिप्पणीं दत्तवद्भ्यः मद्रपुरसर्वकारीयग्रन्थालयव्यवस्थापकेभ्यः श्रीमद्भ्यः, श्रीमन्न्यायसुधाबिन्दुनाम्नीं टिप्पणीं दत्तवद्भ्यः श्रीमद्भ्यः केरलराज्यीय तिरुवाङ्कूरु ग्रन्थभाण्डारव्यवस्थापकेभ्यः, तथा रसरञ्जनी-लघुरसरञ्जनी इति व्याख्यानद्वयं दत्तवद्भ्यः विद्वद्भ्यः श्री गंगूरु हनुमेशाचार्येभ्यः, एवं ग्रन्थस्यास्य प्रतिकृति-संशोधने श्रीमद्भिः सम्पादकैः सहकृतवद्भ्यः विद्वद्भ्यः श्री कुर्डि सुशीलेन्द्राचार्येभ्यः, विद्वद्भ्यः श्री कडप राघवेन्द्राचार्येभ्यः, विद्वद्भ्यः श्री पुराणिक सुब्रह्मण्याचार्येभ्यः, विद्वद्भ्यः श्री एन् राघवेन्द्राचार्येभ्यः, विद्वद्भ्यः श्री वरखेडकर भीमसेनाचार्येभ्यः, विद्वद्भ्यः श्री गंगूरु हनुमेशाचार्येभ्यः, विद्वद्भ्यः श्री के. वेङ्कटेशाचार्येभ्यः, विद्वद्भ्यः श्री ओडेयर् कनकाचलाचार्येभ्यः, विद्वद्भ्यः श्री पु. वंशी कृष्णाचार्येभ्यः, विद्वद्भ्यः श्री उंडारु पांडुरंग श्रीनिवासमूर्ती आचार्येभ्यः, एवं विशेषतः अल्पीयस्येव काले महता परिश्रमेण सश्रद्धं ग्रन्थानां प्रतिकृतिसंशोधने श्रीमद्भिः सम्पादकैः सहकृतवद्भ्यः तथा सर्वाङ्गसौन्दर्येण मुद्राप्य दत्तवद्भ्यः 'सुधा मुद्रण'नेतृभ्यः विद्वद्भ्यः श्री वरखेडकर धनंजयाचार्येभ्यः, तथा ग्रन्थस्यास्य अध्ययनाध्यापनादिकर्तृभ्यः सर्वेभ्यः श्रीभगवान् सीताजानिः श्रीमूल-रघुपतिवेदव्यासः आयुरारोग्यैश्वर्यादीनि चानुगृह्य संरक्षत्विति अनन्यया भक्त्या सम्प्रार्थयामहे।

अत्र मुद्रापितासु टिप्पणीषु काश्चन टिप्पण्यः प्राचीनहस्तप्रतिरूपेण शिथिलाः मध्ये मध्ये त्रुटिताः कदाचिदसमग्रा अपि तेनैव रूपेण पण्डितैः संशोध्य मुद्रापिताः। अत्र प्रकाशितभागे यदि कुत्रचित् स्खलितानि प्राज्ञैर्विद्वद्भिः विलोकितानि चेत् ते अस्मान्प्रति संसूचयेयुः। तेन वयं शुद्धिपत्रिकायाम् अग्रिमसम्पुटेषु वा तत्सर्वं समीकृत्य विदुषां पुरः उपस्थापयितुं शक्ष्यामः। येषां समीपे अस्माभिरमुद्रितटिप्पण्यः उपलभ्यन्ते ते कृपया तान् ग्रन्थान् अस्मभ्यं प्रेषयन्ति चेत् तत्सर्वमागामिसम्पुटेषु वयं सम्यक् संशोध्य मुद्रापयितुं महता सन्तोषेण स्वीकुर्मः।

इत्थम्।

भवदीयम्

**श्रीगुरुसार्वभौमसंस्कृतविद्यापीठम्,**

श्रीराघवेन्द्रस्वामिमठः, मन्त्रालयः





॥ श्रीमन्मूलरामो विजयते ॥

# प्रस्तावना

**यत्पदं वेदसंवेद्यं कटाक्षेणापि वीक्षितुम् ।**
**न क्षमन्ते विमतयः तमुपासे श्रियःपतिम् ॥**

भूर्भुवस्स्वरादिचतुर्दशभुवनात्मकसङ्ख्यातिगब्रह्माण्डकोटीः रोमकूपे सन्निवेश्य सकललोकजनन्या श्रिया सह सर्पतल्पे शयानेन भगवता सृष्टेषु भूलोकखण्डेष्वन्यतमेऽस्मिन् भरतखण्डे जनिमतामस्माकं महद्भागधेयमिदं यदत्र भगवान् तत्तद्युगेष्ववतीर्य बलकार्यं ज्ञानकार्यं च सम्पाद्य स्वभक्तानन्वग्रहीत् । तत्रापीदमतिशयितं वक्तव्येष्वाद्यं वचनं यदत्र तद्भक्ताग्रणीः पावनः पवमानः अनेकधाऽवतीर्य तत्रापि तृतीयेऽवतारे श्रीमध्वनाम्नाऽत्र प्रकटीभूय सज्जनानुददीधरत् । तदीयभक्तानुग्रहकार्येषु आचन्द्रार्कं दीप्यमानानि बहूनि कार्याणि यद्यपि वक्तव्यानि सन्ति तथाऽपि समस्तशास्त्रार्थसारभूतानां श्रीबादरायणसंज्ञकेन श्रीवेदव्यासमहर्षिणा निर्मितानां ब्रह्मसूत्राणां भाष्य-अणुभाष्य-अनुभाष्य-न्यायविवरण-ग्रन्थानां निर्माणमतितरां सर्वैरपि अध्यात्मविचाररसिकैः विचारविमर्शकैः प्रशंसनीयं सर्वदा स्मरणीयं कार्यमिति निश्चप्रचं दृढतरं वयं वक्तुं शक्नुमः ।

तत्र च सूत्रसंबन्धिग्रन्थचतुष्टये ब्रह्मसूत्र-अनुव्याख्यान-ग्रन्थराजः नभसि नक्षत्रपुञ्जमध्ये चन्द्रमा इव चकास्ति । तस्यास्य ग्रन्थराजस्य इन्द्रावतारभूतैः प्रातःस्मरणीयैः परमपूज्यश्रीजयतीर्थमस्करिवरैः रचितम् अनुव्याख्यानव्याख्यानं न्यायसुधानामकं नैकाभिष्टिप्पणीभिः समलंकृतं श्रीराघवेन्द्रतीर्थगुरुवर्याणां प्रेरणया अनुग्रहेण च इदानीं सम्प्रकाश्य हरिगुरुभक्तानां करकमलयोः समर्पयितुं मोमुद्यते अस्माकं चेतः ।

उपनिषत्प्रस्थान-गीताप्रस्थान-सूत्रप्रस्थाननामकप्रस्थानत्रये सूत्रप्रस्थानमेव अन्तिमं निर्णायकं समस्तैः शिरसा धारणीयं च भवति । किं बहुना समस्तेषु वेदेषु समस्तेषु पुराणेष्वन्यत्राप्यभ्यर्हणीयवैदिकवाङ्मयेषु च उक्तानामर्थानां निर्णयाय सूत्राण्येव अस्माकमवलम्बभूतानि महार्णवे तरतामाधारभूतनौकास्थानीयानि । तेषां सूत्राणां व्याख्यानभूतानुव्याख्यानस्य व्याख्यानरूपा इयं सुधा देवलोकीयसुधातोऽप्यभ्यर्हिततमा जन्ममृत्यु-जरादिकं सर्वमपहृत्य स्वरूपानन्दाविर्भावरूपं मोक्षं दापयितुं समर्था । अस्य ग्रन्थस्य प्रशंसा कथं कार्या, कियती कार्या इत्यादिविषयाः आलोच्यमानाः अस्माकं जिह्वां पुरःसर्तुमेव न मुञ्चन्ति । यतो हि ग्रन्थकाराः श्रीमज्जयतीर्थश्रीमच्चरणाः पूर्वाश्रमे नाममात्रेण गृहस्थाश्रमप्रवेशं लब्ध्वा केनापि अनालोचनीयेन केवलं भगवता क्लृप्तेन घटनाविशेषेण संसारमिमं तुच्छीकृत्य स्वीये तरुणे वयसि संन्यासाश्रमं प्रविश्य स्वगुरूणां विद्यारण्यारण्यछेदकानां श्रीमदक्षोभ्यतीर्थगुरुवर्याणां सविधे शुकवत् शिक्षिता भूत्वा स्वीयया अलौकिकप्रज्ञया आचार्याणां अनेकग्रन्थानां टीकाः विरचय्य प्रायः अन्ते इमां न्यायसुधां भक्तेभ्यः नाकीन्द्रः सुधां इव प्रादुः । अस्य ग्रन्थस्य माहात्म्यं शेषोऽपि वर्णयितुं नालम् । बाल्यादारभ्य यौवनपर्यन्तं प्रायः संस्कृतभाषायाः वेदादिशास्त्राणां च परिचयहीना अपि केवलं



गुर्वनुग्रहेण शास्त्राण्यभ्यस्य अनन्तरं किञ्चित्समयपर्यन्तं सरस्वतीं संसेव्य तदनुग्रहेण घण्टां (लेखनीं) पूगं च लब्ध्वा लेखनकार्यं प्रारभन्त जयतीर्थश्रीमच्चरणाः। तत्रापि गुहाया अन्तरुपविश्य पञ्चषशिष्यान् पाठयन्तः स्वयमेव वाणीकृपया लब्धया लेखन्या आचार्याणां ग्रन्थान् व्याख्यान्तः, अनन्तरं तदुपरि पूगेन सम्मार्जनमात्रेण तत्सर्वं त्रुटिलेशरहितं भगवत्कृपया आविर्भावयन्तः ते लोके टीकाचार्याः इत्येव निरुपपदगौरवनाम्ना प्रथिताः बभूवुः।

महानुभावाः जयतीर्थश्रीमच्चरणाः मठीयवैभवादीन् हित्वा शिष्यैः भिक्षया आनीतेन यावनालान्नेन (भक्करि) जीवनं निरवहन्।

महानुभावाः जयतीर्थश्रीमच्चरणाः गुरुभक्तिविषये अन्यादृशम् आदर्शम् अस्माकं पुरतः उपस्थापयामासुः। तद्यथा—

**न शब्दाब्धौ गाढा न च निगमचर्चासु चतुरा**
**न च न्याये प्रौढा न च विदितवेद्या अपि वयम्।**
**परं श्रीमत्पूर्णप्रमतिगुरुकारुण्यसरणिं**
**प्रपन्ना मान्याः स्मः किमपि च वदन्तोऽपि महताम्॥**

अनेन श्लोकेन प्रदर्शितः विनयः अनन्यसाधारणः लोकातिशायी सहृदयान् जिज्ञासून् रोमाञ्चयति। एतदपेक्षया अधिकः गुरुप्रवणः गुरोः दासानुदासः लोके यत्र कुत्रापि नोपलभ्येत इत्येवं सर्वैः सर्वथा अनुभूयते एव।

अल्पीयसा अनेहसा स्वकीयप्रखरबुद्धिवैभवेन निर्मितस्य अस्य सुधाग्रन्थस्य वैशिष्ट्यं वर्णयितुं सहस्रवदनः शेषोऽपि नालम्, किमुत अल्पप्रज्ञाः तृणकल्पाः वयम्। एतदीयग्रन्थस्य माहात्म्यं संवर्णयन् कविरेकः एवमुद्गिरति स्म। यथा—

**आमूलाग्रनिबद्धतर्कजटिलं शब्दैकजीवातुकं**
**मीमांसानुनयं च शङ्करवचो हुङ्कारभङ्गप्रदम्।**
**शास्त्रं तन्त्रचतुष्टयात्मकमिदं निस्स्वप्रतन्त्रान्तराः**
**व्याख्यास्यन्ति पठन्ति वा कथमहो किं वा कलौ दुर्घटम्॥**

'अध्यात्मविद्या विद्यानाम्' इति श्रीकृष्णोक्त्यनुसारेण अद्वितीयाध्यात्मविद्याख्य-सूत्रव्याख्यानरूपा इयं न्यायसुधा नैकाभिष्टिप्पणीभिः सह संयोज्य, संशोध्य, संमुद्र्य अत्र प्रकाशं नीयते। महदिदं साहसकार्यं महापुरुषोत्तमस्य श्रीहरेः अविच्छिन्नभक्ताग्रेसर-श्रीमन्मुख्यप्राणावताराणां श्रीमदानन्दतीर्थभगवत्पादानां परमानुग्रहेणैव सम्पन्नः प्रह्लादावतारभूतानां श्रीमद्राघवेन्द्रतीर्थगुरुसार्वभौमानाम् आराधनसमये तत्करकमलाभ्यामेव श्रीमन्मूलरामचन्द्रदेवस्य पादकमलयोः तद्भक्तवृन्देन सप्रश्रयं सभक्ति समर्प्यतेतमाम्। श्रीकृष्णार्पणमस्तु॥

*आचार्याः साणूरु भीमभट्टाः*
प्रधानसम्पादकाः





॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

श्रीमज्जयतीर्थयतिकृता

# श्रीमन्न्यायसुधा

## संपुटम् – १२

### विषयानुक्रमणिका







***







***







(उर्वरितभागः अग्रिमसम्पुटे)

* * *



## ॥ न विलक्षणत्वाधिकरणम् ॥

(अनुवर्तते)

॥ अथ प्रत्यक्षविभागः ॥
॥ अथ प्रत्यक्षद्वैविध्यम् ॥

१३० सु०— यदक्षविशेषणं निर्दोषत्वमुक्तं तद्व्यवच्छेद्यं दर्शयितुमक्षभेदं तावदाह **प्राकृतमिति** ।

### अनु०— प्राकृतं शुद्धचैतन्यमक्षं तु द्विविधं मतम् ।

**प्रकृतिशब्देनाहङ्कारः पञ्चभूतानि चोच्यन्ते । सूक्ष्मरूपेण नित्यमप्यहङ्कारभूतांशैरुपचितत्वात्प्राकृतम् । शुद्धम् इत्यस्यैव विवरणं चैतन्यमिति । चेतिशब्दावध्याहार्यौ । तुशब्देन अचैतन्यमेवेन्द्रियं, तच्च आहङ्कारिकमेवेति वदतां साङ्ख्यादीनां, भौतिकमेवेति भाषमाणानां वैशेषिकादीनां, द्रव्येन्द्रियभा(व्ये)वेन्द्रियभेदाद् द्विविधमिति जल्पतां जैनानां च मतं व्यवच्छिनत्ति । मतम् इति स्वोक्तार्थस्य प्रमितत्वमाह ।**

**परि०**— 'तैजसात्तु विकुर्वाणादिन्द्रियाणि दशाभवन्' इति द्वितीयस्कन्धे तैजसाहङ्कारकार्यत्वस्य, 'नित्यान्येतानि सौक्ष्म्येण हीन्द्रियाणि तु सर्वशः । तेषां भूतैरुपचयः सृष्टिकाले विधीयते' इति भाष्योक्तस्मृत्या भूतकार्यत्वस्य चेन्द्रियाणामवगतेः तदनुरोधेनाह **प्रकृतिशब्देनेति** । प्रकृतिकार्यत्वात् प्रकृतिशब्देनाहङ्कारादेर्ग्रहणमिति भावः । **अहङ्कारभूतांशैः** अहङ्कारस्य भूतानां चांशैरित्यर्थः । **चेतिशब्दाविति** । शुद्धं चैतन्यं चेतीत्यन्वयः तयोरिति भावः । **द्रव्येन्द्रियेति** । त्वक्चक्षुर्मनश्चेति त्रयं द्रव्येन्द्रियम् । भावशब्दितधर्मभूतगन्धरसशब्दादिग्राहकेन्द्रियं भावेन्द्रियं तद्भेदादित्यर्थः ।

**यादु०**— नन्विन्द्रियाणां तैजसाहङ्कारपञ्चभूतकार्यत्वेन प्रकृतिकार्यत्वस्याभावात् कथं प्राकृतमिति निर्देश इत्यत आह **प्रकृतिशब्देनेति** । नन्विन्द्रियाणां सूक्ष्मरूपेण नित्यत्वात् कथमहङ्कारकार्यताऽपीत्यत आह **सूक्ष्मरूपेणेति** । **द्रव्येन्द्रियभावेन्द्रियेति** । द्रव्यग्राहकमिन्द्रियं त्वक्चक्षुर्मनांसि । भावो गन्धरसशब्दादिधर्मः । तद्ग्राहकाणि घ्राणरसनश्रोत्राणि भावेन्द्रियाण्येतेषां द्रव्यग्राहकत्वाभावाद्भावेन्द्रियत्वमिति ध्येयम् ।





**वं०प०**— इन्द्रियाणां साक्षात्प्रकृतिकार्यत्वरूपप्राकृतत्वाभावादाह **प्रकृतिशब्देनेति** । द्रव्येन्द्रियं नाम धर्मिधर्मोभयग्राहकमिन्द्रियं चक्षुस्त्वगिन्द्रियं चेति द्वयम् । धर्ममात्रग्राहकमिन्द्रियं भावेन्द्रियं, तच्च श्रोत्रादित्रयम् ।

**कं०रा०**— नन्वहङ्कारभूतां द्वौरुपचरितस्येन्द्रियस्य साक्षात्प्रकृतिकार्यत्वाभावात्कथं प्राकृतत्वमित्यत आह **प्रकृतिशब्देनेति** । ननु प्रकृतिशब्देनाहङ्कारभूतविवक्षायामपि नित्यस्येन्द्रियस्य तत्कार्यत्वाभावात् प्राकृतत्वानुपपत्तिरेवेत्यत आह **सूक्ष्मरूपेणेति** । **चेतिशब्दाविति** । तथा च प्राकृतं शुद्धमिति चाक्षं द्विविधमित्यन्वय इति भावः ।

**श्रीनिधि०**— **द्रव्येन्द्रियभावेन्द्रियेति** । द्रव्यग्राहकमिन्द्रियं द्रव्येन्द्रियम् । भावः धर्मः । तन्मात्रग्राहकमिन्द्रियं भावेन्द्रियम् । घ्राणश्रोत्रादिकम् ।

**शे०वा०**— ननु प्राकृतमित्यादिमूलमनर्थकम् । न च लक्षितस्य प्रत्यक्षस्य विभागपरं तदिति वाच्यम् । प्राकृतमित्यादेर्लक्षितप्रत्यक्षविभागपरत्वासम्भवात् । न च अक्षभेदकथनपरं तदिति वाच्यम् । प्रत्यक्षलक्षणकथनानन्तरं तद्विभागकथनस्यैव सङ्गतत्वेनाक्षमात्रविभागकथनस्य प्रकृतासङ्गतत्वादित्यत आह **यदक्षविशेषणमिति** । तद्व्यवच्छेद्यमित्युपलक्षणम् । तत्सङ्ग्राह्यं चेत्यपि द्रष्टव्यम् । **दर्शयितुमिति** । निर्दोषमेव चैतन्यमित्यादिनेति शेषः । निर्दोषत्वसदोषत्वविभागस्याप्युत्तरत्र वक्ष्यमाणत्वात् तावच्छब्दः । नन्वत्र प्रकृतिशब्दस्तदर्थतया प्रसिद्धाव्यक्तपरो वा, 'अव्यक्ताद्याः पृथिव्यन्ताः सर्वाः प्रकृतयः स्मृताः' इति प्रमाणसिद्धाव्यक्तादिपरो वा न सम्भवति । इन्द्रियाणां तैजसाहङ्कारपञ्चमहाभूतमात्रकार्यत्वेनाव्यक्तकार्यत्वस्य वाऽव्यक्तादिसर्वकार्यत्वस्य वाऽभावात् तत्कथं प्राकृतत्वमित्यत आह **प्रकृतिशब्देनेति** । **अहङ्कार इति** । वैकारिकस्तैजसश्चेत्येवं द्विरूप इत्यर्थः । नन्विन्द्रियाणां 'नित्यान्येतानि सौक्ष्म्येण हीन्द्रियाणि तु सर्वशः' इति प्रमाणेनानादिनित्यत्वाभिधानान्नाहङ्कारादिकार्यत्वमपि तेषां सम्भवति । तथा सत्युदाहृतप्रमाणविरोधापातादित्यतः स्यादेतदेवं यदि सर्वथा नित्यत्वं प्रमाणार्थः स्यात् । न चैतदस्ति । तथा सति सौक्ष्म्येणेति विशेषणवैयर्थ्यापातात् । किन्तु सूक्ष्मरूपेणैव नित्यत्वं तदर्थः । तथा च सूक्ष्मरूपस्यानादिनित्यत्वेनाप्रकृतत्वेऽपि स्थूलरूपस्याहङ्कारांशैरुपचितत्वेन युक्तं तत्कार्यत्वमित्याशयेनाह **सूक्ष्मरूपेणेति** । शुद्धमित्येतावतैव पूर्तेः किं चैतन्यग्रहणेनेत्यत आह **शुद्धमित्यस्यैवेति** । यत्प्राकृतं शुद्धचैतन्यमक्षं तद् द्विविधमिति योजनायां रूपान्तरेणैव द्वैविध्यप्रसक्तेः प्राकृतं शुद्धचैतन्यं चेति चशब्दाध्याहारे च प्राकृतमक्षं द्विविधं शुद्धचैतन्यमक्षं च द्विविधमिति प्रत्येकं रूपान्तरेण द्वैविध्यप्रसक्तेः प्राकृतत्वशुद्धत्वयोर्विधात्वालाभात् तयोरेव विधात्वसिद्ध्यर्थमपेक्षितमध्याहरति **चेतिशब्दाविति** । **आहङ्कारिकमेवेति वदतामिति** । 'अभिमानोऽहङ्कारस्तस्माद्विविधः प्रवर्तते सर्गः । एकादशश्च गणकस्तन्मात्रपञ्चकश्चैवे'ति तत्कारिकायामेवशब्देन भूतकारणताया निषेधात् केवलाहङ्कारिकत्वसिद्धेरिति भावः । **भौतिकमेवेति भाषमाणानामिति** । 'जलाद्यनभिभूतैः पार्थिवावयवैरारब्धं घ्राणम् । विजातीयावयवानभिभूतैर्जलावयवैरारब्धं रसनम् । अन्यावयवानभिभूतैस्तेजोऽवयवैरारब्धं चक्षुः ।





पृथिव्याद्यवयवानभिभूतैर्वाय्ववयवैरारब्धं त्वगिन्द्रियमि'ति प्रशस्तपादोक्तेरिति भावः । **द्रव्येन्द्रियेति** । द्रव्यग्राहकमिन्द्रियं द्रव्येन्द्रियम् । भावो गन्धादिस्तद्ग्राहकमिन्द्रियं भावेन्द्रियमित्यर्थः । तत्र चक्षुस्त्वङ्मनसां द्रव्यग्राहकत्वात् द्रव्येन्द्रियत्वं घ्राणादीनां तु द्रव्यग्राहकत्वाभावात् तेषां भावेन्द्रियत्वमिति विवेकः । घ्राणादीनां पृथिव्यादिद्रव्यविकारत्वात् द्रव्येन्द्रियत्वं मनसस्त्वतद्विकारत्वान्न द्रव्येन्द्रियत्वमिति मन एव भावेन्द्रियमित्यप्याहुः । मूले मतमित्यस्य वैयर्थ्यमाशङ्क्य कुतः केवलाहङ्कारिकत्वादिपरित्यागेनोक्तरूपेण द्वैविध्याश्रयणमित्यतः प्रामाणिकत्वाप्रामाणिकत्वाभ्यां विशेषाद्युक्तमप्रामाणिकपरित्यागेन प्रामाणिकद्वैविध्याश्रयणमित्यर्थप्रतिपादनार्थत्वान्न तदिति भावेनाह **मतमितीति** । **स्वोक्तार्थस्येति** । प्राकृतत्वादिनाऽक्षद्वैविध्यादिरूपस्य इत्यर्थः ।

**वा०र०**— रूपस्पर्शयोः उभयोः प्रत्यक्षत्वप्रयोजकत्वं इत्येतत् वैशेषिकाधिकरणीयटीकादौ व्यक्तम् । तत् किं लक्षितप्रत्यक्षलक्षणकथनार्थं उताक्षविभागकथनार्थमिति विकल्पान् मनसि निधायाद्यं निराकर्तुं आशङ्कते **न च लक्षितेति** । द्वितीयं निराकर्तुमाशङ्कते **न चाक्षेति** । **विभागपरत्वासम्भवादिति** । प्रकृतचैतन्ययोः अयथार्थयोरपि सत्त्वेन तयोः निर्दोषाक्षोद्भवत्वरूपलक्षणाभावादिति । **अव्यक्तपर इति** । न सम्भवतीति वक्ष्यमाणेनान्वयः । **अव्यक्तादीति** । आदिना महदहङ्कारमनोबुद्ध्यादिसङ्ग्रहः । **अव्यक्तादिसर्वेति** । अत्रापि आदिपदेन महदहङ्कारमनादेः ग्रहणम् । **वैकारिकतैजसश्चेत्येवं द्विरूप इति** । उपलक्षणं चैतत् । तामसाश्चेति ज्ञेयम् । ततश्च त्रिरूपो ग्राह्य इति तादर्थ्यं प्राणादीनां तैजसत्व इत्याद्यागमेनेव 'वैकारिकात् विकुर्वाणात् मनस्तत्त्वमजायत' इत्युदाहरिष्यमाणागमानुसारेण मनसो वैकारिकाहङ्कारकार्यत्वस्यैव च तामसलक्षणोक्तिः । तदतिरिक्तेष्वपि श्रोत्रविवक्षया तामसोऽपि ग्राह्यः इति मत्वा श्रोत्रव्यतिरिक्तघ्राणादिचतुष्टयादि च कुर्वाणात् भागात् वीर्यचोदितात् इत्युदाहरिष्यमाणागमानुसारेण श्रोत्रस्य तामसाहङ्कारकार्यतायाः अपि प्राप्तत्वेन त्रिरूपाहङ्कारस्यापि ग्राह्यत्वादिति प्रतिभाति । वैकारिकाहङ्कारस्य मनोविवक्षानुसारेण तैजसस्योक्तिः इति विवेकः । मनोव्यतिरिक्तेन्द्रियाणामिति पूर्वटीकास्थसाङ्कर्येण तैजसत्वोक्तिरपि प्रायिकत्वाभिप्रायेण योज्येति द्रष्टव्यम् । कुतः । **केवलाहङ्कारिकत्वादीति** । यद्यपि द्वैविध्या प्रतिद्वन्द्वितया सर्वस्यापि इन्द्रियस्याचेतनत्वेन ऐक्यमेव उदाहर्तुं युक्तं तथापि केवलाहङ्कारिकत्वादिलक्षणां अचेतनत्वपक्षविशेषतयोपन्यासेन तत्रैव पर्यवसानात् युक्तं द्वैविध्यप्रतिद्वन्द्वितयोपन्यसनमिति ज्ञेयम् ।

**स०व्र०**— अव्यक्तादीनां प्रकृतिशब्दार्थत्वे तावत्कार्यस्याप्यभावात् कथं प्राकृतत्वम् इत्यत आह **प्रकृतिशब्देनेति** । यद्वा प्रकृतिशब्दस्य अव्यक्तमात्रपरत्वे तत्कार्यत्वाभावात् 'अव्यक्ताद्याः पृथिव्यन्तास्सर्वाः प्रकृतयस्स्मृताः' इति प्रमाणानुसारेण पृथिव्यन्तानाम् अव्यक्तादीनां प्रकृतिशब्दार्थत्वे तावत्कार्यत्वस्यानुपपन्नत्वात् अत आह **प्रकृतिशब्देनेति** । ननु इन्द्रियाणां नित्यत्वात् कथं प्राकृतत्वमित्यत आह **सूक्ष्मरूपेणेति** । **द्रव्येन्द्रियभावेन्द्रियभेदादिति** । द्रव्यशब्दो धर्मिपरः । भावशब्दो धर्मपरः । तथा च धर्मिग्राहकं धर्मग्राहकं





चेत्येवमिन्द्रियं द्विविधमित्यर्थः । यद्वा घ्राणादीनां पृथिव्यादिद्रव्यविकारत्वात् तद्विकारभूतमिन्द्रियं द्रव्येन्द्रियं, भावेन्द्रियशब्देन च मनो ग्राह्यमित्यर्थः ।

**विठ्ठल०**— निर्दोषमेव चैतन्यविवक्षमाणत्वात् पुनरुक्तिपरिहारायाह **शुद्धेत्यस्येति** । **द्रव्येन्द्रियभावीन्द्रियेति** । द्रव्यग्राहकमिन्द्रियं त्वक्चक्षुमनांसि भावो गन्धरसशब्दादिधर्मः तद्ग्राहकानि घ्राणरसनश्रोत्राणि । एवं द्रव्येन्द्रियभावेन्द्रियभेदाद्विविधमिन्द्रियमित्यर्थः ।

**चषकः**— **द्रव्येन्द्रियेत्यादि** । द्रव्यग्राहकमिन्द्रियम् । गन्धरसशब्दादिधर्मग्राहकमिन्द्रियं भावेन्द्रियम् ।

**॥ इति प्रत्यक्षद्वैविध्यम् ॥**

* * *

**॥ अथ प्रत्यक्षद्वैविध्यस्य विवरणम् ॥**

१३१ **सु०— तत्र जडचैतन्यभेदमनुपदमेवोपपादयिष्यति । जडस्य च नित्याहङ्कारिकभौतिकत्वं 'सूक्ष्मेन्द्रियाणि सन्त्येव स्युः स्थूलान्यप्यहंकृतेः । तेषां भूतैरुपचयः सृष्टिकाले विधीयते' इत्यादिस्मृतिसिद्धम् । न च केवलाहङ्कारिकत्वे भौतिकत्वे वा प्रमाणमस्ति, कपिलादीनामाप्तत्वासिद्धेः । घ्राणं पार्थिवं रसाव्यञ्जकत्वे सति गन्धव्यञ्जकत्वात् कुंकुमगन्धाभिव्यञ्जकघृतवत्, रसनमाप्यं रूपाव्यञ्जकत्वे सति रसव्यञ्जकत्वात् लालावत्, चक्षुस्तैजसं स्पर्शाव्यञ्जकत्वे सति रूपव्यञ्जकत्वात् प्रदीपवत्, स्पर्शनं वायवीयं शब्दाव्यञ्जकत्वे सति स्पर्शव्यञ्जकत्वात् व्यजनवातवदिति ।**

**परि०**— कथं प्रमिततेत्यत आह **तत्रेति** । **अनुपदमिति** । शुद्धमित्यर्धेनेति भावः । **नित्येति** । नित्यत्वमाहङ्कारिकत्वं भौतिकत्वं चेत्यर्थः । सूक्ष्मेत्येकं वाक्यम् । तेषामित्यादित्वपरम् । अहङ्कृतेः सकाशात् स्थूलानीत्यर्थः । कपिलकाणादाद्युक्तिरेव मानमित्यत आह **कपिलादीनामिति** । वैशेषिकोक्तानुमानान्येव मानं भौतिकत्व इत्यतस्तान्यनूद्य निराह **घ्राणमित्यादिना** । मनस्यव्यभिचाराय सर्वत्र सत्यन्तोक्तिः । **लालावदिति** । दन्तान्तर्गतं जलं लाला तद्वदित्यर्थः ।

**गु०दी०**— **रसाव्यञ्जकत्वे सति गन्धव्यञ्जकत्वात्** इत्यत्र रसाव्यञ्जकत्वविशेषणमदृष्टादौ व्यभिचारपरिहारार्थम् ।





**यादु०— अनुपदमेवेति** । 'शुद्धमीशरमामुक्तेष्वि'त्यत्रेत्यर्थः । **नित्येति** । त्वप्रत्ययस्य प्रत्येकं सम्बन्धः । तथा च नित्यत्वमाहङ्कारिकत्वं भौतिकत्वमित्यर्थः । आहङ्कारिकत्वभौतिकत्वयोः स्वमतेऽपि सत्त्वात् **केवलेति** । केवलभौतिकत्वे वैशेषिकोक्तमनुमानचतुष्टयं दूषयितुमनुवदति **घ्राणमित्यादिना** । अत्र हेतु-चतुष्टयेऽपि मनसि व्यभिचारवारणाय सत्यन्तमिति ज्ञातव्यम् ।

**वं०प०— अनुपदं** 'शुद्धमीशरमे'त्यादिना । **नित्येत्यादि** । नित्यत्वादिकमित्यर्थः । सन्त्येवेत्यन्तेन नित्यत्वम्, उर्वरितेनाहङ्कारिकत्वादिकमुक्तमिति ज्ञेयम् । कापिलाद्यागम एवाहङ्कारिकत्वादौ मानमित्यत आह **कपिलेति** । तार्किकः इन्द्रियाणां भौतिकतां साधयति **घ्राणमित्यादिना** । श्रोत्रस्याकाशात्मकत्वमुभयसिद्धमिति तन्न साधितम् । भूताकाशमेवास्मन्मते श्रोत्रमिति ज्ञेयम् ।

**कं०रा०**— ननु जडेन्द्रियस्य सूक्ष्मरूपेण नित्यत्वमाहङ्कारिकत्वं भौतिकत्वं च कुतः सिद्धमित्यत आह **जडस्य चेति** । नन्विन्द्रियस्य केवलाहङ्कारिकत्वे भौतिकत्वे च कपिलादिस्मृतेः प्रमाणत्वात् कथं तत्र प्रमाणाभाव इत्यत आह **कपिलादीनामिति** । **रसाव्यञ्जकत्वे सतीति** । एतच्च मनसि व्यभिचारनिरासाय घ्राणादीनां पार्थिवत्वादिमात्रसाधने सिद्धसाधनत्वम् ।

**श्रीनिधि०— अनित्याहङ्कारिकभौतिकत्वमिति** । द्वन्द्वान्ते श्रूयमाणस्य त्वप्रत्ययस्य प्रत्येकं सम्बन्धः । **अनित्यत्वम्** आहङ्कारिकत्वम् । **भौतिकत्वं चेति** । 'सूक्ष्मेन्द्रियाणि सन्त्येव स्युः स्थूलान्य-प्यहंकृतेः' इति श्रीमद्भागवततात्पर्योदाहृतवाक्यम् । 'तेषां भूतैरुपचयः सृष्टिकाले विधीयत' इति श्रीमद्भाष्यो-दाहृतम् । सन्त्येव कदाचिन्न सन्तीति न नित्यानीत्यर्थः । अहंकृतेः सकाशात् । स्थूलान्यपि स्युः । **सृष्टिकाले विधीयत इति** । अतः स्थूलानीत्यर्थः । अस्तीति वदन् पृष्टव्यः । किं तद्वचनमेव उतानुमानमिति । नाद्य इत्याह **कपिलादीनामिति** । द्वितीयमाशङ्क्य निराकरोति **घ्राणं पार्थिवमित्यादिना** ।

**शे०वा०**— कथमुक्तार्थस्य प्रामाणिकत्वमित्यतो जडचैतन्यभेदस्य तावत् तदुपपादयति **तत्रेति** । **अनुपदमेवेति** । 'शुद्धमीशरमामुक्तेष्वन्यत्र प्राकृतैर्युतमि'त्यादिनेति शेषः । अस्त्वेवं जडचैतन्यभेदस्य प्रामा-णिकत्वं तथाऽपि जडस्य कुतः प्राकृतपदोक्तनित्यत्वादिकमित्यत आह **जडस्य चेति** । **नित्यत्वेति** । त्वप्रत्ययस्य प्रत्येकं सम्बन्धः । तथा च नित्यत्वमाहङ्कारिकत्वं भौतिकत्वं चेत्यर्थः । इत्यादीत्यादिपदेन 'नित्यान्येतानि सौक्ष्म्येण हीन्द्रियणि तु सर्वशः । तेषां भूतैरुपचयः सृष्टिकाले विधीयते' इत्यादिस्मृति-परिग्रहः । एवं स्वोक्तार्थस्य प्रामाणिकत्वं प्रतिपाद्य केवलाहङ्कारिकत्वादेरप्रामाणिकत्वमुपपादयितुं प्रमाणाभावं प्रतिजानीते **न चेति** । इन्द्रियाणामाहङ्कारिकत्वभौतिकत्वयोः स्वेनाप्यभ्युपगमात् कथं तन्निरास इत्यत उक्तं **केवलेति** । भौतिकत्वेत्यत्रापि केवलत्वं बोध्यम् । कथं प्रमाणाभाव इत्यतस्तत्किं कपिलादिवाक्यमभिमत-मुतान्यदिति विकल्पं मनसि निधायाद्यं प्रत्याह **कपिलादीनामिति** । **आप्तत्वासिद्धेरिति** । 'न चाप्तिनिश्चयस्तत्र





शक्यते व्यभिचारत' इत्युक्तरीत्येति शेषः । तथा च तद्वाक्यप्रामाण्यासिद्धेर्न तेन विप्रतिपन्नार्थसिद्धिरिति भावः । द्वितीयमाशङ्कते **घ्राणमित्यादिना** । अत्र हेतुचतुष्टये मनस्यव्यभिचाराय सत्यन्तोपादानम् । अत्र यद्यपि परे रसाद्यव्यञ्जकत्वे सति रूपाद्यव्यञ्जकत्वे सति इति आदिपदप्रक्षेपेणैव सत्यन्तं निर्दिष्टमिति तथैवानुवादो युक्तस्तथाऽपि रसाव्यञ्जकत्वमात्रेणैव मनस्यव्यभिचारसिद्ध्या आदिपदवैयर्थ्यमाशङ्क्य रसाव्यञ्जकत्वेनेव रूपाव्यञ्जकत्वेनापि व्यभिचारवारणादन्यतमपरिग्रहेण हेत्वन्तरसूचनार्थत्वस्य तट्टीकाकृतोक्तत्वेनैकैकमात्राव्यञ्जकत्वस्यैव विशेषणत्वमिति भावेनैवमनुवाद इति द्रष्टव्यम् ।

**वा०र०—** नित्यत्वादेरप्रतिज्ञाततत्वात् तदुपपादनं कथं इत्यतः उक्तं **प्राकृतपदोक्त इति** । **सूक्ष्मेन्द्रियाणि सन्त्येवेति** मूले कण्ठतः उपात्तागमनित्यान्येतानि सौक्ष्म्येण इत्यादिपदोक्तागमं च मूलीकृत्य प्राक्मूलसूक्ष्मरूपेण नित्यमपि इत्यादि प्राकृतपदार्थनिरूपणं कृतम् । तदनुसारेण प्राकृतपदोक्तेति उक्तमिति ज्ञेयम् । **तत्किमिति** । साङ्ख्यादीनामिति पूर्वमूले साङ्ख्यतन्त्रसमानतन्त्रमात्रग्रहणेऽपीह मूले न च केवलाहङ्कारिकत्व इत्यादिनो यवादिप्रमेयसङ्ग्रहात् तदनुसारेण कपिलादीनामित्युत्तरवाक्येऽपि साङ्ख्यादिवैशेषिकादितन्त्रप्रणेतृकपिलादिसर्वसङ्ग्रहस्यापि अभिप्रेतत्वात् आदिपदेन काणादादीनामपि ग्रहणमिति सिद्धं कृत्वा कपिलादिवाक्यं प्रति सामान्येन उक्ता परकोटिरिति ज्ञेयम् । यद्यपि च केवलभौतिकत्व इव केवलाहङ्कारिकत्वेऽपि अनुमानमुत्तरत्र न शङ्क्यते । प्राणमित्याद्यनुमानानां केवलभौतिकत्वमात्रविषयकत्वात् । तथापि उतान्यत् इति विकल्पकोटिः केवलभौतिकत्वमात्रपक्षाभिप्रायात् । किन्तु प्रथमपक्षोक्तदूषणस्य केवलभौतिकत्व इव केवलाहङ्कारिकत्वेऽपि प्रसराभिप्रायेण तु सामान्येन विकल्पः । द्वितीयमित्युत्तरत्रापि एवेत्यवधेयम् । **वैयर्थ्यमाशङ्केति** । अव्यभिचारसिद्ध्या प्राप्तवैय्यर्थ्यशङ्कापरिहारायेत्यर्थः । **रसादीनामित्य**त्रादिपदेन रूपस्येव स्पर्शशब्दयोरपि ग्रहणस्य विवक्षिततत्वात् रूपाव्यञ्जकत्वेनापि इति स्पर्शाव्यञ्जकत्वादेरपि उपलक्षणम् । अत एवान्यतमपरिग्रहणेति युक्तम् । वारणसम्भवात् अन्यतमेति योज्यम् । **हेत्वन्तरेति** । पार्थिवत्वेति शेषः । एतच्चोपलक्षणम् । प्रयोगान्तरेऽप्यन्यतममात्रेणैव तत्परिहारात् इत्यादि ज्ञेयम् । रसादिषु इत्यत्र रसमात्रं रूपमात्रं वेत्यादिरूपेण अन्यतमत् गृहीत्वा हेत्वन्तराणां सूचनेत्यर्थः । **सूचनार्थत्वस्येति** । बुद्ध्या विवेकेनादिपदस्येति वर्तते । सूचनार्थत्वस्य । सूचनार्थत्वेन सार्थक्यमित्यस्येत्यर्थः । **तट्टीकाकृतोक्तत्वेनेति** । रूपाद्यव्यञ्जकत्वे सतीति किरणावल्यामुक्तत्वेऽपि तत् पार्थिवं रसाद्यव्यञ्जकत्वे सतीति वर्धमानेन प्रयोगो दर्शितः । तत्र वर्धमानेन्दुना आम्ररसाव्यञ्जकत्वादेः प्रत्येकमेव हेतुविशेषणत्वमित्युक्तम् । नानाहेतुसूचनायादिपदं इति च रुचिदत्तेनोक्तम् । वर्धमानेन्दुरुचिदत्ताभ्यां उक्तत्वादित्यर्थः । फलतीति बोध्यम् । यद्यपि वर्धमानकृता गन्धादौ व्यभिचारवारणाय द्रव्यत्वहेतुविशेष्यतयोक्तम् । अत एव च तत् रुचिदत्तेन गन्धादिव्यभिचारपरिहारार्थं द्रव्यत्वविशेषणं इत्यभिधाय रसाद्यव्यञ्जकत्वमात्रस्य जलपरमाण्वादौ व्यभिचारप्रसङ्गात् तन्निवर्तये व्यञ्जकेति द्रव्यत्वविशेषणमित्यभिधाय रसाद्यव्यञ्जकत्वे सतीति व्यञ्जकद्रव्यत्वस्यापि वायूपनीतजले शीतस्पर्शव्यञ्जके व्यभिचारप्रसङ्गात् तन्निवर्तये गन्धपदमित्युक्तम् । तथापि किरणावल्यां द्रव्यत्वविशेषणानुपादानात्





किं तावत्पर्यन्तं व्याख्यानेन इत्याशयेन तथा द्रव्यत्वशून्येऽदृष्टादौ व्यभिचारकथनादिना मूलकारानभिमतं च तावत्पर्यन्तं व्याख्यानम् । तथा च मूलकारीय दूषणसौकर्यानुसारेण च स्वयमपि द्रव्यत्वान्तर्भावो न व्याख्यातः । उपर्येव तु तदन्तर्भावेन हेतुस्वरूपमाश्रित्य व्यभिचारपरिहारमाशङ्क्य परिहरिष्यतीत्यवधेयम् ।

**स०व्र०— अनुपदमेवेति** । 'शुद्धमीशरमामुक्तेषु' इत्यनेनेत्यर्थः । **नित्येति** । नित्यत्वाहङ्कारिकत्व-भौतिकत्वमित्यर्थः । आहङ्कारिकत्वस्य भौतिकत्वस्य वा स्वेनाप्यङ्गीकारात् केवलेति विशेषणम् । ननु कपिलकणादिप्रणीतवाक्यानामेव सत्त्वात् कथं प्रमाणाभाव इत्यत आह **कपिलादीनामिति घ्राणं पार्थिव-मिति** । अत्र गन्धव्यञ्जकत्वस्य मनआदौ साधारणत्वेन तत्र व्यभिचारापरिहारेऽपि रसाव्यञ्जकत्वरूपविशेषण-मात्रेणैव तत्परिहारसम्भवात् आदिपदप्रयोजनाभावात् परेण रसाद्यव्यञ्जकत्वे उक्तेऽपि रसाव्यञ्जकत्वे सति इत्युक्तम् । तत्तदिन्द्रियानन्तरोक्तेन्द्रियविशेषगुणाग्राहकत्वमेव वक्तुं युक्तमित्याशयवता घ्राणे रसाव्यञ्जकत्वे सतीति, रसने रूपाव्यञ्जकत्वे सतीति एवं विचित्रोक्तिः युक्तेति ध्येयम् ।

**विठ्ठल०— नित्याहङ्कारेति** । नित्यत्वमाहङ्कारिकत्वं भौतिकत्वमित्यर्थः । सूक्ष्मेन्द्रियाणि तेषा-मित्यर्थद्वयं विदाकलितं भागवततात्पर्यस्थम् । अत्रानुमानेषु रसाव्यञ्जकत्वे सतीत्यादि विशेषणानि मनसि व्यभिचारवारणायेति द्रष्टव्यम् ।

**चषकः— अनुपदं** 'शुद्धमीशरमामुक्तेष्वि'त्यत्र । **नित्येत्यादि** । द्वन्द्वप्रकृतिकभावप्रत्ययस्य द्वन्द्वा-वयवत्रिकेण योगः । नित्यत्वमाहङ्कारिकत्वं भौतिकत्वं सिषाधयिषतां वैशेषिकाणामनुमानचतुष्टयीं दुदूषयिषु-रनुवदति **घ्राणमित्यादिना** ।

**१३२ सु०— अत्र पार्थि(वादित्व)वत्वादिमात्रसाधने सिद्धसाधनत्वम्, तन्मात्रत्व-साधने दृष्टान्तानां साध्यवैकल्यम् । सर्वत्र पाञ्चभौतिकत्वाभ्युपगमात्, सर्वत्र चादृष्टेन व्यभिचार(ः)ात् ।**

**परि०— सिद्धसाधनत्वमिति** । प्रागुक्तस्मृत्येन्द्रियाणां पाञ्चभौतिकत्वोपगमादिति भावः । **सर्वत्र पाञ्चभौतिकत्वेति** । 'संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशादि'त्यत्रोक्तदिशेति भावः ।

**गु०दी०— पार्थिवत्वादिमात्रसाधने सिद्धसाधनत्वम्** इत्यत्र तैजसत्ववादिनाऽपि मया भूतैरुप-चयस्याङ्गीकारात् सिद्धसाधनत्वमित्यर्थः ।

**यादु०— सर्वत्र चेति** । सर्वेष्वनुमानेषु ।

**वं०प०—** सिद्धसाधनत्वं साध्यवैकल्यं च पञ्चीकरणपक्षमङ्गीकृत्याह **सर्वत्रेति** ।





**कं०रा०**— तन्मात्रत्वे साधने दृष्टान्तानां साध्यवैकल्यं चोपपादयति **सर्वत्रेति** । **सर्वत्र चेति** । घ्राणं पार्थिवं रसाव्यञ्जकत्वे सति गन्धव्यञ्जकत्वादित्याद्यनुमानेष्वदृष्टं न व्यभिचारश्चेत्यर्थः ।

**शे०वा०**— **पार्थिवत्वादिमात्रसाधन इति** । पार्थिवमाप्यमित्येतावन्मात्रसाधन इत्यर्थः । **तन्मात्रत्वसाधन इति** । पार्थिवमेवाप्यमेवेत्येतत्साधन इत्यर्थः । प्रतिज्ञातं दोषद्वयमप्युपपादति **सर्वत्रेति** । तथा च सर्वत्र पाञ्चभौतिकत्वं वदता घ्राणस्य पार्थिवत्वाभ्युपगमात्तथा रसनादेरप्यादित्वाभ्युपगमात्सिद्धसाधनम् । सर्वत्र पाञ्चभौतिकत्वं वदता घृतादेरपि पाञ्चभौतिकत्वाङ्गीकारेण पार्थिवत्वादिमात्रत्वाङ्गीकारात् दृष्टान्ते साध्यवैकल्यमित्यर्थः । प्रतिज्ञां दूषयित्वा हेतुमपि दूषयति **सर्वत्र चेति** । सर्वेष्वप्यनुमानेष्वित्यर्थः । घ्राणव्यक्तिर्गन्धव्यञ्जिकैव रसनव्यक्ती रसव्यञ्जिकैवेत्यादिनियमवत्किञ्चिद्दृष्टं गन्धस्यैव व्यञ्जकं किञ्चिच्च रसस्यैवेति नियमेन गन्धाद्येकैकमात्रव्यञ्जकस्याप्यदृष्टस्य सिद्ध्या तत्र रसाद्यव्यञ्जकत्वे सति गन्धादिमात्रव्यञ्जकत्वेऽपि पार्थिवत्वादिमात्रस्य तन्मात्रत्वस्य चाभावाद्व्यभिचार इति गूढाभिसन्धेरिदं दूषणाभिधानम् ।

**वा०र०**— **आप्यमित्येतावन्मात्रेति** । तैजसत्वादेरुपलक्षणं चेदम् । **एवमाप्यमेवेत्येतत्** इत्यत्रापि उपलक्षणं बोध्यम् । वक्ष्यति च रसनादेरपि आप्यत्वाभ्युपगमात् इत्यादीति ज्ञेयम् । तत्सर्वेत्युत्तरशङ्कानुसारेण पूर्वत्र व्यक्तिविशेष एवायातीति कार्यमात्रहेतुभूतादृष्टस्य कथं इतराव्यञ्जकत्वं इत्याशङ्कानुदय इति वक्तुं गूढाभिसन्धिं दर्शयति **घ्राणव्यक्तिरिति** । **रसस्यैवेति नियमेनेति** । इत्यादिनियमेनेत्यर्थः । एवमन्यत्रापि आदिपदान्तर्भविन योज्यम् ।

**स०व्र०**— **पार्थिवत्वादिमात्रसाधन इति** । पार्थिवमेव इत्येवं पार्थिवमात्रसाधन इत्यर्थः । **तन्मात्रत्वसाधने इति** । पार्थिवमेवेत्येवं पार्थिवत्वमात्रसाधने इत्यर्थः । **सर्वत्र चादृष्टेन व्यभिचार इति** । सर्वेष्वपि अनुमानेष्वित्यर्थः । घ्राणव्यक्तिः गन्धव्यञ्जिकैव, रसनव्यक्तिः रसव्यञ्जिकैव इत्येवं नियमवत् कदाचिददृष्टव्यक्तिविशेषे रसाव्यञ्जकत्वे सति गन्धव्यञ्जकत्वेऽपि पार्थिवत्वाभावेन तत्र व्यभिचार इति गूढाभिसन्धिरेव इदं दूषणाभिधानम् ।

**१३३ सु०— तत् सर्वव्यञ्जकमिति चेत् । किं व्यक्तिपुरस्कारेणोच्यते उतोपाध्यवच्छेदपुरस्कारेण । नाद्यः, यददृष्टमेकैकव्यञ्जकं तत्र व्यभिचारानिस्तारात्; तन्न निश्चितमिति चेत्, तथापि संदिग्धव्यभिचारिता । न द्वितीयः, इन्द्रियत्वावच्छेदेनासिद्धेः ।**

**परि०**— **किं व्यक्तीति** । तत्तदिन्द्रियसहकारिप्रतिनियतादृष्टव्यक्तिपुरस्कारेणेत्यर्थः । **उपाधीति** । अदृष्टत्वधर्मावच्छेदेनेत्यर्थः । **तदिति** । तादृशादृष्टमिति वा अदृष्टव्यक्तावेकैकव्यञ्जकत्वं वा न निश्चितमित्यर्थः । **इन्द्रियत्वेति** । क्रोडीकारकैकधर्ममुखेनाव्यभिचारोक्तौ तादृशधर्ममुखेन प्राक्प्रयुक्तहेतूनां विशेषणासिद्धिप्रयुक्तासिद्धिः स्यादित्यर्थः ।





**गु०दी०—** **किं व्यक्तिपुरस्कारेण** इत्यत्र एकैकादृष्टव्यक्तिपुरस्कारेणेत्यर्थः । **उपाध्यवच्छेदपुरस्कारेण** इत्यत्र **उपाधिः** अदृष्टत्वम् । **इन्द्रियत्वावच्छेदेनासिद्धेः** इत्यत्र घ्राणेऽपीन्द्रियत्वावच्छेदेन रसाव्यञ्जकत्वासिद्धेरित्यर्थः । यदि च घ्राणत्वोपाध्यवच्छेदेन हेतुसिद्धिं मन्यसे तर्हि गन्धव्यञ्जकादृष्टत्वोपाध्यवच्छेदेन व्यभिचारतादवस्थ्यम् ।

**यादु०—** गन्धाद्येकैकमात्रव्यञ्जकादृष्टव्यक्तिविशेषे व्यभिचार इति गूढाभिसन्धेरुत्तरमाशयमविद्वान् शङ्कते **तत्सर्वव्यञ्जकमिति** । तथा च सत्यन्तविशेषणाभावेन हेतोरेवाभावान्न व्यभिचार इति भावः । आशयमुद्घाटयितुं विकल्पयति **किं व्यक्तिपुरस्कारेणेति** । किमेकैवादृष्टव्यक्तिर्मनोवत्सर्वव्यञ्जिका उत घ्राणादिवद्गन्धादिमात्रव्यञ्जकादृष्टव्यक्तिविशेषा अदृष्टत्वेनोपाधिनैकीकृताः सर्वव्यञ्जका इति विकल्पार्थः । **तन्न निश्चितमिति** । अदृष्टे एकैकव्यञ्जकत्वं न निश्चितमित्यर्थः । न तु तादृशादृष्टमेवानिश्चितमिति व्याख्यानम् । धर्मिण एवानिश्चये वक्ष्यमाणसन्दिग्धव्यभिचारासम्भवात् । अस्मद्व्याख्याने तु साध्याभावनिश्चयवत्यदृष्टे हेतुसन्देहात् सन्दिग्धव्यभिचारोद्भावनं सङ्गच्छत इति ध्येयम् । **इन्द्रियत्वावच्छेदेनेति** । यदि असर्वव्यञ्जकादृष्टानामेकधर्मावच्छिन्नत्वेनैक्यमापाद्य सर्वव्यञ्जकतामुक्त्वा व्यभिचारः परिह्रियते, तर्हि घ्राणादीनामपीन्द्रियत्वरूपैकधर्मावच्छेदेनैक्यमापाद्य रसादिसर्वव्यञ्जकत्वस्य वक्तुं शक्यत्वेन सर्वहेतुविशेषणानामसिद्धिः स्यादित्यर्थः ।

**वं०प०—** **तत्** अदृष्टम् । तथा च तत्र सत्यन्तं नास्तीति भावः । **सन्दिग्धेति** । निश्चितसाध्याभाववति हेतुसन्देहादित्यर्थः ।

**कं०रा०—** अदृष्टस्य सर्वव्यञ्जकत्वेन रसाव्यञ्जकत्वे सतीत्यादिविशेषणाभावान्न तत्र व्यभिचार इति शङ्कते **तत्सर्वव्यञ्जकमिति** । **तथापीति** । अदृष्टविशेष एकैकव्यञ्जकत्वस्यानिश्चयेऽपि पार्थिवत्वादिरूपसाध्याभाववत्तया निश्चिते तत्र रसाव्यञ्जकत्वादिविशेषणघटिते हेतुसन्देहात्सन्दिग्धव्यभिचारितेत्यर्थः ।

**श्रीनिधि०—** **इन्द्रियत्वावच्छेदेनासिद्धेरिति** । इन्द्रियत्वावच्छेदेन रसाद्यव्यञ्जकत्वं नाम रसव्यञ्जकनिष्ठ-इन्द्रियत्वराहित्यं तदसिद्धमिति भावः ।

**शे०वा०—** आशयमविद्वान् शङ्कते **तदिति** । तथा च सत्यन्तविशेषणाभावेन हेतोरेवागमनान्न व्यभिचार इति भावः । आशयमुद्घाटयितुं विकल्पयति **किं व्यक्तिपुरस्कारेणेति** । एकैकादृष्टव्यक्तिः सर्वव्यञ्जिकोत घ्राणादिवद्गन्धादिमात्रव्यञ्जकादृष्टव्यक्तिविशेषा अदृष्टत्वेनोपाधिना सर्वव्यञ्जिका इति विकल्पार्थः । आशयमुद्घाटयन्नाद्यं प्रत्याह **यददृष्टमिति** । गन्धमात्रव्यञ्जकं रसमात्रव्यञ्जकं वा यददृष्टं तत्रेत्यर्थः । **तदिति** । अदृष्टव्यक्तौ गन्धाद्येकैकमात्रव्यञ्जकत्वमित्यर्थः । **तथाऽपीति** । निश्चितसाध्याभाववति हेतुसन्देहादिति भावः । **इन्द्रियत्वेति** । यद्यसर्वव्यञ्जकादृष्टानामप्येकधर्मावच्छिन्नत्वेनैक्यमापाद्य सर्वव्यञ्जकतामुपपाद्य हेत्वगमनान्न व्यभिचारस्तर्हि घ्राणादीनामपीन्द्रियत्वरूपैकधर्मावच्छिन्नत्वेनैक्यमापाद्य रसादिसर्वव्यञ्जकताया वक्तुं शक्यत्वात्





सर्वेष्वनुमानेषु हेतुविशेषणानां पक्षेऽसिद्ध्या हेत्वसिद्धिः स्यादित्यर्थः । न चेन्द्रियत्वेनेन्द्रियस्य रसादिव्यञ्जकत्वेऽपि घ्राणादेस्तदभावान्नासिद्धिरिति वाच्यम् । तथा सत्यदृष्टत्वावच्छेदेनादृष्टस्य सर्वव्यञ्जकत्वेऽपि तत्तददृष्टस्य सर्वव्यञ्जकत्वाभावेन व्यभिचारतादवस्थ्यापातात् तत्परिहाराय चादृष्टत्वेन तत्तददृष्टस्यापि सर्वव्यञ्जकत्वाङ्गीकारे च तन्न्यायेन घ्राणादेरपीन्द्रियत्वावच्छेदेन रसादिव्यञ्जकत्वप्राप्त्याऽसिद्धितादवस्थ्यादिति भावः ।

**वा०र०— एकैकादृष्टव्यक्तिरिति** । काचित् अदृष्टव्यक्तिः गन्धस्य व्यञ्जिका काचित् रूपस्य काचित् रसस्य इत्येवं तत्तद्व्यञ्जकादृष्टव्यक्तीनां मिलित्वा सर्वव्यञ्जकत्वं उच्यते तद्व्यञ्जकानामेव तासां तासां व्यक्तीनां प्रत्येकं अदृष्टत्वोपाधिना सर्वव्यञ्जकत्वमुच्यते इति विकल्पार्थ इत्यर्थः । **गन्धमात्रव्यञ्जकमित्यादि** । याऽदृष्टव्यक्तिः गन्धमात्रव्यञ्जिका या च रसमात्रव्यञ्जिकाया च रूपमात्रस्य या च स्पर्शमात्रस्य इत्येवं तत्तददृष्टव्यक्तौ सर्वव्यञ्जकत्वस्य प्रत्येकमभावेन रसाव्यञ्जकत्वे सति गन्धव्यञ्जकत्वं इत्यादिरूपहेतोः सत्त्वेन व्यभिचार इत्यर्थः । **असर्वव्यञ्जकानां अदृष्टानामपीति** । असर्वव्यञ्जिकानामपि अदृष्टानामित्यर्थः । तत्परिहाराय चादृष्टत्वेनेति वाक्ये द्वितीयश्चशब्दोऽधिको लेखकागतः ।

**विठ्ठल०— व्यक्तिपुरस्कारेणेति** । एका द्रष्टृव्यक्तिपुरस्कारेण उपाध्यवच्छेदेति । एकादृष्टव्यक्तेरपि गन्धादिसर्वव्यञ्जकत्वमुच्यते वा अदृष्टानां प्रत्येकं गन्धादिमात्रव्यञ्जकत्वेऽपि अदृष्टत्वावच्छिन्ने रसव्यञ्जकादृष्टपुरस्कारेण रसग्राहकत्वसद्भावात् । यदवशिष्टे यद्भवति तद्विशिष्टे तद्भवतीति न्यायेनादृष्टत्वविशिष्टगन्धव्यञ्जकादृष्टेऽप्यवच्छेदकधर्मतः सर्वव्यञ्जकत्वमुच्यते वेति विकल्पाभिप्रायः । **यददृष्टमिति** । एकैकव्यक्तेर्गन्धादिसर्वव्यञ्जकस्थले व्यभिचारपरिहारेऽपि गन्धाद्येकैकव्यञ्जकादृष्टविशेषस्यापि विद्यमानत्वेन तत्र व्यभिचारापरिहारादित्यर्थः । **तदिति** । तादृशादृष्टमित्यर्थः । **इन्द्रियत्वावच्छेदेनेति** । घ्राणादावपीन्द्रियत्वावच्छेदेनेति । घ्राणादावपीन्द्रियत्वावच्छेदेन रसाव्यञ्जकत्वासिद्धेरित्यर्थः । रसनस्य रसव्यञ्जकत्वेन तदवच्छेदकेन्द्रियत्ववति घ्राणेऽपि यदवशिष्टन्यायेन रसव्यञ्जकत्वप्राप्तेरिति भावः ।

**१३४ सु०— किञ्च पार्थिवादिपदैः पृथिवीत्वाद्यभिधाने तत्तत्सन्निकर्षैरनैकान्त्यम् । इन्द्रियत्वेन हेतुविशेषणे दृष्टान्तानां साधनवैकल्यम् । पृथिव्यादिकार्यतासाधने प्रागुक्तसिद्धसाधनतापरिहाराय मात्रपदप्रयोगे पृथिव्यादिरूपादिव्यञ्जकसन्निकर्षेषु व्यभिचारतादवस्थ्यम् ।**

**परि०— पृथिवीत्वादीति** । घ्राणं पार्थिवमित्यादेः पृथिवीत्वादिजातिमदित्याद्यर्थाभिधान इत्यर्थः । **पृथिव्यादीति** । पृथिवीजलतेजोवायुगतरूपरसगन्धस्पर्शादिव्यञ्जकसन्निकर्षेषु पृथिव्यादिकार्यत्ववत् इन्द्रियतत्क्रियादिकार्यत्वस्यापि सत्त्वेन पृथिव्यादिमात्रकार्यत्वरूपसाध्यस्य अभावेऽपि





हेतुसत्त्वाद्व्यभिचार इत्यर्थः । एतच्चोपलक्षणम् । अप्रसिद्धविशेषणता च ध्येया । कालादेरपि कार्यमात्रहेतुत्वात् । व्यभिचारप्रस्तावात् स एवोक्तः । पृथिव्यादिव्यञ्जकेत्येव वाच्ये रूपादीत्यप्युक्तिः हेतुसत्त्वलाभाय । तत्र पृथिव्यादिगन्धादीति वाच्ये रूपादीत्युक्तिः प्रसिद्धचक्षुस्तैजसप्रयोगानुरोधेन इत्याहुः ।

**गु०दी०— पृथिव्यादिरूपादिव्यञ्जकसन्निकर्षेषु** इत्यत्र पृथिव्यादिद्रव्यचतुष्टयसन्निकर्षे रूपादिगुणचतुष्टयसन्निकर्षे च व्यभिचार इत्यर्थः । तैजसत्वसाधने रूपसन्निकर्षे आप्यत्वसाधने रससन्निकर्षे पार्थिवत्वसाधने गन्धसन्निकर्षे वायवीयत्वसाधने स्पर्शसन्निकर्षे च व्यभिचार इति यावत् । लोकव्यवहारानुरोधेन गुणेषु क्रमोल्लङ्घनम् ।

**यादु०— पृथिवीत्वाभिधान इति** । प्रत्ययस्य स्वार्थिकत्वमङ्गीकृत्य पृथिवीत्वादिजातिमत्त्वस्य साध्यत्वाभिधान इत्यर्थः । **पृथिव्यादिरूपादीति** । अत्र आद्येन आदिपदेन जलतेजसी ग्राह्ये न वायुरपि ग्राह्यः । तदीयस्पर्शग्राहकत्वचोऽपि वायवीयत्वेन तत्सन्निकर्षस्य वायुमात्रकार्यत्वेन तत्र व्यभिचारासम्भवात् । द्वितीयेन पृथिवीगतरसस्पर्शयोः जलनिष्ठरूपस्पर्शयोस्तेजोनिष्ठस्पर्शस्य च ग्रहणम् । तथा च यद्यपि पृथिवीगन्धव्यञ्जकसंयुक्तसमवायरूपसन्निकर्षान्तर्गते घ्राणपृथिवीसंयोगे घ्राणस्यापि पृथिवीत्वेन पृथिवीमात्रकार्यत्वमस्त्येवेति न व्यभिचार एवमब्रसतेजोरूपवायुस्पर्शव्यञ्जकसन्निकर्षान्तर्गतेषु रसनाद्यबादिसंयोगेषु न व्यभिचारः । रसनचक्षुस्त्वचामपि क्रमेणाप्तेजोवायुरूपत्वेनाबादिमात्रकार्यत्वस्य तत्र सत्त्वात् । तथाऽपि पृथिवीरूपरसस्पर्शव्यञ्जकसन्निकर्षान्तर्गतेषु पृथिवीचक्षुरादिसंयोगेषु अब्रूपस्पर्शव्यञ्जकान्तर्गतयोः अप्चक्षुरादिसंयोगयोः तेजःस्पर्शान्तर्गते तेजस्त्वक्संयोगे च व्यभिचारतादवस्थ्यम् । चक्षुरादीनां पृथिवीत्वाद्यभावेन तत्संयोगानां पृथिव्यादिमात्रकार्यत्वाभावेन साध्याभावसत्त्वादिति भावः । केचित्तु गन्धरसादिव्यञ्जकसन्निकर्षेषु गन्धरसादेरपि घटकतया जनकत्वेन पृथिव्यादिमात्रकार्यत्वाभावाद्व्यभिचार इति भावमाहुः । तत्र गन्धादिव्यञ्जकसन्निकर्षेष्वित्येव वक्तव्यत्वेन पृथिव्यादिरूपादिव्यञ्जकसन्निकर्षेष्वित्युक्तेः प्रयोजनं चिन्त्यम् । मात्रशब्देनेतरभूतानामेव व्यवच्छेद्यत्वाच्च । अन्यथा प्रागभावस्यादृष्टादेश्च सर्वत्र जनकत्वेनाप्रसिद्धिरेव स्यादिति ।

**वं०प०— प्रागुक्तेति** । सर्वत्र पाञ्चभौतिकत्वाभ्युपगमादिति भावः । **पृथिव्यादिरूपादीति** । अयमर्थः । पृथिवीगतरूपज्ञानं संयुक्तसमवायसन्निकर्षेण चक्षुषा भवति । तथा च पृथिवीरूपव्यञ्जकसंयुक्तसमवायसन्निकर्षान्तर्गते संयोगरूपे, चक्षुःपृथिवीसन्निकर्षे, रूपव्यञ्जकत्वसद्भावेऽपि पृथिवीमात्रकार्यत्वं नास्ति । चक्षुःकार्यत्वस्यापि सत्त्वाद्व्यभिचारः । एवं चक्षुषा जलरूपव्यञ्जकसंयुक्तसमवायान्तर्गते चक्षुर्जलसन्निकर्षे व्यभिचारो द्रष्टव्यः । एवं रसनेन्द्रियेण गुडनिष्ठरसज्ञानं संयुक्तसमवायसन्निकर्षेण भवति । तदन्तर्गते रसनगुडसंयोगे रसव्यञ्जकत्वसद्भावेऽप्यम्मात्रकार्यत्वं नास्ति । गुडकार्यताया अपि सद्भावाद्व्यभिचार इत्यादि द्रष्टव्यम् ।





**कं०रा०— पार्थिवत्वादिपदैरिति** । पार्थिवमित्यादिपदैः पृथिवीत्वादि जात्यभिधाने घ्राणगन्धादिसन्निकर्षैव नैकान्त्यमित्यर्थः । इन्द्रियत्वेन हेतुविशेषणान्नोक्तसन्निकर्षेष्वनैकान्त्यमित्यत आह **इन्द्रियत्वेनेति** । **दृष्टान्तानामिति** । कुंकुमगन्धाद्यभिव्यञ्जकघृतादिरूपदृष्टान्तेष्विन्द्रियत्वगर्भसाधनाभावात् तेषां तद्वैकल्यमिति भावः । **पृथिव्यादीति** । घ्राणं पार्थिवमित्यादिना घ्राणादेः पृथिव्यादिकार्यतासाधने मया सर्वत्र पाञ्चभौतिकत्वस्याभ्युपगतत्वेन घ्राणादेः पृथिवीकार्यत्वं सिद्धमिति प्रागुक्तं सिद्धसाधनत्वमित्यर्थः । **तत्परिहारायेति** । सिद्धसाधनत्वपरिहाराय घ्राणं पृथिवीकार्यं इत्यादिरूपेण मात्रपदप्रयोगे पृथिव्यादिगतरूपादीनां व्यञ्जका ये सन्निकर्षास्तेषु पृथिवीमात्रकार्यत्वाद्यभावेन व्यभिचारतादवस्थ्यमित्यर्थः ।

**श्रीनिधि०— पृथिव्यादिरूपादिव्यञ्जकसन्निकर्षेष्विति** । उपलक्षणमिति रूपादिव्यञ्जकेष्वपि व्यभिचारः । परेण संयोगस्य व्यासज्यवृत्तित्वाङ्गीकारात् । तस्य च इन्द्रियविषयोभयजन्यत्वात् । इन्द्रियस्य च तैजसादित्वात् । पृथिव्यादिमात्रकार्यत्वाभावात् ।

**शे०वा०— किञ्चेति** । पार्थिवमिति पृथिवीकार्यमुच्यते । तच्च पृथिवीत्वजातिमदपि दृष्टमिति तदनुसारेणाद्यः कल्पः । पृथिवीत्वजातिराहित्येऽपि तत्कार्यतामात्रेण पार्थिवं तत्तद्गुणादिकमपि दृष्टमिति तदनुसारेण द्वितीयकल्पप्रसक्तिरिति ध्येयम् । एवं कल्पद्वयं मनसि निधायाद्यमनुवदति **पार्थिवादिपदैरिति** । दूषयति **तत्तत्सन्निकर्षैरिति** । घ्राणादीनां गन्धादिभिर्ये सन्निकर्षास्तेषां, रसाद्यव्यञ्जकत्वे सति गन्धादिव्यञ्जकत्वेऽपि, पृथिवीत्वादिजातिमत्त्वाभावादिति भावः । इन्द्रियत्वविशिष्टस्यैव रसाद्यव्यञ्जकत्वे सति गन्धादिव्यञ्जकत्वस्य हेतुत्वाद्विशिष्टहेत्वगमनान्न तत्तत्सन्निकर्षेषु व्यभिचार इत्यतो माऽस्त्वस्मिन्पक्षे व्यभिचारः कुंकुमगन्धादिव्यञ्जकघृतादाविन्द्रियत्वविशिष्टहेत्वगमनाद् दृष्टान्ते साधनवैकल्यमवर्जनीयमित्याह **इन्द्रियत्वेनेति** । द्वितीयं दूषयति **पृथिव्यादिकार्यतासाधन इति** । **प्रागुक्तेति** । घ्राणरसनादेः प्रत्येकं पञ्चभूतकार्यत्वादिना पृथिव्यादिकार्यताया अङ्गीकारात् तत्साधने सिद्धसाधनमित्यर्थः । **मात्रपदेति** । तथा च सर्वस्य पाञ्चभौतिकत्ववादिना घ्राणरसनादेः पृथिवीकार्यत्वात् कार्यत्वाङ्गीकारेऽपि तत्तन्मात्रकार्यत्वानभ्युपगमान्न सिद्धसाधनमिति भावः । **पृथिव्यादीति** । अत्र पृथिव्यादीत्यादिपदेन जलतेजोवायूनां सङ्ग्रहः । रूपादीत्यादिपदेन च गन्धरसस्पर्शानां सङ्ग्रहः । रूपादीनां व्यञ्जका ये दीपादयस्तैः सह पृथिव्यादीनां ये सन्निकर्षास्तेष्वित्येवार्थः । न तु रूपादिव्यञ्जकीभूता ये सन्निकर्षास्तेष्विति । तथा सति पूर्ववत्तत्सन्निकर्षेषु व्यभिचार इत्येव वक्तव्यतया पृथिव्यादिरूपादिव्यञ्जकसन्निकर्षेष्वित्युक्तेरस्वारस्यापातात् ।

ततश्चायमर्थः । घ्राणं पृथिवीमात्रकार्यं रसाव्यञ्जकत्वे सति गन्धव्यञ्जकत्वादित्यनुमाने साध्ये मात्रपदप्रक्षेपेण सिद्धसाधनतापरिहारेऽपि कुंकुमगन्धव्यञ्जकघृतेन कुंकुमस्य यः सन्निकर्षः तत्र व्यभिचारः स्यादेव । तस्य रसाव्यञ्जकत्वे सति गन्धव्यञ्जकत्वेऽपि पृथिवीमात्रकार्यत्वाभावात् सर्वत्र पाञ्चभौतिकत्वस्य मयाऽभ्युपगतत्वेन कुंकुमगन्धव्यञ्जकघृतादेरपि पाञ्चभौतिकत्वेन पृथिवीमात्रत्वाभावेन तत्सन्निकर्षस्य पृथिवी-





मात्रकार्यत्वानुपपत्तेः । एवं रसनमाप्यं रूपाव्यञ्जकत्वे सति रसव्यञ्जकत्वादित्यनुमानेऽपि रसाश्रयद्रव्यस्य लालया सह सन्निकर्षे उक्तरीत्याऽम्मात्रकार्यत्वाभावाद्व्यभिचारः । चक्षुस्तैजसं स्पर्शाव्यञ्जकत्वे सति रूपव्यञ्जकत्वादित्यत्रापि व्यञ्जकेन प्रदीपेन सह सन्निकर्षे तेजोमात्रकार्यत्वाभावाद्व्यभिचारः । त्वगिन्द्रियं वायवीयं शब्दाव्यञ्जकत्वे सति स्पर्शव्यञ्जकत्वादित्यत्र च व्यजनपवनेन सह विषयस्य सन्निकर्षे उक्तरीत्या वायुमात्रकार्यत्वाभावाद्व्यभिचार इत्यनुमानचतुष्टयमप्यनुपपन्नमेवेति । यद्यप्यत्र व्यञ्जकीभूते घृतादौ पृथिव्यादिमात्रकार्यत्वाभावात् साध्यवैकल्यमपि दृष्टान्ते वक्तुं शक्यं तथाऽपि प्रागुक्तरीत्या तस्य सुज्ञानत्वात् तदनुद्भाव्य व्यञ्जकैः सह सन्निकर्षेषु व्यभिचार एवोक्तः । तत्रापि पृथिव्यादिगन्धादिव्यञ्जकसन्निकर्षेष्विति वक्तव्ये यत्पृथिव्यादिरूपादिव्यञ्जकसन्निकर्षेष्विति वचनं तत् रूपव्यञ्जकप्रदीपेन सह विषयसन्निकर्षस्यावश्यकत्वं सार्वजनीनानुभवसिद्धमिति द्योतयितुमिति ध्येयम् । यद्वा रूपादिव्यञ्जका ये सन्निकर्षास्तेष्वित्येवार्थः । पृथिव्यादीति च रूपादिव्यञ्जकसन्निकर्षविशेषणम् । तथा च पृथिव्यादयः पृथिव्यादिरूपाः पृथिव्यादिकार्यभूता ये रूपादिव्यञ्जकसन्निकर्षा इति सिद्ध्यति । तत्रोक्तसन्निकर्षाणां रूपादिव्यञ्जकसन्निकर्षेष्वित्यनेनोक्तहेतुमत्त्वलाभेऽपि पृथिव्यादिमात्रकार्यत्वरूपसाध्याभावोपपादनार्थं पृथिव्यादित्ववर्णनम् । अत एव क्वचित् 'पृथिव्यादिरूपव्यञ्जकसन्निकर्षेष्वि'ति व्यञ्जकसन्निकर्षाणां पृथिव्यादिरूपत्वसमर्पकः क्वाचित्कः पाठः सङ्गच्छते । ततश्च रूपरसगन्धस्पर्शव्यञ्जकसंयुक्तसमवायरूपसन्निकर्षाणां रूपादिजन्यतया पृथिव्यादिमात्रकार्यत्वाभावाद्व्यभिचारः । न चात्र मात्रशब्देनेतरभूतानामेव व्यवच्छेद्यत्वमन्यथा प्रागभावादृष्टादेः सर्वत्र जनकत्वेनाप्रसिद्ध्यापातात् । तथा च गन्धादेरव्यवच्छेद्यतयोक्तसन्निकर्षाणां गन्धादिजन्यत्वेऽपि पृथिव्यादीतरभूतजन्यत्वाभावेन पृथिव्यादिमात्रकार्यत्वमस्त्येवेति कथं तत्र व्यभिचार इति वाच्यम् । तथा सति घ्राणादीनां पृथिव्यादीतरभूतकार्यत्वाभावमात्रेणैव पृथिव्यादिमात्रकार्यत्वरूपप्रतिज्ञार्थोपपत्त्या केवलभौतिकत्वासिद्धिप्रसङ्गेन, न च केवलेत्यादिप्रक्रमविरोधापत्त्या तदविरोधार्थं पृथिव्यादीतरभावरूपासाधारणकारणमात्रस्यैव व्यवच्छेद्यतयाऽहङ्कारस्येव गन्धादेरपि व्यवच्छेद्यतयोक्तरीत्या व्यभिचारस्य वज्रलेपत्वादिति सङ्क्षेपः । अथवा चक्षुस्तैजसमेवेत्यत्र पृथिव्यास्तद्रूपव्यञ्जकप्रदीपस्य च सन्निकर्षोऽवश्यमपेक्षितः । तत्र स्पर्शाव्यञ्जकत्वे सतीत्यादिहेतुमति पृथिवीतेजःकार्यतया तैजसमात्रत्वाभावात् । घ्राणं पार्थिवमेवेत्यत्र चर्मरूपपृथिव्याः तद्गन्धव्यञ्जकजलस्य च यः सन्निकर्षस्तत्र रसाव्यञ्जकत्वे सति गन्धव्यञ्जकत्वेऽपि पृथिवीजलकार्यत्वेन पृथिवीमात्रकार्यत्वाभावात् । रसनम् अम्मात्रकार्यमित्यत्र च शाकादेस्तद्रसव्यञ्जकलवणादिना सन्निकर्षे उक्तहेतुमति पृथिवीमात्रकार्यत्वाल्लवणशाकादिसंयोगस्य अम्मात्रकार्यत्वाभावात् । त्वगिन्द्रियं वायुमात्रकार्यमित्यत्र च पृथिवीगतस्पर्शव्यञ्जककर्पूरादेश्च सन्निकर्षे उक्तहेतुमत्यपि वायुमात्रकार्यत्वाभावाद्व्यभिचार इत्यर्थः । न चैवमस्य पक्षस्य 'अपि च' इति वक्ष्यमाणपक्षान्तर्भावप्रसङ्गः । तत्र तत्तत्सन्निकर्षनिरूपकलवणादावत्र पुनस्तत्सन्निकर्ष इति भेदादित्यभिप्रायः ।

**वा०र०— पार्थिवमिति । पृथिवीति** । यद्यपि पार्थिवादिपदैः इत्येतत्पक्षोपपादनपूर्वकं तत्प्रसक्तिपूर्वकं वर्णयित्वा पृथिव्यादिकार्यता इति पक्षोपादानपूर्वकं च तत्प्रसक्तिवर्णनं उचितम् । तथापि शिष्यसमाधानाय





पक्षद्वयेऽपि प्रसक्तिरुपर्येव सङ्कल्पाभिहितेत्यदोषः । प्रसक्तिरित्येवं कल्पद्वयमिति पाठे तु न कश्चित् दोषः । **आद्यः कल्प इति** । प्रसक्त इति शेषः । द्वितीयं दूषयतीत्यस्य दूषयितुमनुवदतीत्यर्थः । दूषयितुं अनुवदतीति पाठस्तु स्वरस एव । अप्कार्यत्वाद्यङ्गीकारेऽपीति पाठः । आदिपदार्थस्य पूर्वोत्तरग्रन्थमर्यादया तत्र तत्र पूरणीयं सिद्धमिति वा । **तेजोवायूनामिति** । अत्र वायुग्रहणेन अन्यथाख्यातिस्थं न वायुरपि ग्राह्यः तदीयस्पर्श-ग्राहकत्वचोऽपि वायवीयत्वेन तत्सन्निकर्षस्य वायुमात्रकार्यत्वेन तत्र व्यभिचाराप्रसङ्गात् इति व्युत्पादनं अपहस्तितं भवति । टीकोक्तयोजनात्रयेऽपि व्यजनपवनेन सह विषयस्य सन्निकर्षादौ वक्ष्यमाणरीत्या शब्दा-व्यञ्जकत्वे सति स्पर्शव्यञ्जकत्वहेतोः सत्त्वेऽपि वायुजलादिकार्यतया वायुमात्रकार्यत्वाभावेन व्यभिचारस्य वायुस्पर्शव्यञ्जकसन्निकर्षेऽपि व्याप्त्या वायुसङ्ग्रहोक्तेरयोगः इति सूचितम् । न च मया पृथिवीरूपरसस्पर्श-व्यञ्जकसन्निकर्षादावेव व्यभिचारस्य व्याख्यास्यमानतया तत्तुल्यतया वायुत्वेन संयोग एव व्यभिचारो वाच्यः । तत्र चोक्तानुपपत्तिरित्यभिप्रेत्य तमिति वाच्यम् । रूपादिव्यञ्जकाः । ये सन्निकर्षाः इति योजनायां उक्तसन्नि-कर्षेषु इति पूर्ववदेव वक्तव्यत्वापत्त्या पृथिव्यादीत्यादिरूपोक्तेरस्वारस्यप्राप्तेः इत्येवं टीकाकृता एव दूषयिष्यत्वेन तद्योजनाश्रयणेन व्यभिचारप्रसक्त्यभाववर्णनायोगात् । पूर्वमेव वायुसङ्ग्रहाभावसिद्धौ सत्यां यद्यपीत्युत्तरग्रन्थे वायुस्पर्शव्यञ्जकसन्निकर्षे व्यभिचारप्रसक्त्यभाववर्णनायोगश्च । अधिकं वाक्यार्थविनोदे ज्ञेयम् । **गन्धरस-स्पर्शानामिति** । अनेनान्यथाख्यातिस्थं पृथिवीगतरसस्पर्शयोरित्यादिरूपेणादिपदार्थकथनं चायुक्तमिति सूचि-तम् । यद्यपि पृथिवीत्यादिवद्वक्ष्यमाणरीत्या पृथिवीगन्धरसतेजोरूपवायुस्पर्शव्यञ्जकसन्निकर्षान्तर्गतघ्राणादि-पृथिव्यादिसंयोगेषु व्यभिचाराभावेन रूपादि इत्यादिपदेन गन्धमात्रग्रहणायोगेऽपि रसस्पर्शग्रहणस्य सम्मततया स्वशब्देनोपात्तरूपपरित्यागेन रसस्पर्शयोर्ग्रहणं इत्येव वाच्यतया पृथिवीगतरसस्पर्शयोः जलनिष्ठरूपस्पर्शयोः इत्यादेरगतत्वात् । न च रूपादिपदेन उक्तरूपरसस्पर्शानां मध्ये पृथिव्यंशे गन्धस्येवाबंशे रसस्य तेजोंश-रूपस्य च सम्बन्धायोगात् तत्तदंशे योग्यगुणसम्बन्धप्रदर्शनार्थं एवं विवेकेनोक्तेर्नासङ्गतिरिति वाच्यम् । अस्य विवेकस्यादिपदसङ्ग्राह्यकथनोत्तरभावितया प्रथमतः प्रवृत्त्यनुपपत्तेः । किञ्च यदि रूपादीत्यादिपदेनैव पृथिवीगतरसस्पर्शयोः इत्युक्तप्रकारेण सधर्मिकधर्मलाभः तर्हि पृथिव्यादीति पूर्वपदमनर्थकमापद्यते । अनन्वयश्च तत्पदस्य पृथिवि पृथिवीगतरूपरसस्पर्शव्यञ्जिकेति पुनरुक्तिमात्रापत्तेः । एवमबंशेऽप्यनन्वयो बोध्यः । अपि च तत्तद्योग्यगुणसम्बन्धाप्रदर्शनाभिप्राये च स्वपदोपात्तरूपपरित्यागेन इतरसम्बन्धस्यैव वक्तव्यतया जलांशे रूपग्रहणायोगः । श्रुतादिपदोक्तोभयसम्बन्धप्रदर्शनाभिप्राये पृथिव्यंशेऽपि । रूपग्रहणप्रसक्त्या रसस्पर्शयोः इत्यस्यानुपपत्तिः । रूपादीत्युक्तं प्रति पृथिव्या इव जलस्यापि पृथिव्यादि इत्यनेन सम्बन्धित्वेनोपस्थिति-सद्भावेन जलांशे रूपसम्बन्धो न लब्धः । पृथिव्यंशे तु लब्धः इत्यादिकल्पनायोगश्च । तथा च यद्यपि पृथिवी-त्यादिकं तु वाक्यार्थविनोदे तुषितम् । पृथिवीचक्षुःसंयोगादौ स्पर्शाव्यञ्जकत्वे सति रूपव्यञ्जकत्वादिहेतूनामिव पृथिवीतेजःकार्यतया तेजोमात्रकार्यत्वाभावेन इत्यादिरूपेण साध्याभावसिद्ध्या व्यभिचारोपपादनाय चक्षुषः पृथिवीत्वाभाववर्णनस्य तत्तत्संयोगस्य पृथिवीमात्रकार्यत्वाभाववर्णनस्य च वैय्यर्थ्यम् । घ्राणपृथिवीसंयोगस्य तु पृथिवीमात्रकार्यतामभ्युपगम्य व्यभिचाराभावस्य च भवतैवोक्तत्वेन तद्व्यभिचारोपपादनस्य चक्षुरादेः





पृथिवीत्वाद्यभाववर्णनानपेक्षितत्वेन च तदुपयोगितया तद्वर्णनमित्यस्यायोगः । पृथिवीचक्षुरादिसंयोगे व्यभिचारोपपादनार्थं चक्षुरादीनां पृथिवीत्वाभावादिवर्णनं इति तु अपरामर्शमूलकम् । तत्र गन्धव्यञ्जकत्वहेतोरेवाभावेन साध्याभावोपपादनानर्थक्यात् । अत्र रसनादिपक्षकानुमानस्येव घ्राणपक्षकानुमानस्यापि दूषणीयतया प्रक्रमे सति प्रथमप्राप्तानुमाने एव दूषणाभावो ग्रन्थकृत्सम्मत इति तदनौचित्यापादककल्पनायोगश्चेत्यादेरभिधानात् । किं च यत्तावत् घ्राणपृथिवीसंयोगे घ्राणस्यापि पृथिवीत्वेन पृथिवीमात्रकार्यत्वमस्त्येवेति न व्यभिचार इत्युक्तम्, तन्न । घ्राणस्य पृथिवीत्वसाधकानुमानदूषणावसरे उक्तसंयोगे व्यभिचारप्रसक्तिकाले घ्राणपृथिवीत्वसिद्ध्यभावेन तदादाय व्यभिचाराभावोक्तेः अयोगात् । घ्राणपृथिवीसंयोगादौ गन्धव्यञ्जकत्वाभावेन तदुपपादनाय तद्व्यञ्जकसन्निकर्षान्तर्गतत्वकल्पनाश्रयणेन गौरवात् । केचित्तु गन्धेत्यादिकमपि तत्रैव दूषितम् । न च तत्र रसाव्यञ्जकत्व इत्याद्यपि तथेति ज्ञेयम् । पूर्ववत् तत्तत्सन्निकर्षेषु व्यभिचार इत्येवेति । यद्यपि सन्निकर्षप्रतियोगितया रूपादीति वाच्यमेव । पृथिव्यादिकार्यताप्रतिपादनायापि रूपाद्यनन्वयकमेव । हेतुसद्भावप्रतिपादनाय व्यञ्जकपदमप्यावश्यकमेव । पृथिव्यादिकार्यत्वमपि अस्तीति प्रतिपादनाय पृथिव्यादीत्यपि आवश्यकमेवेति न वैयर्थ्यं वक्तुं युक्तम् । तथापि तत्सन्निकर्षेषु इत्यनेनैव पूर्वत्रेवात्रापि विवक्षितार्थप्रतिपादनलाभोपपत्तिः इत्याशयेन इतरांशवैय्यर्थ्याभिधानम् । अत एवोक्तरीत्या सार्थक्यमाश्रित्यापि योजयिष्यति **यद्वेत्यादिनेति** । **लीलयेति** । रसव्यञ्जकयेति शेषः । व्यञ्जकेन प्रदीपेनेत्यत्र व्यञ्जकेनेति व्याख्येयम् । **सदेति** । रूपाश्रयघटादिनेति शेषः । **विषयसन्निकर्ष इति** । शीतस्पर्शाश्रयजलादिरूपविषयेत्यर्थः । रसाश्रयं द्रव्यं द्रवरूपं चेत् तदोक्तरीत्या तत्र अम्मात्रकार्यत्वाभावः उपपादनीयः । पृथिवीरूपत्वे तु स्पष्टोऽम्मात्रकार्यत्वाभावः । एवं व्यजनपवनस्य त्वगादिवायवीयसन्निकर्षे वायुमात्रकार्यत्वाभावोपपादनार्थं पाञ्चभौतिकत्वाभ्युपगमयुक्तिरभिप्रेता । जलादिसन्निकर्षे तु स्पष्टः एव । वायुमात्रकार्यत्वाभावः विवेकोऽत्र ज्ञेयः । अत्र पक्षे व्यञ्जकत्वं सन्निकर्षनिष्ठतया प्रतीयमानसन्निकर्षनिरूपकनिष्ठतया स्वीकार्यं भवति । वैय्यर्थ्यं तु स्पष्टार्थत्वोपाधिकांशोदाहरणोपपत्तेः न प्रसज्यते इत्यपरितोषं मनसि निधाय पक्षान्तरमाह **यद्वा रूपादिव्यञ्जकाः इत्यादिना** । **हेतुमत्वलाभेऽपीति** । उपलक्षणं चैतत् । पृथिव्यादिमात्रकार्यत्वरूपसाध्याभावभूतपृथिव्यादितदितरकार्यत्वयोः मध्ये तदितरकार्यत्वलाभेऽपि चेति ज्ञेयम् । यद्वा वक्ष्यति रूपादिजन्यतयेति । **साध्याभावोपपादनार्थमिति** । पृथिवीकार्यत्वे सतीति तदितरकार्यत्वाभावादिरूपस्य साध्यस्य योऽभावः पृथिवीकार्यत्वतदितरकार्यत्वादिरूपः तत्र पृथिव्यादिकार्यत्वांशप्रतिपादनार्थमित्यर्थः । इतरांशप्रतिपादनस्य रूपादिव्यञ्जकेत्यनेन एव प्रागुक्तरीत्या लाभादतो न कश्चित् दोषः । **पृथिव्यादित्ववर्णनमिति** । तत्कार्यत्ववर्णनमित्यर्थः । अत एवेति वाक्ये क्वचित् इत्यधिकम् । नाश्यमिति धिया क्वाचित्क इत्युत्तरत्रोक्तम् । तन्नाशः कार्यः । **क्वाचित्कपाठ इति** । तत्पाठे व्यञ्जकसन्निकर्षेषु इत्यस्य हेतुसमर्पकत्ववत् पृथिव्यादीतरकार्यत्वसमर्पकतापि अस्त्येव । पृथिव्यादिकार्यत्वांशस्तु पृथिव्यादीत्यनेन लभ्यते । तथा च तत्पाठपक्षेऽपि उक्तार्थसमर्पणान्नानुपपत्तिः इति भावः । अत्र च पाठः इत्यस्य पाठोऽपीत्यर्थः इति बोध्यम् । शिष्यः शङ्कते **न चात्रेति** । कथं तत्र व्यभिचारः इति पाठः । नकारोऽधिको लेखकागतः । **प्रक्रमविरोधेति** । प्रक्रमे हि केवलभौतिकत्वे प्रमाणाभावे उक्ते सति तत्रैव प्रमाणाशङ्कनस्य सङ्गतत्वेऽपि





तदन्यत्र तच्छङ्कने सिद्धान्त्युक्तानाक्षेपात् आशङ्कायाः वैय्यर्थ्यमेव स्यात् इति भावः । पृथिव्यादिरूपादीत्यत्र पृथिवीगन्धयोः रसनरसयोः इत्येवं सन्निकर्षस्य पृथिवीगन्धादिनिरूप्यत्वसद्भावेऽपि पृथिवीरूपयोः तेजोगन्धयोः इत्येवं पृथिवीरूपादिनिरूप्यत्वाभावात् यथाश्रुतार्थयोजनायोगः इत्यतः प्रकारान्तरद्वयेन एतत् योजितम् । अत्र च पक्षद्वये यथाश्रुतसम्बन्धपरित्यागो न भवतीत्यपरितोषात् प्रथमयोजनायामिव रूपव्यञ्जकेन सन्निकर्ष इत्यादिकमेवार्थमाश्रित्य पृथिवीरूपव्यञ्जकसन्निकर्षे पृथिवीव्यञ्जकसन्निकर्षे इत्यादिकमर्थलाभं चाश्रित्य योजयति **अथ चक्षुरित्यादिना** । अत्र च पक्षे पृथिवीत्यादिपदोपादितजलस्य रूपव्यञ्जकप्रदीपेन सन्निकर्षस्पर्शाव्यञ्जकत्वे सति इत्यादिहेतुमति जलतेजकार्यतया तेजोमात्रकार्यत्वाभावात् व्यभिचार इत्यादिरूपेण पृथिवीत्यादिपदं योजनीयं इति तात्पर्यात् नादिपदसङ्ग्राह्यकथनाशङ्कावकाश इति बोध्यम् ।

**स०व्र०— किं चेति** । पार्थिवमित्यनेन पृथिवीकार्यमुच्यते । तच्च पृथिवीत्वरूपजातिमदपि दृष्टमिति तदनुसारेण आद्यः कल्पः । पृथिवीत्वजातिराहित्येऽपि तत्कार्यमात्रेणापि पार्थिवं तद्गुणादि दृष्टम् । अतः तदनुसारेण द्वितीय इति विकल्पाभिप्रायः । तत्राद्यं निराकरोति **तत्तत्सन्निकर्षैरिति** । गन्धघ्राणसन्निकर्षे रसाव्यञ्जकत्वे सति गन्धव्यञ्जकत्वे सत्यपि पृथिवीत्वजातिमत्त्वाभावादित्यर्थः । एवं सन्निकर्षान्तरेऽपि व्यभिचारो बोध्यः । न च द्रव्यत्वेन हेतुविशेषणात् न सन्निकर्षैः व्यभिचार इति वाच्यम् । तावतापि चर्मादिगन्धव्यञ्जकजलादौ व्यभिचारानिस्तारात् । द्वितीयं दूषयति **पृथिव्यादिकार्यतासाधन इति** । **पृथिव्यादिरूपादिव्यञ्जकसन्निकर्षेष्विति** । रसनमाप्यमित्यत्र गुडनिष्ठरसव्यञ्जकसन्निकर्षे रूपाव्यञ्जकत्वे सति रसव्यञ्जकत्वेऽपि रसलक्षणगुणकार्यत्वस्यापि सत्त्वेन तन्मात्रकार्यत्वाभावेन तत्र व्यभिचारात्, गन्धघ्राणसन्निकर्षे गन्धव्यञ्जकत्वे सत्यपि पृथिवीमात्रकार्यत्वाभावात् चक्षुरूपसन्निकर्षे सत्यपि रूपव्यञ्जकत्वे तेजोमात्रकार्यत्वाभावात्, स्पर्शव्यञ्जकसन्निकर्षे स्पर्शव्यञ्जकत्वे सत्यपि वायुमात्रकार्यत्वाभावात्, व्यभिचारः इत्यर्थः । वस्तुतस्तु पृथिव्यादिरूपादिव्यञ्जकैः सह ये सन्निकर्षास्तेषु इत्यर्थः । चक्षुस्तेजोमात्रकार्यमित्यत्र पृथिव्यास्तद्रूपव्यञ्जकप्रदीपेन सह सन्निकर्षे पृथिवीदीपकार्यत्वेन तैजसमात्रत्वाभावात् व्यभिचारः । तथा घ्राणं पृथिवीमात्रकार्यमित्यत्र चर्मणस्तद्गन्धव्यञ्जकजलेन सह सन्निकर्षे पृथिवीजलकार्यत्वेन पृथिवीमात्रकार्यत्वाभावात् व्यभिचारः । रसनं अम्मात्रकार्यमित्यत्र शाकादेस्तद्रसव्यञ्जकलवणादिना सन्निकर्षे पृथिवीमात्रकार्यत्वेन अम्मात्रकार्यत्वाभावात् व्यभिचारः । त्वगिन्द्रियं वायुमात्रकार्यमित्यत्र चन्दनादेः स्पर्शव्यञ्जककर्पूरादिना सह सन्निकर्षे पृथिवीमात्रकार्यत्वेन वायुमात्रकार्यत्वाभावात् व्यभिचारः । रूपादित्वेन ग्रहणं स्पष्टप्रतिभासत्वाभिप्रायेणेति द्रष्टव्यम् ।

**विठ्ठल०— पार्थिवादिपदैरिति** । पार्थिवमित्यादिपदैः पृथिव्यादिजात्यभिमाने घ्राणगन्धादिसन्निकर्षैरनैकान्त्यमित्यर्थः । इन्द्रियत्वेन विशेषणान्नोक्तसन्निकर्षेष्वनैकान्त्यमित्यत आह **इन्द्रियत्वेनेति** । **पृथिव्यादिरूपादीति** । पृथिव्यादिद्रव्येषु विद्यमानरूपरसादिव्यञ्जकचक्षुरादिसन्निकर्षेषु इन्द्रियतत्क्रियादिकार्यत्वस्यापि सत्त्वेन पृथिव्यादिमात्रकार्यत्वसाध्यस्याभावेऽपि स्पर्शाव्यञ्जकत्वे सति रूपव्यञ्जकत्वादित्यादिहेतोः सत्त्वाद्व्यभिचार इत्यर्थः ।





**१३५ सु०— अपि च । चर्मादिगन्धव्यञ्जकत्वं जलादेः, रसव्यञ्जकत्वं लवणादेः, रूपव्यञ्जकत्वमञ्जनादेः, स्पर्शव्यञ्जकत्वं कर्पूरादेरप्यस्तीति व्यभिचार एव (इति) ।**

**परि०**— ननु पृथिवीतरभूतादिकार्यत्वे सति पृथिवीकार्यत्वं पृथिवीमात्रकार्यत्वपदेन विवक्षितम्, अतो नोक्तदोष इत्यतोऽन्यत्र व्यभिचारमाह **अपि चेति** ।

**गु०दी०**— **चर्मादिगन्धव्यञ्जकत्वं जलादेः** इत्यत्र चर्मगन्धव्यञ्जनसमये रसाव्यञ्जकत्वस्यापि सत्त्वाद्व्यभिचार इत्यर्थः । **रसव्यञ्जकत्वं लवणादेः** इत्यत्र रसव्यञ्जकत्वं नाम शाकरसव्यञ्जकत्वम् । **स्पर्शव्यञ्जकत्वं कर्पूरादेः** इत्यत्र चन्दनरसस्थितशीतस्पर्शव्यञ्जकत्वमित्यर्थः ।

**यादु०**— **जलादेरिति** । न च तत्र रसाव्यञ्जकत्वरूपविशेषणत्वाभावात् कथं व्यभिचार इति वाच्यम् । जलस्य रसव्यञ्जकसन्निकर्षान्तर्गततया रसव्यञ्जकत्वेऽपि जलत्वेन तदभावात् । जलत्वावच्छिन्नधर्मिताकस्यैव व्यभिचारोदाहरणतया विवक्षितत्वात् । एवं लवणादेरपि न लवणादित्वेन रूपादिव्यञ्जकतेति ध्येयम् । लवणादेः शाकादिरसव्यञ्जकत्वम् । कर्पूरादेश्चन्दनादिशैत्यव्यञ्जकत्वं ज्ञेयम् ।

**वं०प०**— **चर्मादीति** । जलादेस्तद्गतगन्धव्यञ्जकत्वेऽपि तद्गतरसाद्यव्यञ्जकत्वमस्तीति सर्वत्र विशेषणभागो ज्ञेयः ।

**शे०वा०**— ननु गन्धादिव्यञ्जकद्रव्यत्वस्यैव हेतुत्वान्न सन्निकर्षेषु व्यभिचार इत्यतो माऽस्तु तर्हि व्यभिचारो घ्राणादेर्द्रव्यत्वासिद्ध्याऽसिद्धिस्तु स्यादेव । न च गन्धाद्युपलब्धेः करणजन्यत्वानुमित्या तत्सिद्धिः । अदृष्टेनार्थान्तरतया तदनवकाशात् । न च द्रव्यकरणिकेति साध्यम् । तथाऽपि शरीरेण सिद्धसाधनत्वात् । अथासाधारणकारणकत्वं साध्यमतो नादृष्टेनार्थान्तरतेति वाच्यम् । मनोजन्यत्वेनाप्युपपत्त्याऽर्थान्तरात् । न च मनसः साधारण्येनासाधारणत्वाभावान्नार्थान्तरत्वमिति वाच्यम् । मनसः साधारण्येऽपि सुखसाक्षात्कारासाधारणकारणत्ववदिहाप्यसाधारणकारणत्वस्याविरुद्धत्वात् । न च शरीरभिन्नत्वेन साध्यं विशेषणीयम् । तथा सति मनसा त्वचा वा सिद्धसाधनताप्रसङ्गात् । शरीरमात्रकारणकक्रियायां व्यभिचाराच्च । तथा च न करणजन्यत्वानुमित्या द्रव्यत्वसिद्धिरित्यसिद्धिः स्यादेव । अस्तु वा कथञ्चिद्द्रव्यत्वसिद्धिस्तथाऽपि न परस्येष्टसिद्धिः । न चोक्तव्यभिचारपरिहारात् कथं नेष्टसिद्धिरिति वाच्यम् । एकोदाहरणनिरासेऽपि वक्ष्यमाणरीत्याऽनेकस्य व्यभिचारोदाहरणस्य सत्त्वादित्याशयवानाह **अपि चेति** । चर्मादीत्यादिपदेन नवशरावादिसङ्ग्रहः । **जलादेरिति** । न च रसव्यञ्जकत्वाज्जलस्य तत्र रसाव्यञ्जकत्वे सतीति विशेषणाभावान्न व्यभिचार इति वाच्यम् । तथाऽपि गन्धव्यञ्जकरसाद्यव्यञ्जकजलव्यक्तौ व्यभिचारानिस्तारात् । यदत्रोक्तं वर्धमानकृता गन्धसाक्षात्कारासाधारणकारणतावच्छेदकद्रव्यत्वव्याप्यव्याप्यजातिमत्त्वं हेतुः । जलस्य गन्धव्यञ्जकत्वं तु जलत्वेनैव न तु





तद्व्याप्यजात्यन्तरेणेति द्रव्यत्वव्याप्यव्याप्यजातिमत्त्वविरहान्न व्यभिचारः । घ्राणे च द्रव्यत्वव्याप्यपृथिवीत्वव्याप्यघ्राणत्वरूपगन्धसाक्षात्कारासाधारणकारणतावच्छेदकद्रव्यत्वव्याप्यव्याप्यजातेः सत्त्वान्नासिद्धिरपीति । तच्चिन्त्यम् । द्रव्यत्वव्याप्यव्याप्यपदवैयर्थ्यात् । न च जले व्यभिचारवारणाय तदिति वाच्यम् । शीतलशिलानिष्ठायोग्यजलसम्बन्धेऽपि नवशरावगन्धानभिव्यक्त्या योग्यजलत्वोपाधेरेव तदवच्छेदकतया जातिपदादेव तद्वारणात् । न च गन्धत्वमादाय गन्धे व्यभिचारवारणाय तदिति वाच्यम् । अतीन्द्रियगन्धानभिव्यक्तः । तत्रापि गन्धविशेषत्वोपाधेरेव अवच्छेदकतया जातिपदेनैव तद्वारणसिद्धेः । द्वितीयव्याप्यपदस्य तथाऽपि व्यर्थत्वाच्च । न च जातिपदं धर्मपरमतो जल एव व्यभिचारवारणाय तदिति वाच्यम् । योग्यजलत्वस्य द्रव्यत्वव्याप्यजलत्वव्याप्यतया तथाऽपि व्यभिचारानिस्तारादिति दिक् । **रसव्यञ्जकत्वमिति** । शाकादिरसव्यञ्जकत्वमित्यर्थः । **स्पर्शेति** । कर्पूरादेः पृथिव्यादिशैत्यव्यञ्जकत्वमित्यर्थः ।

**वा०र०—** स्वारसाद्यव्यञ्जकत्वे सति गन्धव्यञ्जकद्रव्यत्वात् इति । रसाभिव्यञ्जकद्रव्यत्वस्य हेतोः विवक्षितत्वात् इत्यादिवर्धमानोक्तिं मनसि निधाय शङ्कते **ननु गन्धादिव्यञ्जकेति** । एतेन इन्द्रियाणामित्यादि वर्धमानग्रन्थे गन्धोपलब्धेः करणेत्यादिनानूदितं दूषणमाशङ्कते **न च गन्धाद्युपलब्धेरिति** । अदृष्टेनार्थान्तरतापरिहारमाशङ्कते **अथेति** । द्रव्यकरणकेति साध्ये शरीरेण सिद्धसाधनतापरिहारमाशङ्कते **न च शरीरे भिन्नत्वेनेति** । ननु गन्धसाक्षात्कारासाधारणतावच्छेदकद्रव्यत्वव्याप्यव्याप्यजातिमत्वेन पार्थिवत्वं साधयता वर्धमानेन द्रव्यत्वव्याप्यव्याप्यजातिमत्वेन एव द्रव्यत्वस्यापि सिद्धिः अभिप्रेतेति तत एव द्रव्यत्वसिद्धिः स्यात् इत्यस्वरसादाह **अस्तु वेति** । वर्धमानोक्तानुमानस्याशङ्क्य निराकरिष्यमाणत्वेन साधकत्वमिति सूचयितुं कथञ्चित् इत्युक्तम् । यद्वा गन्धसाक्षात्कारेत्यादि वर्धमानोक्तं अनुवदति **यदत्रोक्तमिति** । घ्राणे व्यभिचारवारणायासाधारणपदमिति ज्ञेयम् । ननु द्रव्यत्वव्याप्यपदं व्यर्थं इत्यादि रुचिदत्तानुसारेण दूषयति **द्रव्यत्वव्याप्यव्याप्येति** । यद्यपि द्रव्यत्वव्याप्येत्यंशवैयर्थ्यमेव रुचिदत्तेनोक्तम् । गन्धे व्यभिचारपरिहाराय द्रव्यत्वव्याप्यपदमिति अङ्गीकारं प्रदूष्य तथापि द्वितीयं व्याप्यपदं व्यर्थमेवेत्यभिधानेन द्वितीयव्याप्यपदपरित्यागेनैव शङ्काप्रवृत्तेः तथापि प्रथमतो वैयर्थ्यशङ्कावसरे द्वितीयव्याप्यपदस्य प्रयोजनाभावे निश्चिते सति द्रव्यत्वव्याप्येत्येकव्याप्यपदान्तर्भावो न परस्य युक्तः इत्याशयेन गन्धे व्यभिचारपरिहारार्थत्वनिवारणाय प्रवृत्तस्य द्वितीयव्याप्यपदवैयर्थ्यं स्यादेव । इत्युक्तिस्तु समानैवेत्याशयेन व्याप्यपदद्वयस्यापि उपादानमिति द्रष्टव्यम् । **योग्यजलत्वोपाधेरेवेति** । तत्रेति शेषः । जले करणतावच्छेदकतयेत्यर्थः । ननु पार्थिवत्वानुमाने कुंकुमगन्धाभिव्यञ्जककुक्कुटोच्चारो दृष्टान्तीकृतः किरणावलीकृता । तत्र रसादीत्यादिपदोपात्तरूपव्यञ्जकतया रसाद्यव्यञ्जकत्वाभावात् । किन्तु चम्पकाधिकरणवत् साधिकरणचित् तद्द्रव्यमेव दृष्टान्त इति वर्धमानेनोक्त्वा यद्वेत्यनेन कुक्कुटोच्चारसाधारण्याय हेतुः कृतः । तत्र जातिपदस्य जातिपरत्वेऽयोग्यगन्धसम्बन्धेन गन्धानभिव्यक्त्या कुक्कुटोच्चारादिनापि गन्धव्यक्तौ योग्यताघटितोपाधेरेव गन्धसाक्षात्कारे कारणतावच्छेदकत्वेन जातेः तदवच्छेदकत्वभावेन तादृशजातिमत्वस्य दृष्टान्तेऽभावात् साधनवैकल्यं स्यादेव । ततो धर्ममात्रपरमेव जातिपदम् । न च कुक्कुटोच्चारादिगतजातेः योग्यसङ्ख्या-





नभिव्यङ्ग्यत्वमिति वाच्यम् । द्रव्यत्वादिवत् बाधकाभावेन द्व्यणुकादिवृत्तित्वस्यापि सत्त्वात् । ततो जले व्यभिचारवारणाय द्रव्यत्वव्याप्यपदमिति चेत्, न । तावता जले गन्धसाक्षात्कारकारणतावच्छेदकधर्मवत्वमादाय व्यभिचार एव उक्तः । तथा च न तत्परिहारो द्रव्यत्वव्याप्यव्याप्यपदेन । द्रव्यत्वव्याप्यजलत्वव्याप्यत्वं योग्यजलत्वस्यास्तीति तदादाय व्यभिचारतादवस्थ्यम् । न च व्याप्यान्तरस्य द्रव्यत्वसाक्षाद्व्याप्यजात्यघटितद्रव्यत्वपरत्वात् । योग्यजलत्वस्य च तादृशजातिघटितत्वात् न व्यभिचार इति वाच्यम् । तथापि तैजसादिशरीरनासापुटे व्यभिचार एव इत्याशयेनाह **दिगिति** ।

**॥ इति प्रत्यक्षद्वैविध्यस्य विवरणम् ॥**

* * *

**॥ अथ प्रत्यक्षद्वैविध्यस्य प्रकारदर्शनम् ॥**

१३६ **सु०—** इन्द्रियद्वैविध्यस्य प्रमितत्वमुक्तम् । तत्कथमित्यत आह **शुद्धमिति ।**

## अनु०— शुद्धमीशरमामुक्तेष्वन्यत्र प्राकृतैर्युतम् ॥

प्राक् प्रसिद्धितारतम्यमपेक्ष्योद्देशोऽपि प्राधान्यतारतम्यापेक्षयोपपादनमिति द्रष्टव्यम् । **अन्यत्र** संसारिषु । **प्राकृतैः** अक्षैः **युतं शुद्धम्** अस्तीत्यर्थः ।

अयमभिसन्धिः । उपपादयिष्यते हीशरमामुक्तानामक्षवत्ता । न च तदक्षं प्राकृतमिति युक्तम्, निर्गुणत्वादिश्रुतिस्मृतिविरोधात् । ततस्तच्छुद्धचैतन्यमेव भवितुमर्हति ॥ संसारिषु चाक्षवत्ता सुप्रसिद्धा । न च तन्मुक्तावक्षप्रतिपादकप्रमाणबलायातं शुद्धमेवास्त्विति युक्तम्, संसारेऽपि सम्यग्ज्ञाननियमाद्यापत्तेः । अतस्तत्र प्राकृतं शुद्धं चेति द्विविधमप्यस्तीति स्वीकार्यम् ॥ ततः सिद्धमुक्तरूपाक्षद्वैविध्यमिति ।

परैरीशलक्ष्म्योः लीलाविग्रहग्रहण(।)मङ्गीकारिभिः तदक्षस्य प्राकृतत्वमङ्गीक्रियते, तान्प्रति किं वादान्तरेणेति **मुक्तग्रहणम्** । स्वमते मुक्तानां लीलाविग्रहस्वीकारात् । किमन्यदाऽपीन्द्रियोपपादनायासेनेति **ईशरमेति** ।

**परि०—** उद्देशोपपादनयोः व्युत्क्रमे बीजमाह **प्रागिति** । प्रसिद्धाप्रसिद्धयोः प्रसिद्धं पूर्वमिति प्रसिद्धतारतम्यानुरोधेनेत्यर्थः । 'आनन्दमय इत्यादिनाऽध्यायेने'त्यत्रानन्दमयनये अभिहितयतिभङ्ग-





समाधानवदिहापि तत्सुज्ञानमिति पुनरिह नोक्तम् । कथमनेन प्रमितत्वोपपादनमित्यत आह **अयमभिसन्धिरिति । उपपादयिष्यत इति ।** 'मनोबुद्ध्यङ्गितां विष्णोः' इत्यादिना पाशुपतनये । चतुर्थस्य द्वितीयपादे वाद्यन्तरोक्तमुक्तिस्वरूपखण्डनानन्तरं स्वाभिमतमुक्तिस्वभावोक्तिप्रस्तावे चेति भावः । **निर्गुणत्वादिश्रुतीति ।** 'साक्षी चेता केवलो निर्गुणश्चे'ति । 'यो गुणैस्सर्वतो हीनः सर्वदोषविवर्जितः' इत्यादयो हरौ । रमायां तु 'कामादितरत्रे'त्यादौ भाष्योक्तनित्यमुक्तत्वश्रुत्यादयः । मुक्तेषु 'चिन्मात्राणीन्द्रियाण्याहुर्मुक्तानामि'त्यादयः । 'न वर्तते यत्र रजस्तमस्तयोः सत्त्वं च मिश्रम्' इत्यादिस्मृतिस्तद्विरोध इत्यर्थः । **अक्षप्रापकप्रमाणेति ।** 'श्यामावदाताः शतपत्रलोचना' इत्यादि-प्रमाणेत्यर्थः । **उक्तेति ।** 'प्राकृतं शुद्धचैतन्यमि'त्युक्ताक्षेत्यर्थः । ईशादित्रितयोक्तेः कृत्यमाह **परैरिति । किं वादान्तरेणेति ।** शुद्धमक्षं तयोरस्तीति प्रस्तुतवाचं विना लीलाविग्रहो नास्तीति समर्थनपरवादान्तरेण किमिति भावेन विप्रतिपन्नेशरमास्थलं त्यक्त्वा मुक्तरूपस्थलान्तरमुपात्तम् । तत्र परैर्लीलाविग्रहानङ्गीकारादिति भावः । तर्हि मुक्तेष्वित्युक्त्यैवालमित्यत आह **स्वमत इति ।** 'भावं जैमिनिर्विकल्पान्मानात्' इत्यत्र चतुर्थे वक्ष्यमाणदिशा कदाचिल्लीलाविग्रहस्वीकारेण तदेन्द्रियवत्त्वस्य अविप्रतिपन्नत्वेऽपि तादृशदेहानुपादानदशायामपीन्द्रियमस्तीत्युपपादनायासेन किमित्यतः तदनुपपाद्य, कदाचिल्लीलाविग्रहवत्त्वं नेति सिद्धान्तिनाङ्गीकृतेशरमारूपस्थलान्तरं स्वमताभिप्रायेणोपात्तमित्यर्थः ।

**गु०दी०— मुक्तग्रहणम्** इत्यत्र कदाचिन्मुक्तानां प्राकृतेन्द्रियरहितत्वे किं नित्यमुक्तयोरीशरमयो-रित्यस्यार्थस्य व्यधिकरणेनापि मुक्तत्वेन लाभादिति भावः । उपलक्षणं चेदम् । ईशपदेनातिसामर्थ्यसूचना-द्रमापदेन च सदा रमत इत्यर्थसूचनात् प्राकृतेन्द्रियवत्त्वं न युक्तिमदिति च द्रष्टव्यम् । न लीलयाऽपि राजा वह्नौ प्रविशति अमेध्यं वा भक्षयति । **ईशरमेति** इत्यत्र मुक्तत्वाविशेषादीशवद्रमावच्च शुद्धेन्द्रियस्यापि सिद्धेरिति भावः । इदं चोपलक्षणम् । अनिष्टरूपसंसारान्मुक्तानामनिष्टदायकस्वभावलीलाविग्रहस्य सदा ग्रहणायोगेनान्यदपि मौक्तस्रक्चन्दनवनितादिभोगहेतुभूतशुद्धेन्द्रियस्यापि कथं न सिद्धिः । 'स्वेन रूपेणाभिनिष्पद्यते स तत्र पर्येति जक्षन् क्रीडन् रममाण' इति श्रुतेः । कदाचिद्ग्रहणं तु ईशरमासाम्यनिवृत्त्यर्थं तत्प्रेरणयेत्यपि द्रष्टव्यम् । 'न खलु भगवतः प्राकृतो जातु देह' इत्यभियुक्तवचनात् तस्यैव हि स महिमा । कदाचिद्ग्रहणे तु न दुःखस्याव-काशः । न हि सदा आतपसेविनीव कदाचित् शीतनिवृत्त्यर्थं बालातपसेविन्यपि दुःखम् ।

**यादु०—** प्राकृतस्यैव प्रथममुद्दिष्टत्वात् तदुपपादनमेवादौ कार्यमित्याशङ्क्याह **प्राक् प्रसिद्धीति । उपपादयिष्यत इति ।** पाशुपताधिकरणे 'मनोबुद्ध्यङ्गतां विष्णोर्लक्षयामो य एव सः' इत्यादिनेशस्य, चतुर्थेऽध्याये रमामुक्तानां च 'श्रीर्यत्र रूपिण्युरुगायपादयोः करोति मानं बहुधा विभूतिभिः । श्यामावदाताः





शतपत्रलोचनाः पिशङ्गवस्त्राः सुरुचः सुपेशसः । सर्वे चतुर्बाहवः' इत्यादिना अक्षवत्ता उपपादयिष्यत इत्यर्थः । **किमन्यदाऽपीति** । लीलाविग्रहस्वीकाराभावदशायामपीत्यर्थः ।

**वं०प०— आयातमिति** । मुक्तौ विद्यमानस्यैवाभिव्यक्तेरागन्तुकधर्माभावादित्यर्थः । **मुक्ताग्रहणमिति** । कदाचिन्मुक्तानां प्राकृतेन्द्रियरहितत्वे किं नित्यमुक्तयोरित्यर्थो ज्ञेयः । उपलक्षणं चैतत् । ईशपदेन अतिसमर्थत्वसूचनात्, रमापदेन च सदा रमन्त इत्यर्थसूचनात् प्राकृतेन्द्रियवत्त्वं न युक्तिमत् । न हि लीलयापि राजा वह्नौ प्रविशति, अमेध्यं वा भक्षयति इति द्रष्टव्यम् । **ईशरमेतीति** । मुक्तत्वाविशेषात् ईशवत् रमावच्च शुद्धेन्द्रियस्यापि सिद्धेरिति भावः ॥ इदमप्युपलक्षणम् । अनिष्टरूपसंसारान्मुक्तानाम् अनिष्टदायकस्वभावलीलाविग्रहस्य सदा ग्रहणायोगात् । कदाचिद्ग्रहणं तु ईशरमासाम्यनिवृत्त्यर्थम्, तत्प्रेरणया इत्यपि द्रष्टव्यम् ।

**कं०रा०—** ननु प्राकृतं शुद्धचैतन्यमित्युद्देशसमये प्राकृतस्याक्षस्य प्रथममुद्देशः कृतः । शुद्धमीशरमामुक्तेष्वित्युपपादनसमये न शुद्धस्योपपादनं क्रियते । किमत्र नियामकमित्यत आह **प्रागिति** । **निर्गुणत्वेति** । ईशरमामुक्तानां सत्त्वरजस्तमोगुणराहित्यादिप्रतिपादकश्रुतिस्मृतिविरोधादित्यर्थः ।

**शे०वा०— उक्तमिति** । पूर्ववाक्ये मतमित्यनेनेति शेषः । ननु प्राकृतशुद्धचैतन्ययोरुद्देशक्रमानुसारेणैवोपपादनमुचितं तत्कुतोऽत्रोद्देशोपपादनयोः क्रमव्यत्यास इत्यतः क्रमद्वयं निमित्तोपदर्शनेनोपपादयति **प्रागिति** । प्राकृतं शुद्धचैतन्यमित्यत्रेत्यर्थः । प्रसिद्धितारतम्यापेक्षया प्राधान्यतारतम्यस्याभ्यर्हितत्वादिति भावेनापीत्युक्तम् । नन्वीशादेरक्षवत्त्वस्यैवासिद्धेः सिद्धौ वा तस्य प्राकृतत्वेनाप्युपपत्तेर्न तदक्षस्य शुद्धत्वं, संसारिष्वपि तदसिद्धेः सिद्धौ वा मुक्तानामिव शुद्धेनैवोपपत्तेः कुतोऽक्षद्वैविध्यमित्यत आह **अयमभिसन्धिरिति** । **उपपादयिष्यते हीति** । **विकरणत्वान्नेति चेत्तदुक्तम्** इत्यादिनाऽत्रैव पादे पाशुपताधिकरणे च 'न चैतदखिलं विष्णौ श्रुतिप्रामाण्यगौरवात् । मनोबुद्ध्यङ्गितां विष्णोर्लक्षयाम' इत्यादिना चेशस्य, चतुर्थस्य द्वितीये च 'न वर्तत' इत्यादिना च रमामुक्तानामक्षवत्तोपपादयिष्यत इत्यर्थः । **सम्यगिति** । संसारिणामुत्तममध्यमाधमभेदभिन्नत्वात् त्रिविधानामपि प्रमातृस्वरूपभूतेन्द्रियमात्रवत्त्वे, उत्तमानां स्वरूपेन्द्रियस्य निर्दोषत्वनियमेन तज्जन्यज्ञानस्य सम्यक्त्वनियमस्य आदिपदेन च मध्यमजीवसम्बन्धिचैतन्यस्य निर्दोषत्वसदोषत्वोभयत्वेन तज्ज्ञाने सम्यगसम्यक्त्वस्य, अधमजीवसम्बन्धिचैतन्यस्य सदोषत्वनियमेन तज्ज्ञानेऽसम्यक्त्वनियमस्य चापत्तेरित्यर्थः । नन्वीशलक्ष्म्योरक्षवत्तामात्रेण मुक्तानामक्षवत्तामात्रेण वा शुद्धाक्षसिद्धिसम्भवात् किमुभयग्रहणेनेत्यतो मुक्तग्रहणप्रयोजनं तावदाह **परैरिति** । नन्वशरीरत्ववादित्वात् परमतेऽक्षवत्त्वमेव नास्ति । तत्कथं तस्य प्राकृतत्वाङ्गीकारोदाहरणमित्यतो लीलेत्यादि हेतुगर्भं विशेषणम् । **किं वादान्तरेणेति** । इदानीमिति शेषः । उत्तरत्र प्राकृतदेहग्रहणनिरासेन तदक्षस्य प्राकृतत्वस्यापि निरस्तत्वात् । **मुक्तग्रहणमिति** । मुक्तानां परैर्लीलाविग्रहग्रहणानङ्गीकारान्न तदक्षस्य प्राकृतत्वशङ्कावकाश इति भावः । तर्हि मुक्तग्रहणमेवास्तु किमीशलक्ष्मीग्रहणेनेत्यतस्तत्कृत्यमाह **स्वमत इति** । **स्वीकारादिति** । 'स्वेच्छया वा शरीराणि तेजोरूपाणि





कानिचित् । स्वीकृत्य जागरितवद् भुक्त्वा त्यागः कदाचन' इत्यादिप्रमाणबलादिति शेषः । **अन्यदेति** । लीलाविग्रहाभावदशायामित्यर्थः । **इन्द्रियेति** । अत्रापीदानीमिति शेषः । स्वावसरे तस्यापि समर्थनात् ।

**वा०र०— सम्यक्त्वनियमस्येति** । उत्तमानां इन्द्रियान्तराभावे यावन्ति तेषां ज्ञानानि तावन्ति सर्वाण्यपि स्वरूपेन्द्रियेणैव उत्पद्यन्ते इत्यङ्गीकार्यम् । ततश्च तेषां सम्यक्त्वनियमापत्त्या अयथार्थज्ञानं तेषां न स्यात् इत्यर्थः । एवं अधमसम्बन्धिचैतन्यस्यापि सदोषत्वनियमेनाधमज्ञानमात्रस्य तज्जन्यत्वे अयथार्थत्वापत्त्या घटादिज्ञानानामपि तदीयानां अयथार्थत्वापातात् इत्यर्थो द्रष्टव्यः । यद्यपि मध्यपक्षेनायं दोषः प्रसरतीति नोदाहर्तव्यता तथापि तेषां स्वरूपेन्द्रियजन्यज्ञानातिरिक्तघटादिज्ञानेषु यथार्थत्वायथार्थत्वविभागोपपत्तये प्राकृतेन्द्रियजन्यत्वमेवाङ्गीकार्यं इति वक्तुं तदभिधानम् । अत एव तस्य मध्येऽभिधानम् । तेन पूर्वत्र उत्तरत्र च प्राकृतेन्द्रियसिद्धौ मध्ये तत्सिद्धिः सम्भवतीति भावः । **उभयेति** । कोटिद्वयेत्यर्थः । अशरीरवादित्वात् इति ईशलक्ष्म्योरिति वर्तते परेषामपि लब्धम् । परमत इत्युक्तत्वात् । तथा च परेषां तयोः अशरीरत्वाङ्गीकारादित्यर्थः । परमतः इत्यतः परे ईशलक्ष्म्योरिति वर्तते । तस्येत्यस्य तदक्षरस्येत्यर्थः । मुक्तस्थले तदक्षस्येति वक्ष्यति च । **अङ्गीकारोदाहरणमिति** । प्राकृताक्षं ईशलक्ष्म्योः परैरङ्गीकृतमस्तीति तदक्षस्य प्राकृतत्वाङ्गीकारस्थलत्वेन कीर्तनमित्यर्थः । प्राकृतत्वाङ्गीकारे सिद्धे हि प्राकृताक्षेणैव उपपत्तौ शुद्धेन्द्रियकल्पनावैय्यर्थ्यम् । इत्येतच्छङ्कावकाशो नान्यथेति भावः । **उत्तरत्र प्रकृतेति** । अनेन वादान्तरेणेत्यस्य ईशलक्ष्म्योः प्राकृतदेहग्रहणनिरासेन तदक्षस्य प्राकृतत्वस्यापि निरासेनेत्यर्थः सूचितो भवति । **प्राकृतत्वशङ्कावकाश इति** । प्राकृतमेव मुक्तानां अक्षमस्तु किं शुद्धेन इति शङ्केत्यर्थः । **बलादिति शेषः इति** । तथा च स्वमते मुक्तानां लीलाविग्रहाङ्गीकारात् । तद्विग्रहग्रहणदशायां प्राकृताक्षस्यापि अङ्गीकार्यत्वात् तेनैवाक्षेण उपपत्तौ किं शुद्धेनेति शङ्कावकाश इति भावः । तेजोरूपाणि शरीराणि कथं प्राकृतानीति चेत् । मुक्तावपि ज्ञानोत्तरकर्मासादितानन्दातिशयसिद्ध्यर्थं भगवानेव शुद्धसत्त्वमुपादानीकृत्य विषयान् उत्पाद्य आनन्दं ददातीत्यादि प्रमेयस्य सिद्धान्ते सत्त्वेन शुद्धसत्त्वेनोक्तशरीराणां उत्पत्तिसम्भवात् इत्यादि ज्ञेयम् । द्वितीयाध्यायगीताभाष्यटीकाप्रपञ्चेऽस्माभिः निरूपितमेतत् । **दशायां इत्यर्थ इति** । विग्रहग्रहणदशायामपि न वर्ततेत्यत्र रजः इत्यादिप्रमाणे इन्द्रियवत्तामात्रप्रतीयमानतयाऽन्यद् शुद्धसिद्धौ न प्राकृतमेव मुक्ताक्षं इत्येवं अन्यदेन्द्रियसद्भावोपपादनं कार्यम् । परन्तु इदानीं तदायासेन किं उक्तईशलक्ष्म्योः उक्तविग्रहग्रहणाभावेन शुद्धेन्द्रियस्य एव तयोरङ्गीकारात् प्राकृताक्षप्रसक्तिशून्यतया प्राकृताक्षमेव तयोरस्तु इति शङ्कावकाशाभावात् तयोरेव शुद्धाक्षवत्वोदाहरणमस्तु इति भावेन तद्ग्रहणमित्यर्थः ।

**स०व्र०— प्रागिति** । प्राकृतं शुद्धचैतन्यमित्यत्रेत्यर्थः । ननु ईशरमाग्रहणेनैव शुद्धचैतन्यस्य प्रमितत्वस्य साधयितुं शक्यत्वात् मुक्तग्रहणं व्यर्थमित्यत आह **परैरिति** । अयं भावः । यदि; ईशरमयोरक्षवत्ता प्रमाणसिद्धा, न च तदक्षं प्राकृतम् इति युक्तम्, निर्गुणत्वादिश्रुतिस्मृतिविरोधात्, ततस्तच्छुद्धचैतन्यमेव भवितुमर्हतीति, परं प्रति साध्यते, तदा परो वदिष्यति । अस्तु ईशरमयोरक्षवत्त्वम् । तथापि तयोः





लीलाविग्रहवत्वसत्त्वात् प्राकृतमेव किं न स्यात् । एवं च शुद्धचैतन्यं नाङ्गीकर्तव्यमिति । तदैवं वक्तव्यम् । तयोः लीलाविग्रह एव नास्तीति । तथात्वे वादान्तरं नाम निग्रहस्थानं स्यात् । मुक्तेषु लीलाविग्रहवत्त्वस्यानङ्गीकृतत्वेन तत्रैवं वक्तुमशक्यत्वात् सार्थकं मुक्तग्रहणमिति । ननु तथात्वे मुक्ते ईशरमाग्रहणं व्यर्थमित्यत्र आह **स्वमते त्विति** । मुक्तानां लीलाविग्रहवत्त्वसत्त्वात् प्राकृतमेव किं न स्यादिति विशिष्योक्ते तं प्रति लीलाविग्रहाभाव-दशायामपि इन्द्रियसत्त्वेन प्राकृतत्वं वक्तुं न शक्यते इत्युपपादने बह्वायासः स्यात् । ईशरमयोस्त्वेवं वक्तु-मशक्यत्वेन तद्ग्रहणं सार्थकमिति भावः ।

**विठ्ठल०**— कथमनेनेन्द्रियद्वैविध्यस्य प्रमितत्वोपपादनं प्रमाणानुपन्यासादित्यत ईशादिपदसूचितां युक्तिमाह **अयमभिसन्धिरिति** । **उपपादयिष्यत इति** । मनोबुद्ध्यङ्गिनां विष्णोरित्यादाविति भावः । **श्रुति-स्मृतीति** । यो गुणैस्सर्वतोहीन इत्यादयो हरौ । रमायां तु कामादितरत्रेत्यादौ भाष्योक्तश्रुत्यादयः । चिन्मात्राणीन्द्रियाण्याहुर्मुक्तानामित्यादीत्यर्थः । **सम्यज्ज्ञाननियमादी**त्यादिपदेन तत्कार्यरागादिदोषभावग्रहणम् । ईशादितृतयोक्तेः कृत्यमाह **परैरिति** । **किं वादान्तरेणेति** । शुद्धमक्षं तयोरस्तीति प्रस्तुतभावं विना लीलाविग्रहो नेति समर्थनपरवादान्तरेऽप्येति भावेन परं प्रति विप्रतिपन्नमीश्वरमास्यत्वमपहाय लीलाविग्रहरहितत्वेन पराभि-मतमुक्तरूपस्थलान्तरमुपात्तमिति भावः । तर्हि मुक्तेष्वित्येवालमित्येतच्चतुर्थाध्यायानुव्याख्यानदिशा स्वमते मुक्तानां कदाचिल्लीलाविग्रहाङ्गीकारात् तदनुपादानदशाया शुद्धेन्द्रियोपपादनायासेन किमिति लीलाविग्रहरहिततया सम्प्रतिपन्नेशादिस्थलान्तरोपादानं कृतमित्याशयेनाह **स्वमत इति** ।

**चषकः**— **उपपादयिष्यत इति** । पाशुपतनये 'मनोबुध्यङ्गतां विष्णोर्लक्षयामो य एव स' इत्या-दिनेशस्य, तुरीयेऽध्याये रमायाः मुक्तानां च 'श्रीर्यत्र रूपिण्युरुगायपादयोः', 'श्यामावदाता' इत्यादिना अक्षवत्तोपपादयिष्यते इत्यर्थः । **अन्यदापि** लीलाविग्रहस्वीकाराभावदशायामपि ।

**॥ इति प्रत्यक्षद्वैविध्यस्य प्रकारदर्शनम् ॥**
**॥ इति प्रत्यक्षविभागः ॥**

* * *

**॥ अथ विभिन्नेष्वक्षेषु सदोषनिर्दोषत्वविवेकः ॥**
**॥ अथ स्वरूपेन्द्रियस्य निर्दोषतानियमः ॥**
**॥ अथ प्राकृतेन्द्रियस्य निर्दोषसदोषोभयरूपता च ॥**

१३७ **सु०**— किमतो यद्येवमक्षद्वैविध्यमित्यत आह **निर्दोषमेवेति** ।

**अनु०— निर्दोषमेव चैतन्यमन्यत्रोभयमिष्यते ।**

**तत्रोत्तमजीवसम्बन्धिचैतन्यम् अक्षं निर्दोषमेव** इत्यर्थः । **अन्यत्रापि निर्दोषता-सद्भावादेवेत्युक्तम् । अन्यत्र** मध्यमजीवसम्बन्धिचैतन्ये, सर्वत्र प्राकृते चाक्षे निर्दोषत्वं सदोषत्वं च **उभयं** कालादिभेदेन **इष्यते** । अधमसम्बन्धिचैतन्ये तु सदोषत्वमेवेति शेषः । **इष्यते प्रामाणिकैः** इत्यनेन आगमं कार्यलिङ्गकमनुमानं चात्रार्थे दर्शयति । यावदत्र सदोषमुक्तं तन्निर्दोषग्रहणव्यवच्छेद्यमिति भावः ।

**परि०— कालादिभेदेनेति** । एकदा विरोधात् कालदेशभेदेनेष्यत इत्यर्थः । मध्यमानां मिश्रज्ञानत्वेन तदभिव्यञ्जकस्य तथात्वात् प्राकृतेन्द्रियाणां द्विविधज्ञानहेतुत्वादिति भावः । **सदोष-त्वमेवेति** । तेषां ज्ञानस्य धर्म्यंशे यथार्थत्वेऽपि तद्गतत्वसत्यत्वपरतन्त्रत्वादिषु धर्मेषु केवलं मिथ्याज्ञानत्वेन तद्व्यञ्जकेन्द्रियस्य सदोषत्वनियमादिति भावः । **आगममिति** । सात्त्विकराजस-तामसबुद्धिस्वरूपकीर्तनपरचरमाध्यायगीतादिवाक्यरूपमागमम् । **कार्यलिङ्गकमिति** । तत्त्वज्ञानमिश्र-ज्ञानमिथ्याज्ञानरूपकार्यलिङ्गकमित्यर्थः ।

**गु०दी०— सदोषत्वमेवेति भाव** इत्यत्र परापरतत्त्वविषये सदोषत्वम् । अन्यथा रावणकुम्भकर्णा-दीनां वरप्राप्तसुखानुभवः रामशरघातजदुःखानुभवश्च संसारेऽपि न स्यात् । अन्धे तमसि च पूयासृङ्मूत्रविष्ठादिना पञ्चेन्द्रियाणामपि दुःखदायककूपे निपतनेनास्त्रशस्त्रविघातेन क्षुत्पिपासादिना च सर्वदाऽऽक्रोशमानानां शाश्वत-दुःखानुभवोऽपि न भवेत् । तदभावे तु तमसः अनिष्टताऽपि न स्यादित्याद्यूहनीयम् ।

**यादु०— सदोषत्वमेवेति** । न चैवमधमानां मुक्त्यनन्तरं स्वरूपदुःखानुभवोऽप्ययथार्थः स्यात् । ततश्च तस्यापुरुषार्थताभङ्ग इति वाच्यम् । दुःखस्वरूपांशे यथार्थत्वेऽपि तस्येश्वराद्यधीनत्वादिप्रकारांशे अयथार्थत्वसम्भवात् । अत एवोक्तं पद्धतौ 'अधमानां स्वरूपेन्द्रियं स्वरूपमात्रे यथार्थमेव । प्रकारे त्वयथार्थमि'ति । एवमेव 'सर्वार्थान्विपरीतांश्चे'त्येतदपि प्रकारांशमादायैव नेयम् । **कार्यलिङ्गकमिति** । संवादि-विसंवादिप्रवृत्तिरूपकार्यलिङ्गकमित्यर्थः ।

**वं०प०— अन्यत्रापीति** । मध्यमजीवसम्बन्धिचैतन्यस्योभयरूपत्वेन निर्दोषतासद्भावादित्यर्थः । **सर्वत्रेति** । उत्तमजीवेषु शुद्धचैतन्यातिरिक्ते प्राकृतेऽक्षे मध्यमेष्वपि चैतन्ये प्राकृते चाक्षे इत्यर्थः ।

**कं०रा०— अन्यत्रापीति** । निर्दोषत्वसदोषत्ववति मध्यमजीवसम्बन्धिन्यक्षेऽपि निर्दोषत्वसद्भावात् तद्व्यावर्तनाय निर्दोषमेव चैतन्यमित्येव शब्दः प्रयुक्त इत्यर्थः ।

**श्रीनिधि०— कार्यलिङ्गकमिति** । संवादिप्रवृत्तिविसंवादिप्रवृत्त्युभयरूपकार्यलिङ्गकमित्यर्थः ।





**शे०वा०**— जीवमात्रसम्बन्धिचैतन्यस्य निर्दोषत्वनियमकथनस्य प्रकृतासङ्गतत्वादक्षमिति पदाध्याहारेण तत्परिहारेऽपि जीवमात्रसम्बन्धिचैतन्यरूपाक्षस्य निर्दोषताया बाधितत्वादपेक्षितं पूरयन् वाक्यं योजयति **तत्रेति** । **सद्भावादिति** । अन्यत्रोभयमिति निर्दोषत्वसदोषत्वप्रतिपादनादिति भावः । अन्यत्रोभयमित्यनेन मध्यमाधमजीवसम्बन्धिचैतन्ये निर्दोषत्वं सदोषत्वं चोच्यत इति भ्रान्तिनिरासायाह **अन्यत्रेति** । प्राकृतेऽक्षे निर्दोषत्वसदोषत्वयोः पृथगनभिधानादुत्तमजीवसम्बन्धिचैतन्यवन्निर्दोषमेवेति सङ्ग्राह्यमेव, अधमजीवसम्बन्धिचैतन्यवत्सदोषमेवेति निर्दोषग्रहणव्यवच्छेद्यमेवेति *भ्रान्तिनिरासायान्यत्रेत्येतत् तत्परतयाऽपि व्याचष्टे* ***सर्वत्रेति*** । उत्तममध्यमाधमजीवसम्बन्धिनीत्यर्थः । इदं च *सर्वस्य प्राकृताक्षस्य निर्दोषत्वसदोषत्ववचनं प्रायिकमेव* । संसारिचतुर्मुखप्राकृताक्षस्यापि निर्दोषत्वनियमात् द्वयमपि यथार्थमेवेत्यन्यत्रोक्तत्वादिति ध्येयम् । ननु कथमेकस्यैव मध्यमजीवसम्बन्धिचैतन्यस्य सर्वस्य प्राकृतस्याक्षस्य चोभयरूपत्वं विरुद्धं स्यादित्यत आह **कालादिभेदेनेति** । **सदोषत्वमेवेति** । इदं च तदीयस्वरूपज्ञानस्य प्रकारांशेऽयथार्थत्वनियमेन तदंशे सदोषत्वमेवेत्यभिप्रायेणैवोक्तम् । न तु तदीयस्वरूपज्ञानस्य विषयस्वरूपेऽप्ययाथार्थ्येन तदंशेऽपि तदीयस्वरूपेन्द्रियस्य सदोषत्वाभिप्रायेण । तथा सति 'अधमानां स्वरूपेन्द्रियं विषयस्वरूपमात्रे यथार्थमेव प्रकारे त्वयथार्थमि'ति निरवकाशपद्धतिग्रन्थविरोधापातात् । न चैवमप्यधमानां स्वरूपज्ञानमयथार्थमेवेति पद्धत्या विरोधः स्यादिति वाच्यम् । तदीयस्वरूपेन्द्रियस्य विषयस्वरूपे याथार्थ्यनियमस्य पद्धतावेवोत्तरत्र वक्ष्यमाणतया तद्याथार्थ्यनियमस्य च तत्स्वरूपज्ञानस्य विषयस्वरूपे याथार्थ्यनियमं विनाऽयोगेन तदीयस्वरूपज्ञानायाथार्थ्यनियमोक्तेरपि प्रकारे अयथार्थनियम एव पर्यवसन्नतयोक्तार्थाविरोधित्वात् । अत एवाधमानां मुक्त्यनन्तरं स्वरूपदुःखानुभवस्यायथार्थत्वान्मुक्तेरपुरुषार्थत्वभङ्गप्रसङ्गो याथार्थ्ये च सर्वार्थान्विपरीतांश्चेत्यादिप्रमाणविरोध इति निरस्तम् । सर्वार्थानित्यादेस्तदीयस्वरूपज्ञानस्य प्रकारेऽयाथार्थ्यनियमपरत्वेन मुक्त्यनन्तरभाविदुःखानुभवस्य तत्र भासमानस्वातन्त्र्यादिरूपप्रकारांशेऽयाथार्थ्येऽपि दुःखस्वरूपांशे यथार्थत्वेन अपुरुषार्थत्वाविरोधात् । केचित्तु दुःखस्य दुःखत्वेनैव ज्ञानान्न मुक्तेः अपुरुषार्थत्वम् । न चैवं दुःखे सुखमानिनोऽसुरा इत्यादि विरोधः । दुःखस्य दुःखत्वेन ज्ञानानन्तरमिदमनुकूलमेवेति जायमानज्ञानान्तराभिप्रायेण तदुपपत्तेः । न चैवमपि सवार्थानित्यादिविरोधो दुःखत्वेन दुःखानुभवस्य यथार्थत्वादिति वाच्यम् । अवश्यं भासमानस्वातन्त्र्यादिप्रकारांशेऽयथार्थत्वाभिप्रायेण तदुपपत्तेरित्याहुः । नन्वत्र वाक्ये इन्द्रियद्वैविध्यस्य प्रमितत्वानुक्तेः कथमनेन तस्याप्रमितत्वशङ्कानिरास इत्यत इष्यत इत्येतदेव तत्सूचकमित्यतो भविष्यत्यनेन तच्छङ्कानिरास इति भावेनोक्तशङ्कापरिहारोपयोगितया तद्व्यावर्तनपूर्वकं तत्सूचितं प्रमाणं च दर्शयति **इष्यते प्रामाणिकैरित्यनेनेति** । **आगममिति** । 'यदात्मको भगवान्', 'अक्षाणि च स्वरूपाणि' इत्यादि श्रुतिस्मृतिरूपमित्यर्थः । **कार्यलिङ्गकमिति** । संवादिविसंवादिप्रवृत्तिरूपकार्यलिङ्गकमित्यर्थः । नन्वक्षद्वैविध्यतन्निर्दोषत्वसदोषत्वनिरूपणमनर्थकमित्यतः प्रागुक्तं निर्दोषपदव्यवच्छेद्यप्रदर्शनार्थत्वमेतदभिप्रायतयाऽऽह **यावदिति** । **अत्रेति** । चैतन्यप्राकृतरूपाक्ष इत्यर्थः । उपलक्षणं चैतत् । यावन्निर्दोषमुक्तं तत्सर्वं सङ्ग्राह्यमित्यपि द्रष्टव्यम् ।

**वा०र०— मूले किमतो यद्येवमक्षेति** । यद्यपि उक्तद्वैविध्यफलतया ईशरमामुक्तउत्तमजीवसम्बन्धी शुद्धाक्षे निर्दोषताप्रतिपादनमेव सङ्गतम् । न च तत्परतया निर्दोषमेवेति भाष्यं मया योज्यते । अपि तु उत्तमजीवचैतन्यमात्रपरत्वेन ततो नैवमवतारो युक्तः । संसारिषु अक्षद्वैविध्यस्यैवात्र विवक्षणे च यावदत्र इत्युत्तरवाक्ये ईशाप्रत्यक्षसङ्ग्रहवर्णनासङ्गतिः । तत्सङ्गत्यर्थं ईशादिप्रसङ्गस्यासमाप्त्यङ्गीकारे किमतः इति वाक्ये संसारिमात्रग्रहणव्याख्यानायोगात् इत्याभाति । तथापि अक्षद्वैविध्यं ईशादिसर्वाक्षेषु मिलित्वा सिद्धं तत एव च संसारिष्वपि तद्वैविध्यं च प्राप्तम् । तत्रेशलक्ष्मीमुक्ताक्षे निर्दोषतानियमस्य सिद्धत्वं च । तथापि संसार्यक्षे निर्दोषतत्प्रकारः कथं ज्ञातव्य इति शङ्कावाक्यार्थाभ्युपगमात् संसारिविषयत्वेऽपि ईशादिप्रसङ्गस्य परिसमाप्त्यनङ्गीकारात् पादत्रयेत्युक्तवाक्योपपत्तिरिति न दोषः । अत एव तत्रोत्तमेत्युक्तवाक्ये ईशादिप्रत्यक्षरूपाक्षेषु मध्ये उत्तमेति ईशाद्यक्षप्रसङ्गासमाप्तिसूचनम् । अन्यत्रोभयं इत्येतदनुसारेण च प्रथमभागस्य उत्तमजीवचैतन्यपरतैव स्वीकृता । अधिकं उत्तरत्रानेनागमं इत्येतद्व्याख्यानटीकोपपादनावसरे वक्ष्यामः । **जीवमात्रसम्बन्धिचैतन्यस्येति** । अत्र मात्रपदस्य चैतन्यमात्रस्येत्यन्वयः । अक्षानक्षभूतचैतन्यमात्रस्य निर्दोषतावर्णनं प्रकृतासङ्गतम् । अक्षरूप एव तस्मिन् तन्नियमस्य वाच्यत्वादित्यर्थः । जीवमात्रसम्बन्धीति स्वरूपकथनं तु बाधितत्वरूपद्वितीयदोषस्यापि अत्र व्याप्तिसूचनाय । तदर्थबाधोऽपि असङ्गतिपदेन ग्राह्यः । एवं उभयपरत्वेऽपि सर्वजीवसम्बन्धीत्युक्तशङ्काच्छादनेन चैतन्यमात्रस्येत्युक्तासङ्गतिशङ्कापरिहारायैवाक्षमिति पदाध्याहारपक्षोत्थापनस्याभिप्रेतत्वात् तत्परिहारेऽपीत्यस्य चैतन्यमस्येत्युक्तासङ्गतिशङ्कापरिहारोऽपीत्येवार्थः । पूर्वत्राभिप्रेतं दोषान्तरं तु स्वयमेवोच्चाट्यते इति ज्ञेयम् । **निर्दोषतायाः बाधितत्वादिति** । अत्रापि निर्दोषतापदस्य तन्नियमपरत्वस्यापि सत्त्वात् उत्तमजीवसम्बन्धिचैतन्ये तन्नियमसम्भवेऽपि मध्यमजीवसम्बन्धिचैतन्यस्य निर्दोषत्ववत् सदोषत्वस्यापि सत्त्वात् । तन्नियमस्य बाधितत्वम् । अधमसम्बन्धिचैतन्ये तु निर्दोषताया एवाभावात् बाधितत्वमिति योजना । **अपेक्षितमिति** । चैतन्यमात्रस्य निर्दोषतानियमकथनासङ्गतिपरिहारायाक्षपदपूरणम् । जीवमात्रसम्बन्धीत्युक्तशङ्कापरिहाराय तु उत्तमजीवसम्बन्धीति पूरणमिति विवेकः । **आहेति** । अन्यत्रपदं मध्यममात्रपरतया व्याचष्टेत्यर्थः । उत्तमजीवसम्बन्धिचैतन्यवत् इत्यतः परप्राकृतमक्षं इति लिङ्गविपरिणामेनानुवर्तते । उत्तमजीवसम्बन्धीत्यर्थकतत्सम्बन्धीतिपदं च बुद्ध्या विवेकेन पूरणीयम् । ततश्चोत्तमजीवसम्बन्धिप्राकृताक्षं निर्दोषमेवेति चैतन्यरूपाक्षनिर्दोषतावचने तदप्युपलक्षणया सङ्ग्राह्यमेवेत्यर्थः । सङ्ग्राह्यमेवेत्यस्येति भ्रान्ति इत्युत्तरेणान्वयः । एवं मध्यमजीवसम्बन्धिचैतन्यवत् इत्यतःपरं तत्सम्बन्धिप्राकृताक्षमयीति पूरणीयम् । **तत्परतयेति** । उत्तममध्यमसम्बन्धिप्राकृताक्षपरतयेत्यर्थः । यद्यपि मध्यमप्राकृताक्षस्यापि तदुभयत्वं मूले उक्तं तत्सङ्ग्रहोऽपि कर्तव्यः तथापि तत्र पूर्वोत्तरयोः इवानुपपत्तेरभावात् तदकीर्तनम् । मूले तु वस्तुगतिप्रदर्शनाय यथाक्रमं मध्यमप्राकृताक्षस्यापि स्थितिप्रदर्शनमिति न कश्चिद्दोषः । **अन्यत्रोक्तत्वादिति** । प्रमाणलक्षणादावित्यर्थः । **स्वातन्त्र्यादिरूपप्रकारेति** । अत्रादिपदेन सुखत्वस्यापि ग्रहणात् दुःखे सुखरूपप्रकाशे वा अयाथार्थ्याप्रतिपादनलाभात् दुःखे च सुखमानिनः इत्यादिवाक्योक्तसुखत्वप्रकारकदुःखानुभववत्वस्य तदनुभवो दुःखत्वांशे यथार्थ इत्यत्रैव पर्यवसानम् । इदं रजतमित्यादौ भासमान इदंतारजतत्वयोः मध्ये





रजतत्वांशस्यायाथार्थ्यवत् दुःखत्वांशे याथार्थ्योपपत्तेः । तथा च दुःखस्य सुखत्वेन ज्ञानस्य अयाथार्थ्येन दुःखत्वप्रकारकानुभवस्य यथार्थत्वात् दुःखानुभवस्य पुरुषार्थता सम्भवतीति सूचितं भवति । तेन वाक्यान्तरमिति कथनाभाव इति शङ्कानवकाशः । तदेतत्सर्वमभिप्रेत्य पुरुषार्थत्वाविरोधात् इति सामान्येनोक्तम् । **केचित्तु इति** । अत्राहुः इति अस्वरससूचनम् । तद्बीजं तु अवश्यं भासमानस्वातन्त्र्यादिप्रकारांशेऽयथार्थमुक्तया सर्वार्थान् इत्येतद्वाक्यविरोधपरिहारवत् दुःखे सुखमानिनः इत्येतद्वाक्यविरोधपरिहारस्यापि सिद्धाविदं अनुकूलमेवेति ज्ञानान्तरकल्पनावैय्यर्थ्यमिति । एतेन इदमपि सूचितम् । अधमस्वरूपेन्द्रियस्योत्तमस्वरूपेन्द्रियस्य च घटादिज्ञानप्रामाण्यग्रहणे विशेषाभावात् प्रामाण्यग्राहकं तदिन्द्रियं कथमयथार्थम् । अन्यथा विषयाबाधस्यापत्तेः इति न शङ्कनीयम् । ज्ञानप्रामाण्यरूपविषयांशे याथार्थ्येऽपि अवश्यं भासमानस्वातन्त्र्यादिप्रकारांशे अयाथार्थ्याङ्गीकारेण विषयबाधोपपत्तेः । एवमन्यान्यपि बाधकानि परिहरणीयानीति । **कथमनेनेति** । इन्द्रियद्वैविध्यस्य प्रथितत्वमुक्तम् । तत्कथं इत्याशङ्कानिरासपरतया शुद्धमीशेत्यादि भाष्यावतारात् अत्र ज्ञानद्वैविध्ये प्रमाणानुक्तेः तत्परिहाराभाव इत्याशयः । **इष्यते इत्येतदेवेति** । उभयं इष्यते इति योजितमपि आवृत्त्याश्रयणेन तत्सूचकमित्यर्थः । मूले इष्यते इत्यनन्तरं प्रामाणिकैरिति शेषः । पूरणपूर्वकं तत्प्रयोजनकथनमित्यनेन क्रियते इति सिद्धत्वात् तथा विशिष्टपाठानुसारेण विशिष्टावतारपूर्वकं प्रामाणिकैरित्यनेनेत्यन्तस्य प्रतिकृततया उपादानं टीकायामिति ज्ञेयम् । यद्वा आत्मा को भवान् इति तदात्मिका व्यक्तिः किमात्मको भगवान् ज्ञानात्मकः ऐश्वर्यात्मकः शक्त्यात्मक इति जैनाधिकरणे व्यक्तिदेह इति मूले व्याख्यानेन भगवतो ज्ञानाद्यात्मकत्वेन तद्व्यक्तिरपि भगवत्स्वरूपतया प्रतिपादनादिति भावः । ननु एतदसङ्गतम् । अन्यत्रोभयमित्युक्तमध्यमज्ञानसम्बन्धिचैतन्यसर्वप्राकृताक्षयोः निर्दोषत्वसदोषत्वोभयवत्तायाः प्रामाणिकत्वकथनपरतयैवास्य भोजनीयत्वात् पूर्वं इष्यते इत्यस्य यथाश्रुतानुसारेण एव योजनाकरणात् । तत्र मूले सामान्यतोऽन्वयप्रदर्शनेऽपीह प्रामाणिकैरित्येतत्पूरणेन तत्प्रयोजनकथनेन च पुनरनुवादोपपत्तेश्च । तथाऽधमचैतन्ये सदोषत्वनियमोऽपि अत्र प्रामाणिकतयाऽभिधातुमभिप्रेतः । उक्तस्थल एव शेषपूरणात् । तथा चोक्तमूलानुसारेण उत्तमादिचैतन्यगतनिर्दोषत्वनियमादिपरत्वेन वा मध्यमादिचैतन्यादिगतोभयपरत्वेन वा प्रमाणाभिधानयोजनीयत्वे ईशादिप्रत्यक्षमात्रविषयतया अस्य द्वैविध्यमप्रामाणिकत्वोक्तिव्याख्यानमयुक्तमिति चेत् । अत्र ब्रूमः । उक्तं हि निर्दोषमेव इत्येतदवताररूप 'किमतो यद्येवं यद्यक्षे'ति वाक्ये ईशादिप्रसङ्गापरिसमाप्तिः इत्यत एव यावदत्रेत्युत्तरवरवाक्ये ईशादिसङ्ग्रहप्रतिपादनं युक्तं इति । तथा चात्र भाष्ये ईशादिप्रत्यक्षविचारार्थप्रवृत्तत्वेऽपि ईशरमामुक्ताक्षानां निर्दोषतानियमं सिद्धवत्कृत्य उत्तमचैतन्यादिष्वेवं निर्दोषतानियमादिप्रतिपादकस्यापि अभिप्रेततया तदनुसारेण मूले निर्दोषमेवेत्यादिकमुत्तमजीवसम्बन्धी चैतन्यादिपरतया योजितम् । अत एव तत्रेति पूरितं द्विविधाक्षसमुदाय इति तदर्थः । कथमन्यथा ईशादिमेलनेन उत्तमजीवचैतन्यान्तस्य निर्दोषतानियमवत्वेन व्याख्यानाभावः । यावदत्रेति चान्ते सर्वचैतन्यादिपरतया स्पष्टं प्रतीयते । तेन च ईशादिप्रसङ्गापरिसमाप्तिः सिद्धा । तदेवं पूर्वोत्तरग्रन्थमर्यादापर्यालोचनया किमतो यद्येवं इति वाक्ये ईशादि सर्वाक्षेषु द्वैविध्यस्योक्तरीत्या प्राप्त्या किमित्याशङ्काशङ्कोदयसाम्येऽपि ईशरमामुक्तचैतन्यरूपाक्षस्य निर्दोषतानियमस्य सिद्धत्वात् तमनभिधाय





उत्तमजीवादिसम्बन्धि चैतन्यादावेव निर्दोषतानियमादिकं प्रतिपादयतीत्यर्थो व्याख्येयः । ततश्च प्राक् प्रकृतत्वात् अत्रापि प्रामाणिकत्वेन प्रतिपादनीयतया ईशाद्यक्षवतापि शक्याङ्गीकर्तुमिति यदात्मक इति प्रमाणोदाहरणं सङ्गतमेव । अत एव इन्द्रियद्वैविध्यस्य प्रमितत्वानुक्तेरिति प्रामाणिकत्वानुक्तिशङ्का सामान्यतः सर्वविषया भवत्वतः तत्परिहारयोजनापि तन्त्रेण सर्वविषया इत्यादि श्रुतिस्मृतीत्यत्रादिपदेन उभयसाधकवाक्यानामपि ग्राह्यतया अभिप्रेतत्वात् । अत्रार्थ इति मूलेऽप्यक्षद्वैविध्यादिरूपार्थस्य सर्वस्य ग्रहणात् । कार्यलिङ्गकमित्यनेनापि सर्वसाधारण्येन संवादिप्रवृत्त्यनुसारेण निर्दोषताविसंवादितदनुसारेण तु सदोषेति प्रतिपादनमात्रलाभेऽपि निर्दोषतानियमात् । यद्यपि कदापि विसंवादाभावादिना ऊह्यमित्यत्र तात्पर्यात् न दोषः । एवमीशादि-साधारण्येनाक्षं प्रकृतं इत्याशयेनैव टीकाकृत् न च द्वैध्यमित्याद्याशङ्का सामान्यत एव उत्थाप्य तन्निरासपरतया यावदत्र इति वाक्यमवतारितवान् । चैतन्यप्रकृतरूपाक्ष इति व्याख्यातवान् । यावन्निर्दोषमुक्तं इत्यादि चोक्तवान् । **निर्दोषमुक्तमिति** मूलस्य च निर्दोषमेवेति वाक्यावताराद्युक्तरीत्या निर्दोषतयाऽभिप्रेतमित्यर्थात् सर्वसङ्ग्रहोपपत्तिः । अत एव च सुखदुःखादिविषयं इत्येतदुत्तरभाष्यमुख्यसंसारिमात्रविचारप्रवृत्तिरपि टीका-कृत्प्रवृत्तौ मूलम् । अत एव संसारिणामक्षेति वक्ष्यतीति सकलमकलङ्कं इति सूरयो विदांकुर्वन्तु । **प्रागुक्त-मिति** । प्राकृतं शुद्धमिति भाष्यावतारस्थले निर्दोषत्वमुक्तं तद्व्यवच्छेद्यं दर्शयितुमित्यनेनेति शेषः । **तथा हि सतीति** मूलम् । यद्येवं प्रत्ययद्वयं स्यात् तथा सत्येवेत्यर्थः । **अपरोक्षावभासितत्वादिति** मूले अपरोक्षावभासो वियता सम्बन्धेन यस्मिन् तत् अपरोक्षावभासितस्य भावः तत्वं तस्मात् इत्यर्थो ज्ञेयः ।

**स०व्र०— अन्यत्र मध्यमजीवेति** । प्राकृते सर्वत्र चेति सम्बन्धः । **अधमसम्बन्धिचैतन्ये तु सदोषत्वमेवेति शेष इति** । व्यधिकरणप्रकारकज्ञानजनकमेवेत्यर्थः । न तु धर्म्यंशेऽपि तज्ज्ञानस्यायाथा-र्थ्याभिप्रायेणेयमुक्तिः । न च तथा सति 'मुक्तियोग्यानां स्वरूपज्ञानं यथार्थमेव । संसारिणां मिश्रम् । अन्येषामयथार्थमेवे'ति पद्धतिविरोध इति वाच्यम् । निष्प्रकारकज्ञानस्यैवाभावेन तदीयसर्वज्ञानानां सप्रकारक-त्वेन तत्र व्यधिकरणप्रकारकज्ञानत्वस्य सर्वत्र विद्यमानत्वेन तदभिप्रायेण तद्वन्थोपपत्तेः । 'सर्वार्थान्विपरीतांश्च इत्यादेरयमेवाभिप्रायः । न चैवं तमसोऽपुरुषार्थत्वभङ्गः । दुःखादीनां दुःखत्वेन तज्ज्ञानाभावात् । तथा तज्ज्ञानस्यैव चापुरुषार्थतासम्पादकत्वादिति वाच्यम् । पुष्पमालात्वेन ज्ञातस्यापि सर्पस्य दशनादिरूप-स्वकार्यकारित्वेन सर्पत्वेन तज्ज्ञानस्यानपेक्षितत्वदर्शनेन तद्वदेव दुःखानुभवमात्रस्यैव नीचतासम्पादकत्वोपपत्तौ तत्त्वेन तज्ज्ञानस्यानपेक्षितत्वादिति भावः । वस्तुतो दुःखादेः दुःखत्वादिना ज्ञानेऽपि अविद्यमानस्वातन्त्र्यादि-विषयकत्वेनायाथार्थ्यम् । 'दुःखे तु सुखमानिनोऽसुराः' इत्यादेरपि दुःखस्य सुखत्वेन ज्ञानानन्तरं इदमनुकूल-मित्येवंरूपज्ञानान्तराभिप्रायकत्वादविरोधः । तावताऽपि दुःखत्वेन दुःखज्ञानस्य न यथार्थत्वं स्वातन्त्र्यादि-विषयकत्वादिति न 'सर्वार्थान्' इत्यादिविरोध इति द्रष्टव्यम् ।

**विठ्ठल०— किमतो यद्येवमिति** । एवमक्षद्वैविध्येऽपि निर्दोषपदव्यवच्छेद्यं किं लब्धमित्यर्थः । **आगममिति** । गीतायां स्फुटतरमिदमुक्तं **कार्येति** । सम्यग्ज्ञानमिश्रमिथ्याज्ञानकार्यलिङ्गमित्यर्थः ।





**चषकः—** **कालादिभेदेनेति** । एकदा विरोधात् कालदेशवस्तुभेदेनेत्यर्थः । **सदोषत्वमेवेति** । पद्धतावधमानां स्वरूपेन्द्रियं स्वरूपमात्रे यथार्थं प्रकारमात्रे त्वयथार्थमित्युक्त्या अधमानां दुःखस्वरूपांशे याथार्थ्येऽपि तद्गतपारतन्त्र्यादिधर्मेषु अयाथार्थ्येन तदभिव्यञ्जकेन्द्रियस्य दोषित्वनियमादिति भावः । **कार्यलिङ्गकमिति** । तत्त्वज्ञानमिश्रज्ञानमिथ्याज्ञानरूपकार्यलिङ्गकं संवादिविसंवादिप्रवृत्तिरूपकार्यलिङ्गकं वेत्यर्थः ।

**॥ इति स्वरूपेन्द्रियस्य निर्दोषतानियमः ॥**
**॥ इति प्राकृतेन्द्रियस्य निर्दोषसदोषोभयरूपता च ॥**

* * *

**॥ अथ संसारगेष्वपि सुखदुःखादिविषयं प्रत्यक्षं निर्दोषम् ॥**

१३८ **सु०—** ननु च संसारिषु प्रवृत्तिसिद्ध्यर्थमिन्द्रियमवश्यमङ्गीकरणीयम् । न च तच्छुद्धम्, उक्तानुपपत्तेः । त(अ)तः प्राकृतेनैव सर्वस्योपपत्तेः संसारिषु शुद्धेन्द्रियाभ्युपगमो निर्बीज एव । न च मुक्तौ शुद्धसद्भावात्प्रागपि तदङ्गीकरणीयम्, मुक्तिवच्छुद्धेन्द्रियस्यापि पश्चात्प्राप्त्युपपत्तेरित्यत आह **सुखेति** ।

**अनु०—** सुखदुःखादिविषयं शुद्धं संसारगेष्वपि ॥

न केवलमीशरमामुक्तेषु (किन्तु) संसारगेष्वपि **शुद्धम्** इन्द्रियमङ्गीकरणीयम् कुतः **सुखदुःखादिविषयम्** ।

**अयमर्थः** । अस्ति तावत्संसारिणां सुखदुःखेच्छादिविषये(यो)ऽपरोक्षावभासः, लिङ्गाद्यननुसन्धानेनैवाहं सुखीत्यादिस्पष्टावभासदर्शनात् । न च इन्द्रियविषयतामन्तरेण अपरोक्षावभासित्वं सुखादीनां युक्तम्, धर्मादेरपि तत्प्रसङ्गात् । तस्मात् सुखदुःखादिविषयमिन्द्रियमङ्गीकर्तव्यम्, तदेव शुद्धमिति ।

**परि०—** **उक्तानुपपत्तेरिति** । प्राकृतैर्युक्तमित्यत्र संसारेऽपि सम्यग्ज्ञाननियमापत्तेरित्युक्तानुपपत्तेरित्यर्थः । सुखदुःखादिविषयमिति हेतुगर्भं इन्द्रियस्य शुद्धत्वसाधनमितिभावेनावतारयति **कुत इति** । अस्फुटत्वादाह **अयमर्थ इति** ।

**वं०प०—** **उक्तानुपपत्तेरिति** । सम्यज्ज्ञाननियमाद्यापत्तेरित्यर्थः ।





**कं०रा०— उक्तानुपपत्तेरिति** । संसारेऽपि सम्यग्ज्ञाननियमाद्यापत्तेरित्युक्तानुपपत्तेरित्यर्थः । **मुक्तिवदिति** । प्रागविद्यमानाया मुक्तेरिव शुद्धेन्द्रियस्यापि प्राग्विद्यमानस्य प्राप्त्युपपत्तेरित्यर्थः ।

**श्रीनिधि०— उक्तानुपपत्तेरिति** । सम्यग्ज्ञाननियमाद्यापत्तेरित्यर्थः ।

**शे०वा०—** उत्तरवाक्यानर्थक्यमाशङ्क्य प्रागुक्तस्य संसारिणामक्षद्वैविध्यस्य समर्थनार्थत्वान्न तदिति भावेन तद्व्यावर्त्यशङ्कां दर्शयति **नन्विति** । **उक्तेति** । सम्यग्ज्ञाननियमाद्यापत्तिरूपानुपपत्तेरित्यर्थः । अपिशब्दसमुच्चयं दर्शयति **नेति** । ननु सुखदुःखादिज्ञानस्य लिङ्गशब्दजन्यतया परोक्षत्वेनापरोक्षत्वस्यैवाभावाद्भावे वा इन्द्रियाविषयत्वेऽप्यापरोक्ष्योपपत्तेर्न तस्येन्द्रियविषयत्वमिति न सुखादिविषयेन्द्रियतया संसारिषु शुद्धसिद्धिरित्यत आह **अयमर्थ इति** । लिङ्गादीत्यादिपदेनागमपरिग्रहः । अननुसंहितव्याप्तीनां जातिबधिराणां चाहं सुखीत्यादिप्रतिभासदर्शनान्न तस्य परोक्षत्वमिति युक्तं सुखादेरपरोक्षावभासत्वमिति भावः ।

**विठ्ठल०— मुक्तिवदिति** । प्रागविद्यमानायानुक्तेरिव शुद्धेन्द्रियस्यापि प्राप्त्युपपत्तेरित्यर्थः । सुखदुःखादिविषयमित्येतदिन्द्रियस्य शुद्धत्वसाधने हेतुसूचकं विशेषणमिति भावेनावतारयति **कुत इति** । तत्सूचितामेव युक्तिं दर्शयितुमाह **अयमर्थ इति** ।

**॥ इति संसारगेष्वपि सुखदुःखादिविषयं प्रत्यक्षं निर्दोषम् ॥**

* * *

**॥ अथ तादृशप्रत्यक्षस्य बलिष्ठतमत्वम् ॥**

१३९ **सु०—** अस्तु सुखदुःखादिविषयमिन्द्रियं संसारिषु, तच्छुद्धमिति कुतः, प्राकृतेनापि तदपरोक्षावभासोपपत्तेः; इत्यत आह **निर्दोषत्वेति** ।

## अनु०— निर्दोषत्वातिनियमात्तद्बलिष्ठतमं मतम् ।

**तत्** सुखादिविषयमिन्द्रियं तावत् **बलिष्ठतमं** सर्वथाऽ(प्य)बाध्यं **मतं** सर्वेषां सम्मतम् । न हि कदाचिदप्यसति सुखे 'अहं सुखी'ति प्रत्ययोऽस्ति; नापि सति 'नास्मि सुखी'ति; तथा हि सति, इन्द्रियस्य बाध्यता स्यात् । बलिष्ठतमता चेन्द्रियस्य **निर्दोषत्वादिनियमात्** एव उपपद्यते; नान्यथा, सदोषाणां बाधदर्शन(नियम)ात् । निर्दोषत्वातिनियमश्च शुद्धस्यैव धर्मो न प्राकृतस्येति सुखादिविषयस्येन्द्रियस्य शुद्धतासिद्धिरिति ।





**एतदुक्तं भवति । सुखादिकम् इन्द्रियविषयः अपरोक्षावभासित्वात् घटवत् । सुखादिविषयमिन्द्रियं शुद्धम् निर्दोषतानियमवत्त्वात् ईश्वरादीन्द्रियवत् । विमतं निर्दोषता-निय(तिम)मवत् सर्वथाऽप्यबाध्यत्वात् तद्वदेवेति ।**

**यद्यपि मुक्तानां शुद्धेन्द्रियवत्त्वेन संसारिणां तद्वत्ता शक्यसाधना, तस्य तत्स्वरूपतावगमात्, स्वरूपस्य चानागन्तुकत्वात्; तथाऽपि साक्षिणो यत्प्रत्यक्षत्वमुक्तं तद्विभावयितुमयं प्रमाणान्तरोपन्यासः, 'सुखादिविषयं स्वरूपभूतं चैतन्येन्द्रियं हि साक्षीत्युच्यते, तदभिव्यक्तं ज्ञानं चे'ति ।**

**परि०— प्राकृतेनापीति** । तार्किकरीत्या मनसापीत्यर्थः । **शुद्धस्येति** । मिथ्याज्ञान-स्वभावानामपि स्वरूपज्ञानं सुखदुःखादिगतसत्यत्वेशाधीनत्वादिप्रकारेष्वयथार्थ्यं सदपि सुखत्वदुःख-त्वादिना सुखदुःखादिविषये यथार्थमेवेति तदंशे तदभिव्यञ्जकं स्वरूपेन्द्रियं निर्दोषमेवेति त्रिविध-जीवसाधारण्येन शुद्धस्यैवेत्युक्तम् । न च केषुचित्प्रकारेषु सदोषं चेति सर्वत्रापि तथात्वनियमः । धर्म्यंशे तद्गतेदन्त्वाद्यंशेऽपि तथात्वापत्तेरिति । अनेन किं मानमुक्तमित्यत आह **एतदुक्तमिति** । **प्रत्यक्षत्वमुक्तमिति** । 'मिथ्यात्वमपि बन्धस्य न प्रत्यक्षविरोधतः' इत्यादिना जिज्ञासानये 'कालो हि साक्षिप्रत्यक्षः' इत्यादिना आनुमानिकपादे चोक्तमित्यर्थः । **अयमिति** । सुखदुःखादिविषय-मित्यादिना कृत इत्यर्थः । ननु प्राक् चैतन्यरूपज्ञानाख्यसाक्षिणः प्रत्यक्षत्वमुक्तम् । स्वरूपेन्द्रिय-साधनेन तत्कथं प्रकटितमित्यत आह **सुखादीति** । इति विभावयितुमिति पूर्वेणान्वयः । श्रोत्रं चक्षुरित्यादिगीतावाक्यम् । अधिष्ठायेत्यस्य विषयानुपसेवते इति चतुर्थपादस्थक्रियया अन्वयः । अयमिति यच्चाप्युत्क्रामतीश्वर इति पूर्वप्रकृतेश्वरः परामृश्यते ।

**यादु०—** औत्सर्गिको निर्दोषत्वनियमः प्राकृतेन्द्रियेष्वप्यस्तीति तद्वारणायातीतिपदमिति द्रष्टव्यम् । एवं च सर्वथा नियमो विवक्षितो न सापवाद इति भावः । **शुद्धस्यैवेति** । इदं चोत्तमजीवसम्बन्धि-चैतन्यविषयमिति ज्ञातव्यम् । **यत्प्रत्यक्षत्वमुक्तमिति** । 'साक्षिप्रत्यक्षसाधितम्' इति प्रथमाध्याय इत्यर्थः ।

**वं०प०— तदभिव्यक्तमिति** । तदुभयं च प्रत्यक्षमेव निर्दोषत्वादिति भावः ।

**कं०रा०— अपरोक्षावभासत्वादिति** । अपरोक्षोऽवभासो यस्य तदपरोक्षावभासं तस्य भावस्तत्त्वं तस्मादित्यर्थः । **साक्षिण इति** । 'सत्यत्वं गगनादेश्च साक्षिप्रत्यक्षसाधितमि'त्यादौ यत्साक्षिणः प्रत्यक्षत्वमुक्तं

तद्विभावयितुमयं प्रमाणान्तरोपन्यास इत्यर्थः । नन्वनित्यप्रमाणान्तरोपन्यासेन सुखादिविषयस्येन्द्रियस्य तदभिव्यक्तज्ञानस्य वा प्रत्यक्षत्वं विभाव्यते न तु साक्षिण इत्यत आह **सुखादिविषयमिति** ।

**श्रीनिधि०— यद्यपि मुक्तानां शुद्धेन्द्रियवत्वेनेति** । न च मुक्तवत् शुद्धेन्द्रियस्यापि पश्चात्प्राप्त्युपपत्तेः इत्युक्तमिति वाच्यम् । मुक्तिर्नाम स्वरूपाभिव्यक्तिः । स चागन्तुक्येव न चैन्द्रियं तथेति वैषम्यात् । **साक्षिणो यत् प्रत्यक्षत्वमुक्तमिति** । साक्षिप्रत्यक्षसाधितमित्यत्रेति शेषः । नन्वत्र सुखदुःखादिविषयज्ञानस्य प्रत्यक्षत्वमुपपद्यते न साक्षिणः इत्यत आह **सुखादिविषयमिति** ।

**शे०वा०—** औत्सर्गिकस्य निर्दोषत्वनियमस्य प्राकृतेष्वपि सद्भावात् तद्वारणायातीत्युक्तम् । तेन सर्वथा निर्दोषत्वनियम एव विवक्षितो न त्वौत्सर्गिक इत्युक्तं भवति । **शुद्धस्यैवेति** । एतच्चोत्तमजीवसम्बन्धिचैतन्यविवक्षयेति द्रष्टव्यम् । वाक्यद्वयसूचितान्यनुमानान्याह **एतदुक्तं भवतीति** । **प्रत्यक्षत्वमुक्तमिति** । 'सत्यत्वं गगनादेश्च साक्षिप्रत्यक्षसाधितमि'त्यादिनेति शेषः । कथमनेन तस्य विभावनमित्यतः प्रत्यक्षशब्दस्य करणफलसाधारणत्वात् करणफलांशौ दर्शयति **सुखेति** । ज्ञानं चेत्यतःपरं साक्षीत्युच्यत इत्यनुवर्तते । इतीत्यस्येति विभावयितुमिति पूर्वेण सम्बन्धः ।

**स०व्र०— साक्षिणो यत्प्रत्यक्षत्वमुक्तमिति** । 'सत्यत्वं गगनादेश्च साक्षिप्रत्यक्षसाधितम्' इत्यनेन यत्प्रत्यक्षत्वमुक्तमित्यर्थः ।

**विठ्ठल०—** एतेन किं मानमुपन्यस्तं भवतीत्यत आह **एतदुक्तं भवतीति** । सुखदुःखादिविषयमिन्द्रियं शुद्धमित्यत्रोत्तमेन्द्रियमेव पक्षतयाऽभिप्रेतमिति ज्ञातव्यम् । मध्यमाधमेन्द्रियस्वीकारे निर्दोषतानियमादिति हेतोस्तदंशे सिद्धिप्रसङ्गात् सुखादिगतत्वेशाधीनत्वादिप्रकारेषु वैपरीत्यग्राहकतया निर्दोषतानियमाभावात् । सर्वथाप्यबाध्यत्वादिति वक्ष्यमाणहेत्वसिद्धेश्च धर्म्यंशमादायाबाध्यत्वे तत्र विवक्षितमिति चेन्न । सर्वथेति पदास्वारस्यात् अपि च सर्वं ज्ञानं धर्मिण्यभ्रान्तमिति न्यायेन ज्ञानमात्रस्यापि धर्मिण्यबाध्यत्वेनातिप्रसङ्गापत्तेश्च । सर्वार्थान्विपरीतांश्चेत्याद्यागमविरोधाच्च इत्येषा दिक् । **प्रत्यक्षत्वमुक्तमिति** । साक्षिप्रत्यक्षसाधितमित्यत्रेत्यर्थः । नन्वत्र सुखदुःखादिविषयस्येन्द्रियस्य तदभिव्यक्तज्ञानस्य वा प्रत्यक्षत्वं विभाव्यते न तु साक्षित इत्यत आह **सुखादिविषयमिति** ।

**चषकः— शुद्धस्यैवेति** । उत्तमजीवसम्बन्धिचैतन्यमभिप्रेत्येदम् । **यत्प्रत्यक्षत्वमुक्तमिति** । साक्षिप्रत्यक्षसाधितमित्याद्याध्याय इत्यर्थः ।

**॥ इति तादृशप्रत्यक्षस्य बलिष्ठतमत्वम् ॥**

**॥ इति विभिन्नेष्वक्षेषु सदोषनिर्दोषत्वविवेकः ॥**

* * *





॥ अथ प्रत्यक्षद्वैविध्यस्य परीक्षा ॥

॥ अथ प्राकृतप्रत्यक्षस्य षड्विधता ॥

१४० **सु०—** ननु प्राकृतशुद्धभेदात् द्विविधमिन्द्रियमित्यसत्, 'श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च । अधिष्ठाय मनश्चायमि'ति पञ्चेन्द्रियमनोभेदेनेन्द्रियषाड्विध्यस्मरण-विरोधात्; इत्यत आह **पञ्चेति ।**

## अनु०— पञ्चेन्द्रियमनोभेदात्प्राकृतं षड्विधं स्मृतम् ॥

यत् **पञ्चेन्द्रियमनोभेदात्** इन्द्रियं **षड्विधम्** इति **स्मृतं** तत् **प्राकृतं** न तु सर्वमित्यतो न विरोधः । ज्ञानेन्द्रियाणामेवात्र (विवक्षित) उक्तत्वान्नैकादशत्वो(शो)क्तिविरोधः । बुद्धे-रपि मनस्यन्तर्भावान्न सप्तत्वविरोधः ।

नन्वाकाशात्मकस्य श्रोत्रस्य कथं प्राकृतत्वम् । मैवम्, भूताकाशपरिणाम-त्वाभ्युपगमात् । अव्याकृताकाशात्मकत्वे सार्वत्रिकशब्दोपलब्धिप्रसङ्गः । कर्णशष्कुल्यव-च्छेदाङ्गीकारेऽपि बधिराभावप्रसक्तिः । अदृष्टोपग्रहान्नेति चेन्न, तथा सत्याकाशस्यैव तत्तदवच्छिन्नस्यादृष्टोपगृहीतस्य घ्राणादिभावोपपत्तौ पार्थिवत्वाद्यभ्युपगमवैयर्थ्यात् । गन्धादिमत्त्वात्तत्सिद्धिरिति चेन्न, असिद्धेः 'यदिन्द्रियं यं विशेषगुणं गृह्णाति तत् तद्वदि'ति व्याप्तेः सुखादिग्राहिणि मनसि, सांसिद्धिकद्रवत्वस्नेहग्राहिणि चक्षुषि, शीतोष्णस्पर्शग्राहिणि स्पर्शने च भग्नत्वात् । आगमात्पृथिव्यादिप्राकृतिकताऽवगम्यत इति चेत्, तर्ह्यहङ्कारि-काकाशकार्यता श्रोत्रस्यापि तत एवाङ्गीकरणीया ।

**परि०— एकादशत्वेति** । 'इन्द्रियाणि दशैकं चे'ति त्रयोदशगीतादावुक्तैकादशत्वेत्यर्थः । एतेन द्वादशत्वविरोधोऽपि प्रत्युक्तः । क्वचिदेकादशत्वादीत्यपि पाठः । ननु तथापि 'सप्त प्राणाः प्रभवन्ति' 'सप्तगतेर्विशेषितत्वाच्चे'त्यादिश्रुतिसूत्राद्युक्तसप्तत्वविरोध इत्यत आह **बुद्धेरपीति** । **आकाशेति** । अव्याकृताकाशात्मकस्येत्यर्थः । **भूताकाशेति** । 'तेषां भूतैरुपचयः सृष्टिकाले विधीयत' इत्यादेरिति भावः । **सार्वत्रिकेति** । अव्याकृताकाशस्य भिन्नांशशून्यतया तार्किका-भ्युपगताखण्डाकाशप्रायतया सर्वस्यैव श्रोत्रत्वापत्तेः सर्वदेशोत्पन्नशब्दोपलब्धिप्रसङ्ग इत्यर्थः । **तत्तदिति** । चक्षुरादिगोलकावच्छिन्नस्येत्यर्थः । **तदिति** । पार्थिवत्वादिसिद्धिरित्यर्थः । **मनसीति** ।





'महेश्वरेऽष्टौ मनसस्तथैवे'त्युक्त्या सामान्यगुणपञ्चकात्परत्वापरत्ववेगरूपविशेषगुणत्रयादन्यस्य तत्र अनङ्गीकारादिति भावः । **स्पर्शन इति** । तस्यानुष्णाशीतस्पर्शवत्त्वोपगमादिति भावः । **आगमा-दिति** । 'रसमात्राद्विकुर्वाणादम्भसो दैवचोदितात् । गन्धमात्रमभूत्तस्मात्पृथ्वी घ्राणस्तु गन्धगः' इत्यादिरूपात् तृतीयस्कन्धस्थसप्तविंशाध्यायगतवाक्यलक्षणादागमादित्यर्थः । अत्र तस्मात्पृथ्वी-त्यस्य गन्धमात्रात्पृथिवी जातेत्यर्थः । घ्राणस्तु गन्धग इत्यस्य गन्धग्राहको घ्राणस्तु पृथ्व्या अभू-दित्यध्याहारेणार्थं वर्णयन्ति । तथा 'वायोश्च स्पर्शतन्मात्राद्रूपं दैवेरितादभूत् । समुत्थितं ततस्तेज-श्चक्षूरूपोपलम्भनमि'त्यादिरूपेष्वपि वाक्येष्वर्थो ध्येयः । **तत एवेति** । तामसात्तु विकुर्वाणा-द्भगवद्वीर्यचोदितात् । शब्दमात्रमभूत्तस्मान्नभः श्रोत्रं तु शब्दगम्' इति तत्रत्यागमवाक्यादेवेत्यर्थः । अत्रापि शब्दग्राहकं श्रोत्रं नभसो भूताकाशाज्जातमिति पूर्ववदर्थस्य वर्णनीयत्वात् तामसभागस्य 'महत्तत्त्वाद्विकुर्वाणाद्भगवद्वीर्यचोदितात् । क्रियाशक्तिरहङ्कारस्त्रिविधः समपद्यत । वैकारिकस्तैजसश्च' तामसश्च' इति पूर्वत्राहङ्कारभेदत्वोक्तेरिति भावः ।

**गु०दी०— पञ्चेन्द्रियमनोभेदात्** इति वदता आचार्येणेन्द्रियाणां परस्परं भेदकथनात् 'अधिष्ठाये'ति स्मृतौ आधाराधेयभावेन जीवाद्भिन्नत्वकथनाच्च अन्योन्यं द्रष्टुश्च भेदकथनात्प्राकृतेन्द्रियाणामेवायं विभागः । वस्तुतस्तु लावण्यभरितमूर्तिषु मुक्तेष्वपि श्रोत्र-नयन-नासा-रसन-स्पर्शनभेदेन बहिः पञ्चेन्द्रियाणामन्तर्मनस इति षण्णां ज्ञानेन्द्रियाणां वाक्पाणिपादपायूपस्थाख्यकर्मेन्द्रियाणां मुक्तजीवस्वरूपभूतानामेकादशेन्द्रियाणामपि हराविव रमायामिव च सत्त्वमस्त्येवेति भाष्यकृतोऽभिसन्धिरूहनीयः । कथमन्यथा 'अक्षण्वन्तः कर्णवन्तस्सखायो मनोजवेष्वसमा बभूवुरि'ति श्रुतिः । अन्यथा च सुपुष्पाघ्राणनं सुविषयास्वादनं सुखदायकस्वपत्यालिङ्गनं सुभग-तन्मुखदर्शनं सुरसतद्वचःश्रवणं च स्वरूपभूतानामप्येषां विशेषशक्त्याऽसङ्कीर्णकार्यकारित्वमित्यादिकमूहनीयम् । कथं तर्हि **न तु सर्वम्** इति टीकोक्तिरिति चेन्न । षोढा भेदवन्न तु सर्वमित्यर्थोपपत्तेः । **कथं प्राकृतत्वम्** इत्यत्र प्राकृतत्वं प्रकृतिविकृतकार्यत्वमित्यर्थः ।

**यादु०— न समत्वविरोध इति** । सप्तगतेर्विशेषितत्वाच्चेति सूत्रभाष्यादिविरोधो नेत्यर्थः । **तत्तदव-च्छिन्नस्येति** । तत्तद्गोलकावच्छिन्नस्येत्यर्थः । **आगमादिति** । 'पृथ्वी घ्राणस्तु गन्धगः', 'अम्भो जिह्वारसग्रहः', 'तेजश्चक्षूरूपोपलम्भनम्', 'वायुस्त्वक् च स्पर्शस्य सङ्ग्रहः' इत्याद्यागमात् घ्राणादीनां पृथिव्याद्युपादानकता-ऽवगम्यत इत्यर्थः । अत्र पृथिवी अम्भ इत्यादिप्रथमानां पूर्वेणान्वयः । तथा च गन्धगो घ्राणः पृथिव्या जातः रसग्रहो जिह्वाऽम्भसो जात इत्यादिरस्यार्थो ज्ञातव्यः । अन्यथेन्द्रियाणां भौतिकत्वस्य प्रमाणान्तरसिद्धस्यालाभ इति ज्ञातव्यम् । **आहङ्कारिकाकाशेति** । तामसाहङ्कारकार्यभूताकाशेत्यर्थः । **तत एवेति** । 'तामसात्तु विकुर्वाणाद्भगवद्वीर्यचोदितात् । शब्दमात्रमभूत्तस्मान्नभः श्रोत्रं तु शब्दगमि'त्यागमादेवेत्यर्थः ।





**वं०प०— न तु सर्वमिति** । शुद्धमपीत्यर्थः । कर्मेन्द्रियसाहित्येनैकादशत्वात् कथं षड्विधत्वमित्यत आह **ज्ञानेति** । ज्ञानेन्द्रियाणामपि बुद्धिसाहित्येन सप्तत्वस्य सप्तगतेरिति सूत्रोक्तत्वात् तद्विरोधोऽत आह **बुद्धेरपीति** । ननु कर्णशष्कुल्यवच्छिन्नाव्याकृताकाशस्यैव श्रोत्रत्वान्नोक्तदोष इत्यत आह **कर्णेति** । **बधिरेति** । तस्यापि कर्णशष्कुल्यवच्छिन्नाव्याकृताकाशसद्भावादित्यर्थः । नन्वदृष्टोपगृहीतकर्णशष्कुल्यवच्छिन्नाव्याकृताकाशस्यैव श्रोत्रत्वात् बधिरे चैतादृशश्रोत्राभावान्नोक्तदोष इति यदि, तर्हि वयमपि वदामोऽव्याकृताकाशमेव घ्राणादि । न च सर्वत्र गन्धाद्युपलब्धिप्रसङ्गः । घ्राणादिगोलकावच्छिन्नाव्याकृताकाशस्यैव घ्राणादीन्द्रियत्वाभ्युपगमात् । न च घ्राणाद्यवच्छिन्नस्य तस्य सत्त्वेऽपि कस्यचित्पुरुषविशेषस्य गन्धाद्युपलब्धिर्नेति वाच्यम् । अदृष्टोपगृहीतस्यैव तस्य तत्त्वाभ्युपगमेनोक्तदोषाभावादित्यपि स्यादित्याह **अदृष्टेत्यादिना** । **तत्सिद्धिरिति** । तेषां घ्राणादीनां पार्थिवत्वादिसिद्धिरित्यर्थः । गन्धादिमत्त्वं न सिद्धमित्याशङ्क्याह **यदिन्द्रियमित्यादि** । त्वगिन्द्रियमनुष्णशीतस्पर्शरूपं गुणं गृह्णाति तद्गुणवच्च भवत्येव । त्वगिन्द्रियस्य वायवीयत्वाद्वायोश्च तद्गुणवत्त्वादतो न व्यभिचार इत्यतः शीतोष्णेत्युक्तम् । **प्रकृतिकृता** उपादानकृता । **तर्हीति** । तामसाहङ्कारकार्यभूताकाशकार्यतेत्यर्थः । **तत एव** आगमादेव ।

**कं०रा०— भूताकाशेति** । तस्य च 'आत्मन आकाशः सम्भूत' इति श्रुतेः उत्पत्तिमत्वेन तत्परिणामस्य श्रोत्रस्य प्राकृतत्वं सम्भवतीति भावः । **अव्याकृताकाशेति** । श्रोत्रस्याव्याकृताकाशात्मकत्वे अव्याकृताकाशस्य व्याप्तत्वेन सार्वत्रिकशब्दसन्निकर्षसद्भावात् सार्वत्रिकशब्दोपलब्धिप्रसङ्ग इति भावः । ननु कर्णशष्कुल्यवच्छिन्नाव्याकृताकाशस्येव श्रोत्रत्वात् तस्य च सार्वत्रिकशब्दसन्निकर्षाभावान्न तदुपलब्धिप्रसङ्ग इत्यत आह **कर्णशष्कुलीति** । अव्याकृताकाशस्य कर्णशष्कुल्यवच्छेदाङ्गीकारेऽपि तदवच्छिन्नाकाशात्मकस्य श्रोत्रस्य बधिरेऽपि सत्त्वेन तद्द्विधुररूपबधिराभावप्रसङ्ग इत्यर्थः । ननु शब्दानुभवजनकादृष्टविशेष्योपगृहीतकर्णशष्कुल्यवच्छिन्नाकाशस्यैव श्रोत्रत्वात्तस्य च बधिरे असत्त्वान्न बधिराभावप्रसङ्ग इति शङ्कते **अदृष्टेति** । एवं तर्हि तत्तद्विषयानुभवजनकादृष्टविशेषोऽपि गृहीततत्तद्गोलकावच्छिन्नाकाशस्यैव घ्राणादिभावोपपत्तौ घ्राणादीनां **पार्थिवत्वाद्यभ्युपगमवैयर्थ्यमिति** । अदृष्टगन्धादिमत्वस्यासिद्धेरित्यर्थः । ननु यदिन्द्रियं यं विशेषगुणं गृह्णाति तदिन्द्रियं तद्गुणयुक्तमिति व्याप्तिबलाद्गन्धादिग्राहकेषु घ्राणादिषु गन्धादिमत्वसिद्धेर्नासिद्धिरित्यत आह **यदिन्द्रियमिति** । सामान्यगुणरूपद्रवत्वग्राहके चक्षुषि व्यभिचारनिरासाय विशेषपदसिद्धिकेति स्वाभाविकद्रवत्वशीतस्पर्शोष्णस्पर्शानां नवानां द्रव्यलक्षणानां मध्ये लक्षणद्वयसामानाधिकरण्यराहित्यस्य गुणत्वावान्तरजातिपुरस्कारेण सत्त्वाद्विशेषगुणवत्वमिति भावः ।

**श्रीनिधि०— तत् प्राकृतं न तु सर्वमितीति** । ननु शुद्धेन्द्रियस्यापि षाड्विध्यमस्ति । सत्यम् । न ह्यस्माभिः तस्य षाड्विध्यं निरस्यते । ननु क्वचिदिन्द्रियाणामेकादशत्वमुच्यते । तत् कथमत्र षाड्विध्यमित्युक्तमित्यत आह **ज्ञानेन्द्रियाणामेवेति** । तर्हि ज्ञानेन्द्रियाणामपि क्वचित् षाड्विध्यमुच्यते तद्विरोध इत्यत





आह **बुद्धेरपीति** । **भूताकाशपरिणामाभ्युपगमादिति** । भूताकाशांशैः परिणामाभ्युपगमादित्यर्थः । **बधिराभावप्रसक्तिरिति** । न च भूताकाशत्वपक्षेऽपि समानो दोष इति वाच्यम् । उपचयनाशतदभिभवे वा बाधितत्वसम्भवात् । ननु यदिन्द्रियं रूपादिषु पञ्चसु मध्ये यं गुणं गृह्णाति तदिन्द्रियं तद्गुणयुक्तमिति व्याप्तिरित्यत आह **शीतोष्णस्पर्शग्राहिणीति** । स्पर्शनस्य वायवीयत्वेन वायोश्चानुष्णाशीतस्पर्शनियमेन शीतोष्णस्पर्शाभावाद्व्यभिचार इति भावः । **आहङ्कारिकाकाशकार्यतेति** । तलः प्रत्येकं सम्बन्धः । **अहङ्कारिकता आकाशकार्यता चेति** । **अहङ्कारिकता** अहङ्कारकार्यता ।

शे०वा०— **ज्ञानेन्द्रियाणामेवेति** । ज्ञानकरणविशेषप्रत्यक्षनिरूपणप्रस्तावादिति भावः । **एकादशत्वायुक्तीति** । इन्द्रियाणि दशैकं चेत्यादिरूपेत्यर्थः । **विरोध इति** । प्राकृतेन्द्रियषाड्विध्यस्येति शेषः । **मनसीति** । मनसो मनोबुद्ध्यादिरूपपञ्चवृत्तित्वादिति भावः । **सप्तत्वविरोध इति** । 'सप्त प्राणाः प्रभवन्ति सप्तैव मरुतः बाह्ये सप्तप्राणास्तथात्मनि', 'सप्त गतेर्विशेषितत्वाच्चे'ति सप्तत्वप्रतिपादकश्रुत्यादिविरोध इत्यर्थः । का कथन्तेत्यतोऽनादिनित्यत्वान्न श्रोत्रस्य प्राकृतत्वमित्यभिप्रेत्यानादिनित्यत्वे विप्रतिपन्नं प्रति तत्समर्थयितुमाकाशात्मकस्येत्युक्तम् । आकाशश्चानादिनित्यतया प्रमितोऽतस्तदात्मकं श्रोत्रमत एवानादिनित्यमेवेति भावः । **भूतेति** । तथा चानादिनित्यत्वस्यान्यतरसिद्धिरिति भावः । नन्वव्याकृताकाशात्मकत्वोपपत्तौ भूताकाशपरिणामत्वाभ्युपगमो निर्निबन्धन इत्यतः किमव्याकृताकाश एव श्रोत्रमित्यभिमतं किंवा कर्णशष्कुल्यवच्छिन्नोऽव्याकृताकाशः किंवाऽदृष्टोपगृहीतः कर्णशष्कुल्यवच्छिन्नोऽव्याकृताकाश इति विकल्पान्मनसि निधायाद्यं दूषयति **अव्याकृताकाशात्मकत्व इति** । अव्याकृताकाशस्यापरिच्छिन्नत्वेन तदात्मकस्य श्रोत्रस्य सकलशब्दसन्निकृष्टत्वादिति भावः । द्वितीयमनूद्य दूषयति **कर्णेति** । कर्णशष्कुल्यवच्छिन्नाव्याकृताकाशस्य बधिरेऽपि सत्त्वादिति भावः । तृतीयमाशङ्कते **अदृष्टेति** । अदृष्टोपगृहीतस्यैव कर्णशष्कुल्यवच्छिन्नाव्याकृताकाशस्य श्रोत्रत्वात् तादृशस्य च बधिरेऽभावान्न तदभावप्रसङ्ग इति चेदित्यर्थः । **तत्तदवच्छिन्नस्येति** । तत्तद्गोलकावच्छिन्नस्यैवेत्यर्थः । न तत्तद्गोलकावच्छिन्नाव्याकृताकाशस्यैव घ्राणादित्वं कल्पयितुं शक्यम् । घ्राणं पार्थिवं गन्धवत्त्वाद्रसनमाप्यं रसवत्त्वादिति गन्धादिमत्त्वेन घ्राणादीनां पार्थिवत्वादिसिद्धेरिति शङ्कते **गन्धादिमत्त्वादिति** । सन्दिग्धासिद्ध्या दूषयति **नेति** । घ्राणं गन्धवद्गन्धग्राहकेन्द्रियत्वाद्रसनं रसवद्रसग्राहकेन्द्रियत्वादित्याद्यनुमानैरेव गन्धवत्त्वादिनिश्चयान्न सन्दिग्धासिद्धिरित्यत आह **यदिन्द्रियमिति** । ननु विशेषगुणग्राहकबहिरिन्द्रियत्वस्य हेतुत्वान्न मनसि व्यभिचार इत्यत आह **सांसिद्धिकेति** । रूपादिषु पञ्चसु मध्ये गन्धग्राहकबहिरिन्द्रियत्वमेव हेतुरतो न चक्षुष्यपि व्यभिचार इत्यरुचेराह **शीतेति** । **आगमादिति** । 'भूयस्त्वाद्गन्धवत्त्वाच्च पृथिवी गन्धज्ञाने प्रकृतिस्तथा आपस्तेजोवायुश्च रसरूपस्पर्शाविशेषात् घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियादिभूतेभ्यः पृथिव्यापस्तेजोवायुराकाशमि'त्यादिवैशेषिकाद्यागमादित्यर्थः । वक्तुरास्यनिश्चयेन तदागमानां प्रामाण्यासिद्धेर्न तेन घ्राणादेः पृथिव्यादिकार्यत्वसिद्धिरिति सत्येव दोषे, तस्य कपिलादीनामाप्तत्वासिद्धेरिति पूर्वोक्तरीत्या सुज्ञानत्वाद्वा, तत्प्रामाण्याभ्युपगतावपि श्रोत्रस्य भूतकार्यत्वासिद्धिरूपप्रमेयविरोधाद्वाऽङ्गीकृत्यैव तत्प्रामाण्यं





समाधत्ते **तर्हीति** । **तत एवेति** । उदाहृतवैशेषिकागमादेवेत्यर्थः । यद्यप्यत्राकाशकार्यत्वमात्रमुदाहृतागमेन सिद्ध्यति । न त्वाहङ्कारिककार्यत्वमपि । तथाऽप्याहङ्कारिकत्वमाकाशस्य मानान्तरसिद्धं नापह्नोतुं शक्यमित्याशयेन स्वरूपसङ्कीर्तनं तदिति द्रष्टव्यम् । यद्वा 'पृथ्वी घ्राणस्तु गन्धगः', 'अम्भो जिह्वारसग्रहः', 'तेजश्चक्षूरूपोपलम्भनं', 'वायुस्त्वक्स्पर्शसङ्ग्रह' इत्यागमादित्यर्थः । अत्र पूर्वोत्तरग्रन्थानुरोधेन गन्धादितन्मात्रेभ्यः पृथिव्यादिद्वारा घ्राणाद्युत्पत्त्यवगत्या घ्राणादीनां पृथिव्यादिकार्यत्वावगमादिति भावः । **आहङ्कारिकेति** । तामसाहङ्कारकार्यभूताकाशेत्यर्थः । तत एव 'तामसात्तु विकुर्वाणाद्भगवद्वीर्यचोदितात् । शब्दमात्रमभूत्तस्मान्नभः श्रोत्रं तु शब्दगमि'त्यागमादेवेत्यर्थः । अत्रापि पूर्ववदेव श्रोत्रस्य नभोजन्यत्वसिद्धिर्द्रष्टव्या ।

**वा०र०— तथा चानादीति** । उपलक्षणं चैतत् । भूताकाशपरिणामरूपश्रोत्रस्य परिच्छिन्नतया कर्णशष्कुल्यादिस्थल एव शब्दोपलम्भसम्भवात् अव्याकृताकाशात्मकत्व इत्युत्तरदूषणस्याप्रसरो नास्तीत्यपि ज्ञेयम् । **रसवत्त्वादीतीति** । **इतिशब्दः** प्रकारार्थः । **इतिप्रकारेणेति** । तेन चक्षु तैजसं रूपवत्वात् इत्याद्यनुमानसङ्ग्रहात् आदिपदाभावदोषशङ्कानवकाशः । यत् वक्ष्यति इत्याद्यर्थानुमानैरेवेति । विशेषगुणाग्राहकबहिरिन्द्रियत्वस्येति । अत्र मनोव्यावर्तकं बहिरिन्द्रियत्वमेव विशेषपदं तु स्वरूपकथनायेति ध्येयम् । **वैशेषिकागमादित्यर्थ इति** । काणादादिसूत्ररूपादित्यर्थः । तत्र भूयस्त्वादित्यादिकं तथा यत् तेजः इत्यादिकं च सूत्रं अष्टाध्यायगतम् । घ्राणरसनेति तु गौतमीयं प्रथमाध्यायगतम् । पृथिव्यापस्तेजः इत्येतत् उभयत्र प्रथमाध्यायगतं इति विवेकः । गन्धो ज्ञायतेऽनेनेति गन्धज्ञानं घ्राणम् । तत्र पृथिवीमात्रं प्रकृति उपादानकारणं इत्यादि सूत्रोपस्कारानुसारेण सूत्रव्याख्यानं द्रष्टव्यम् । इत्याद्यागमादित्यर्थ इति भागवतवाक्यरूपात् इत्यर्थः । **पूर्ववदेवेति** । आकाशद्वारा श्रोत्रोत्पत्त्यवगत्या श्रोत्रस्य न भोजन्यत्वसिद्धिरित्यर्थः ।

**स०व्र०— बुद्धेरपीति** । अन्यथा 'सप्त गतेर्विशेषितत्वाच्च' इत्यत्र सप्तत्वप्रतिपादनेन तद्विरोधः । **असिद्धेरिति** । गन्धादिमत्त्वस्येति शेषः । किमत्र यदिन्द्रियं यं गुणं गृह्णाति, तदिन्द्रियं तद्वदिति व्याप्तिः किं वा बहिरिन्द्रियं यं गुणमित्यादि, अथवा रूपादिषु पञ्चसु मध्ये इत्यपि विशेषणमभिप्रेतमिति विकल्प्य क्रमेण दूषयति **सुखादिग्राहिणीति** ।

**विट्ठल०—** ननु तथापीन्द्रियाणां दशैकं च एकादशेन्द्रियद्वारा द्वादशैवेन्द्रियाण्याहुर्मनोबुद्धी तु द्वादशेत्यादि विरोध इत्यत आह **बुद्धेरपीति** । **तत्तदवच्छिन्नस्येति** । तत्तद्गोलकावच्छिन्नस्येत्यर्थः । **सांसिद्धिकद्रव्यत्वं** स्वाभाविकद्रव्यत्वम् । **आगमादिति** । पृथिवी घ्राणस्तु गन्धगः । अम्भोजित् द्वारसङ्ग्रह इत्यागमादित्यर्थः । **तत एवेति** । तस्मिन्नभश्रोत्रं तु शब्दगमित्याद्यागमादेवेत्यर्थः ।

**॥ इति प्राकृतप्रत्यक्षस्य षड्विधता ॥**

* * *





**॥ अथ मनसः प्राकृतत्वम् ॥**

**१४१ सु०— ननु मनोऽनादिनित्यं कथं प्राकृतम् । मैवम्, प्रमाणाभावात् । स्पर्शरहित-द्रव्यत्वादेः सत्त्वान्नेति चेत् (न), तमस्यस्माकमनैकान्त्यात् । नित्यत्वादिमात्रसाधने सिद्धसाधनत्वात् । कूटस्थतासाधने त्वागमविरोधादिति ॥**

**परि०— प्रमाणाभावादिति** । हैतुकेन हेतोरेव मानत्वेन वाच्यत्वात् तस्य चेहाभावादिति भावः । 'तेन नित्यं मनोऽनादित्वान्न ह्यमनाः पुमांस्तिष्ठती'त्यविरोधः । **यद्वा** । कौटस्थ्यरूपेण मनोऽनादित्वं मन्वानस्योत्तरं **प्रमाणाभावादिति** । स्पर्शरहितद्रव्यत्वनिरवयवत्वादिरेव मानमित्याशङ्क्य निराह **स्पर्शेति** । **तमसीति** । न्यायमते तस्यालोकाभावरूपत्वेऽपि सिद्धान्ते द्रव्यत्वादिति भावः । **सिद्धसाधनत्वादिति** । सूक्ष्मरूपेणानादिनित्यत्वस्य 'तत्प्राक् श्रुतेश्चे'त्यत्र द्वितीयान्त्यपादे वक्ष्यमाणत्वादिति भावः । **आगमेति** । 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च' इत्यादि-श्रुत्या । 'क्रियाशक्तिरहङ्कारस्त्रिविधस्समपद्यत । वैकारिकस्तैजसश्च तामसश्च यतो भवः । मनसश्चेन्द्रियाणां च भूतानां महतामपि' इत्यादि भागवताद्यागमविरोधादित्यर्थः ॥ प्रत्यक्षनिरूपणम् ॥

**यादु०—** स्पर्शरहितद्रव्यत्वादेरित्यत्र आदिपदेन परमाणुत्वनिरवयवद्रव्यत्वादेः सङ्ग्रहः । **सिद्धसाधनत्वादिति** । सूक्ष्मरूपेण तथात्वाभ्युपगमादिति भावः । इदमुपलक्षणम् । निरवयवत्वसिद्धमित्यपि द्रष्टव्यम् । **कूटस्थतेति** । निर्विकारतासाधने 'वैकारिकाद्विकुर्वाणान्मनस्तत्त्वमजायते'त्याद्यागमविरोधादित्यर्थः ।

**वं०प०— तमसीति** । स्पर्शरहितद्रव्यत्वे सत्यप्यनादिनित्यत्वाभावात् सादिनाशित्वे सत्यपि क्रियावत्त्वस्य सत्त्वाच्च तत्र व्यभिचार इत्यर्थः । **सिद्धसाधनतेति** । सूक्ष्मरूपेण नित्यत्वाङ्गीकारादित्यर्थः । **कूटस्थता** सर्वथा विकाराभावेत्यर्थः ।

**कं०रा०—** आहङ्कारिकाकाशकार्यतेति तामसाहङ्कारकार्यो योऽयं भूताकाशस्तदुपचरितत्वलक्षणा तत्कार्यतेत्यर्थः । **अस्माकमिति** । परमते तमस आलोकाभावतया तत्र स्पर्शरहितद्रव्यत्वाभावेनानैकान्त्यायोगादस्माकमित्युक्तं **नित्यत्वेति** । मनो नित्यं स्पर्शरहितद्रव्यत्वादित्यादिना नित्यत्वमात्रसाधने सूक्ष्मरूपेणेन्द्रियनित्यत्वस्य मयाभ्युपगतत्वेन सिद्धसाधनत्वमिति भावः । **कूटस्थेति** । कूटस्थनित्यत्वसाधने तु एतस्माजाते प्राणो मनः सर्वेन्द्रियाणि चेत्याद्यागमविरोध इति भावः ।

**शे०वा०— प्रमाणाभावादिति** । परेणाप्यनङ्गीकारात् प्रत्यक्षस्य, तत्प्रतिबद्धलिङ्गाभावेनानुमानस्य, अनुपलम्भादागमस्य चासम्भवादिति भावः । स्पर्शरहितद्रव्यत्वादिकमेव तदनादिनित्यत्वसाधकमस्तीति





न लिङ्गाभाव इत्यत आह **स्पर्शेति** । द्रव्यत्वमात्रं घटादौ व्यभिचारीत्यतः स्पर्शरहितेत्युक्तम् । तन्मात्रं च स्पर्शादिसाधारणमित्यतो द्रव्यत्वादित्युक्तम् । ननु यत्किञ्चित्स्पर्शरहिते स्पर्शवति घट एव विशिष्टस्यापि सत्त्वात्तत्र व्यभिचार एव । न च स्पर्शरहितत्वं न यत्किञ्चित्स्पर्शरहितत्वं विवक्षितं किन्तु यावत्स्पर्श-संसर्गाभाववत्त्वमेव । तच्च न स्पर्शवति घटेऽस्तीति कथं तत्र व्यभिचार इति वाच्यम् । तथाऽप्युत्पत्त्यवच्छिन्ने घटे व्यभिचारापरिहारात् । तत्र स्ववृत्तिस्पर्शप्रागभावस्यान्येषां च सर्वेषामत्यन्ताभावस्य सम्भवेन याव-त्स्पर्शसंसर्गाभाववत्त्वविशेषितद्रव्यत्वसत्त्वादिति चेन्न । स्पर्शसामान्याभावस्यैव तद्राहित्यशब्दार्थत्वाश्रयणेन तदनवकाशात् । प्रागभावप्रध्वंसयोः सामान्याभावत्वासम्भवेन परिशिष्टस्यात्यन्ताभावस्यैव तत्त्वेन वाच्यतया समवायिन्युत्पत्त्यवच्छिन्नघटादौ च तदसम्भवेन तत्रोक्तहेत्वगमनादित्याशयात् । अत एव चैतद्दोषपरिजिहीर्षया सर्वदेति हेतुविशेषणं शशधरोक्तं निरस्तम् । सामान्याभावविवक्षायां तदनवकाशात् । अत्रादिपदेन स्पर्शरहित-क्रियावत्त्वस्य ज्ञानासमवायिसमवायित्वादेश्च परिग्रहः । **तमसीति** । स्पर्शरहितद्रव्यादेस्तत्र सत्त्वेऽप्यनादि-नित्यत्वाभावादिति भावः । ननु च तमस आलोकाभावत्वेनाद्रव्यत्वात् तद्घटितहेतोस्तत्रागमनान्नाद्यहेतोर्व्यभि-चारः । अद्रव्यत्वादेवाक्रियावत्त्वसिद्धेर्न द्वितीयहेतोरपीत्यतस्तमसो द्रव्यत्ववादिनो वैशेषिकादेर्मतेन तत्र व्यभिचाराभावेऽपि रूपित्वक्रियाश्रयत्वादिना तद्द्रव्यत्ववादिमते तत्र द्रव्यत्वादिघटितहेतुवृत्तेरन्यतरव्यभिचारो भविष्यत्येवेत्याशयेनोक्तम् **अस्माकमिति** । यद्यपि 'तमः सुघोरं गगनच्छन्दं महद्विदारयद् भूरितरेण रोचिषा । मनोजवं निर्विविशे सुदर्शनं गुणच्च्युतो रामशरो यथा चमूम्' इति भागवते, 'ततः कदाचिद् दुःखेन रथमूहुस्तुरङ्गमाः । पङ्कभूतं हि तिमिरमश्वानां जायतेऽनघ । अथ पर्वतभूतं तत्तिमिरं समजायत । तदासाद्य हया राजन्निष्प्रयत्नास्ततः स्थिताः । ततश्चक्रेण गोविन्दः पाटयामास तत्तमः' इति हरिवंशे च तमसश्चक्रविदार्य-त्वादिश्रवणान्न तमसो निःस्पर्शत्वमिति न स्वमतेनाप्यनैकान्त्यं सम्भवति । तथाऽपि तादृशतमोविशेषस्य स्पर्शवत्त्वेऽपि तदितरस्य स्पर्शवत्त्वे मानाभावाद्युक्त एव स्वरीत्या व्यभिचार इति ध्येयम् । ननु वस्तुनि विकल्पासम्भवादन्यतरानैकान्त्यं न दोष इति चेन्न । तद्दूषणताया उपपादयिष्यमाणत्वात् । यद्वैतदस्वरसादेवाह **नित्यत्वादीति** । यथाकथञ्चिन्नित्यत्वादिसाधन इत्यर्थः । **सिद्धेति** । सूक्ष्मरूपेण नित्यतायाः प्राकृतत्व-वादिनाऽपि स्वीकृतत्वादिति भावः । **कूटस्थतेति** । निर्विकारत्वसाधन इत्यर्थः । **आगमेति** । वैकारिका-द्विकुर्वाणान्मनस्तत्त्वमजायत' इत्यागम इत्यर्थः ।

**वा०र०— परेणापीति** । प्रत्यक्षस्य परेणापि अनङ्गीकारात् असम्भवादिति सम्बन्धः । मनोणुत्ववादी सर्वदा स्पर्शरहितद्रव्यत्वादेः विभुत्वसाधकस्य विद्यमानत्वादित्येतत् शशधरशेष्यनुसारेणाह **ननु यत्किञ्चि-त्स्पर्शरहितेत्यादि** । **इत्याशयादिति** । न च उत्पन्न विष्णुघटे व्यभिचार इति वाच्यम् । तत्र समवायि-कारणत्वगुणाश्रयत्वान्यतररूपद्रव्यत्वस्याभावेन अव्यभिचारात् तादृशस्यैव द्रव्यत्वस्य प्रकृते विवक्षणादिति भावः । **स्पर्शरहितक्रियेति** । पूर्वहिताविव व्यवच्छेद्यं ज्ञेयम् । ज्ञानेति आत्ममनःसंयोगस्य ज्ञानासमवायितया





मनः तत्समवायिकारणत्वमेवमात्मनीति स एवात्र दृष्टान्त इति ज्ञेयम् । तर्कताण्डवोक्तरीत्याशङ्कते **यद्यपि तम इति** । **तदितरस्येति** । गिरिदर्यादौ रात्रौ चोपलभ्यमानस्येत्यर्थः । अनुमाननिरूपणस्येति पाठः ।

**स०व्र०— स्पर्शरहितद्रव्यत्वादेरिति** । आदिशब्देन स्पर्शरहितत्वे सति क्रियावत्त्वरूपहेत्वन्तरपरामर्शः । न च सपक्षाप्रवेशादसाधारण्यम् । असाधारण्यस्य दोषत्वाभावपक्षे व्यतिरेकित्वोपपत्तेरिति । **तमसीति** । स्पर्शरहितद्रव्यत्वे सत्यपि अनादिनित्यत्वाभावात्, सादिविनाशित्वे सत्यपि स्पर्शरहितक्रियावत्त्वस्यैव सत्त्वाच्च तत्र व्यभिचारः ।

**विठ्ठल०—** स्पर्शरहितद्रव्यत्वादेरित्यादिपदेन परिमाणत्वनिरवयवत्वादेः सङ्ग्रहः । परमते तमसः आलोकाभावत्वेन द्रव्यत्वादेरभावादस्माकमित्युक्तं किञ्चिद्यथाकथञ्चित् नित्यत्वानादित्वमात्रं साध्यते उत निर्विकारत्वमिति विकल्पं मनसि निधाय क्रमेण दूषयति **नित्यत्वादीति** । **सिद्धसाधनत्वादिति** । सूक्ष्मरूपेण तथाभ्युपगमादित्यर्थः । **कूटस्थेति** । निर्विकारतासाधने 'वैकारिकाद्विकुर्वाणान्मतस्तत्त्वमजायते'त्याद्यागमविरोधादित्यर्थः ।

**चषकः— कूटस्थतेति** । 'कूटं खं विदलं व्योम सन्धिराकाश उच्यत' इति वचनादव्याकृताकाश(वत्)निर्विकारतासाधने 'वैकारिकाद्विकुर्वाणान्मनस्तत्त्वमजायत' इत्यागमविरोधादित्यर्थः ।

**॥ इति मनसः प्राकृतत्वम् ॥**
**॥ इति प्रत्यक्षद्वैविध्यस्य परीक्षा ॥**
**॥ इति प्रत्यक्षनिरूपणम् ॥**

* * *

**॥ अथ अनुमाननिरूपणम् ॥**
**॥ अथ अनुमानलक्षणम् ॥**
**॥ अथ अनुमायुक्तिपदयोः लक्ष्यलक्षणभावानुपपत्तिपरिहारः ॥**

१४२ **सु०—** क्रमप्राप्तं केवलमनुप्रमाणं च । अनुमानं लक्षयति **अनुमेति** ।

## अनु०— अनुमा युक्तिरेवोक्ता

अत्र **अनुमा** इति लक्ष्यम्, **युक्तिः** इति लक्षणम् । यदि च युक्तेरेव बहुशः प्रकृतत्वात् तत्स्वरूपजिज्ञासायामिदं प्रवृत्तम्, तदा विपरीतो लक्ष्यलक्षणभावः ।





**नन्वनुमा युक्तिरिति पर्यायावेतौ । तथा हि । फलप्रामाण्यपक्षेऽनुमितिरनुमेति भावसाधनोऽनुमाशब्दो लिङ्गदर्शनसमुत्थं लैङ्गिकविषयमनुमितिनामकं यथार्थज्ञानमाह, तदेव योजनं युक्तिरिति युक्तिशब्दोऽपि । साधनप्रामाण्यपक्षेऽप्यनुमीयतेऽनयेति करणसाधनोऽनुमाशब्दो यमर्थमाचष्टे, तमेव युज्यतेऽनयेति युक्तिशब्दोऽपि । तत्कथं लक्ष्यलक्षणभाव इत्यत उक्तम्— उक्तैवेति ।**

**अत्रापि व्यवहार एव साध्यो न त्वनुमात्वं, युक्तित्वं वा । येनोक्तदोषः स्यादिति भावः ।**

**परि०— क्रमप्राप्तमिति** । 'अनुप्रमाणमेतानि ह्यक्षयुक्तिवचांस्यत' इत्यत्र निर्दिष्टेष्वक्षानन्तरं प्राप्तमित्यर्थः । **केवलमित्यादि** । अनुमितिरूपं तत्करणरूपं चेत्यर्थः । धर्मिणं प्राङ्निर्दिश्य पश्चाद्धर्मा वाच्या इति भावेनोक्तं **इति लक्ष्यमिति** । **लक्षणमिति** । **बहुश इति** । 'युक्तोऽयुक्तश्च यद्यर्थ' इत्यादिना ग्रन्थेनेति योज्यम् । **विपरीत इति** । शब्दक्रमादर्थक्रमो बलीयानिति भावः । केवलानुप्रमाणरूपानुमानलक्षणपरत्वं व्यञ्जयन्नुक्तेत्येतदवतारयति **नन्विति** । **भावसाधन इति** । भावो धात्वर्थ एव साधनं निमित्तं प्रत्ययोत्पत्तौ यस्य शब्दस्य स भावसाधन इत्यर्थः । अनुपूर्वात् माङ् मान इत्यस्मात् घञर्थे कविधानमिति भावार्थके कप्रत्यये आतो लोपे टाप्रत्यये रूपमिति भावः । **योजनं युक्तिरिति** । युजिर्योग इति अस्मात् क्तिन्नबाधादिभ्य इति भावे क्तिन्प्रत्यय इति भावः । **साधनेति** । अनुमितिकरणप्रामाण्यपक्षेऽपीत्यर्थः । **युज्यतेऽनयेति** । स्त्रियां क्तिन् इति क्तिन्प्रत्ययः । **युक्तिशब्दोऽपीति** । यथार्थज्ञानमाहेत्यन्वयः । **अत्रापीति** । न केवलं प्रत्यक्षलक्षणे इत्यपेरर्थः ।

**यादु०— साधनपक्ष इति** । करणप्रामाण्यपक्ष इत्यर्थः ।

**वं०प०— लैङ्गिकेति** । लिङ्ग एव लैङ्गिकमिति स्वार्थे प्रत्ययो द्रष्टव्यः ।

**कं०रा०— क्रमप्राप्तमिति** । क्रमप्राप्तं केवलमनुमानमनुप्रमाणरूपमनुमानं च लक्षयतीत्यर्थः । **अत्रेति** । अनुमानयुक्तिरित्यत्रानुमेत्यनेन लक्ष्यं निर्दिश्य युक्तिरित्यनेन तु लक्षणं निर्दिश्यत इत्यर्थः । **यदि चेति** । यदि च ''आगमस्यागमेनैव विरोधे युक्तिरिष्यते । प्रत्यक्षमुपजीव्यं स्यात्प्रायो युक्तिरपि क्वचित् । स्यात्तत्र युक्त एवार्थो युक्तिश्च त्रिविधा मता । व्याप्तिः प्रत्यक्षगा यस्या युक्तिरागमगा तथा । प्रत्यक्षागममूला





तु युक्तिस्तत्र बलीयसी । यथार्थज्ञानजनका यथार्था युक्तयः स्मृताः । अनुप्रमाणमेतानि ह्यक्षयुक्तिवचांस्यत'' इति बहुशो युक्तेरेव प्रकृतत्वाद्युक्तिस्वरूपजिज्ञासायामनुमानयुक्तिरिति वाक्यं प्रवृत्तं तथा युक्तिरिति लक्ष्यमुच्यते अनुमेति तु लक्षणमिति विपरीतो लक्ष्यलक्षताभाव इत्यर्थः । **तदेव योजनं युक्तिरिति** । भावसाधनो युक्तिशब्दो लैङ्गिकविषयज्ञानमेवाहेत्यर्थः ।

**श्रीनिधि०**— तदा विपरीत इति **अनुमेति** लक्षणं **युक्तिरिति** । लक्ष्यमित्यर्थः । **व्यवहारः एव साध्य इति** । युक्तिरिति अनुमेति वा व्यवहारविषयत्वं लक्ष्यतावच्छेदकमिति भावः ।

**शे०वा०**— अनुमाननिरूपणस्य प्रत्यक्षनिरूपणानन्तर्ये हेतुमाह **क्रमप्राप्तमिति** । प्रत्यक्षानन्तर-मनुमानस्योद्देशात् तन्निरूपणानन्तर्यमनुमाननिरूपणस्येति भावः । **केवलमनुप्रमाणं चेति** । अतो न मूले पृथक् तदुभयानिरूपणान्न्यूनत्वं शङ्कनीयमिति भावः । लोकप्रसिद्धिं ब्रह्मतर्कोक्तिं च मूलीकृत्यान्यत्रानुप्रमाणविभागत्वेन अनुमानस्यैवाचार्यैरुक्तेस्तदनुरोधेनेहापि लक्ष्यलक्षणविभागमाह **अत्रेति** । **लक्ष्यं** लक्ष्यनिर्देश इत्यर्थः । एवं लक्षणं लक्षणनिर्देश इत्यर्थः । पूर्वपक्षेऽरुचिं सूचयन्नेव पक्षान्तरमाह **यदि चेति** । युक्तेरेव स्वरूपजिज्ञासायां नियामकमुक्तं **बहुश इति** । 'प्रत्यक्षमुपजीव्यं स्यात् प्रायो युक्तिरपि क्वचित्', 'व्याप्तिः प्रत्यक्षगा यस्या युक्तिगाऽऽगमगा तथा', 'अनुप्रमाणमेतानि ह्यक्षयुक्तिवचांस्यतः' इत्यादिना प्रत्यक्षादिसमकक्षतयाऽनुप्रमाण-विभागत्वेन युक्तेरेव प्रकृतत्वादित्यर्थः । **विपरीत इति** । अनुमेति लक्षणं युक्तिरिति लक्ष्यमिति विपरीतो लक्ष्यलक्षणभाव इत्यर्थः । अनुमा युक्तिरित्येतावतैव पूर्तेरुक्तैवेत्यंशवैयर्थ्यमित्यतो लक्ष्यलक्षणभावोपपादनार्थ-त्वान्न तस्यानर्थक्यमिति भावेन तदुपपादकतया योजयितुं लक्ष्यलक्षणभावानुपपत्तिशङ्कामुत्थापयंस्तद्बीजभूतां तच्छब्दयोः पर्यायतां तावत्समर्थयितुं तां प्रतिजानीते **नन्विति** । **साधनपक्ष इति** । करणप्रामाण्यपक्ष इत्यर्थः । **तत्कथमिति** । ज्ञातत्वाज्ञातत्वायोगान्नैकस्यैव लक्ष्यलक्षणभावः सम्भवतीति भावः । प्रत्यक्षलक्षणेऽपि व्यवहारस्यैव साध्यत्वादत्रापीत्यपिशब्दः । अनुमा युक्तिरिति मूलस्याद्ययोजनामनुसृत्यानुमात्वमिति द्वितीय-योजनामनुसृत्य युक्तित्वमित्युक्तमित्यवधेयम् ।

**वा०र०**— **बहुश इतीति** । बह्वल्यार्थाच्छस्कारकात् अन्यतरस्यां इति वीप्सायां शस्प्रत्ययः अंशो नानाव्यपदेशात् इत्यधिकरणीये शरूपक्रियाणां च स्वरूपैरपि सर्वशः इत्येतदुपपादनटीकायां समस्तशः इत्येतदुपपादनटीकायां चोपपादयिष्यते । तद्वत् उपपादनीयः । **विपरीत इतीति** प्रतीकोपादानम् । विपरीतो लक्ष्यलक्षणभावः इत्यर्थ इति पाठः । **लक्ष्यलक्षणभावानुपपत्तीति** । अनुपपत्त्यभावे उपपादनस्य व्यर्थत्वादिति भावः ।

**स०व्र०**— ननु अनुमायुक्तिशब्दयोः पर्यायत्वात् कथं प्रकृते लक्ष्यलक्षणभाव इत्यत आह **अत्रानुमेति** । न च 'याथार्थ्यमेव मानत्वम्' इत्यादिना पूर्वत्रापि यथार्थमानशब्दयोरेकप्रवृत्तिनिमित्तत्वेन





पर्यायत्वात् तत्रापि मानत्वमिति लक्ष्यनिर्देशः याथार्थ्यमिति लक्षणोक्तिरिति कुतो नोक्तमिति वाच्यम् । शब्दद्वयेऽपि योगलब्धप्रवृत्तिनिमित्तप्रकारकबोधजनकत्वेऽपि रूढ्या यथार्थमानशब्दयोर्यथार्थत्वप्रकारकबोध-जनकत्वाभावेन पर्यायत्वाभावात् लक्ष्यलक्षणभावस्य प्रकरणाद्यनुसन्धानेन सुज्ञेयत्वात् तत्रानुक्तिरिति भावः । 'युक्तेरेव बहुश इति', 'स्यात्तत्र युक्त एवार्थः', 'युक्तिगाऽऽगमगा तथा', 'यथार्था युक्तयः', 'अक्षयुक्तिवचांसि' इत्यादिनेति शेषः । **भावसाधन इति** । भावः साध्यते अनेनेति भावसाधनः । भावार्थः इत्यर्थः । एवं करणसाधन इत्यत्रापि द्रष्टव्यम् । **लैङ्गिकविषयमिति** । साध्यविषयमित्यर्थः ।

**विठ्ठल०— युक्तेरेवेति** । विरोधो युक्तिरिष्यते । प्रायो युक्तिरपि क्वचित् । युक्तिश्च विविधा मता । अक्षयुक्तिवचांस्यत इत्यादिना युक्तेरेव बहुशः प्रकृतत्वादित्यर्थः । **भावसाधन इति** । भावो धात्वर्थः । स एव साधनं प्रत्ययोत्पत्तौ यस्य शब्दस्य भावसाधन इति विग्रहः । **तदेव योजनमिति** । **योजनं युक्तिरिति** भावसाधनो युजिर्योग इत्यस्मान्निष्पन्नो युक्तिशब्दः यथार्थज्ञानमाहेत्यर्थः । **अत्रापीति** । न केवलप्रत्यक्षलक्षण इत्यर्थः । **इत्यादावित्यादिपदेन** तर्को दुष्टस्तथानुमेति तत्त्वनिर्णयसङ्ग्रहः ।

**चषकः— फलप्रामाण्येति** । अनुमानफलीभूतानुमितेः प्रमात्वकल्प इत्यर्थः । तदानीं ल्युटो भाव-साधनत्वात् **भावसाधन इति** । अनुपसृष्टान्माङ् मान इत्यस्माद्भावार्थे कविधानमिति भावार्थे कप्रत्यये आतो लोपे टापि च रूपं निष्पद्यत इति भावः । **साधनेति** । करणप्रामाण्यकल्पेऽपीत्यर्थः ।

**॥ इति अनुमायुक्तिपदयोः लक्ष्यलक्षणभावानुपपत्तिपरिहारः ॥**

* * *

**॥ अथ युक्तिरेवेत्येवकारकृत्यम् ॥**

१४३ **सु०— ननु युक्त्युपपत्तिशब्दावेकार्थौ, तथा चान्यत्र निर्दोषोपपत्तिरनुमेत्यादौ यदि निर्दोषग्रहणस्य व्यावर्त्यमस्ति तदाऽत्रापि तत्कर्तव्यं स्यात्, अन्यथाऽतिव्याप्तिप्रसङ्गात् । न (नास्ति) चेन्न (तत)कर्तव्यमिति । उच्यते । अस्ति खलु शब्दानां मुख्यामुख्यभेदेन द्वयी वृत्तिः । एवञ्चोपपत्तिशब्दादुपपत्ताविव तदाभासेऽपि प्रतिपत्तावुत्पन्नायां तद्व्यवच्छेदेन मुख्यार्थोपदर्शनार्थं तत्र निर्दोषग्रहणं कृतम्, अत्र पुनरन्तर्गतनिर्दोषत्वं मुख्यमेवार्थमुपा-दाय युक्तिरित्येव उक्तम्, समीचीनो हेतुरनैकान्तिको हेतुरिति यथेति । तदिदमप्युक्तं युक्तिरेवेति । न तु निर्दोषत्वविशेषिता । 'युक्तिशब्दमुख्यार्थविवक्षायां तदनपेक्षणात्' इति शेषः ।**





**परि०— अन्यत्रेति** । प्रमाणलक्षणे तर्कोऽदुष्टस्तथाऽनुमेति तत्त्वनिर्णये चेत्यर्थः । **न (तत्) कर्तव्यमिति** । अन्यत्रेत्यनुषज्यते । अन्तर्गतनिर्दोषत्वमिति बहुव्रीहिः । शब्दानाममुख्यार्थोपस्थापकत्वव्यवच्छेदाय विशेषणोक्तिं दृष्टान्तेन व्यनक्ति **समीचीनो हेतुरिति** । यथेत्याकृष्यते । मुख्यार्थोपस्थापकत्वव्यवच्छेदाय विशेषणोक्तिं दृष्टान्तेन व्यनक्ति **अनैकान्तिको हेतुरिति यथेति** । समीचीनो हेतुरिति यथेत्येतावत एव प्रकृतोपयोगेऽपि शेषोक्तिः यथा मुख्यार्थधीव्यवच्छेदाय विशेषणोक्तिः तद्वदमुख्यार्थव्यवच्छेदाय विशेषणोक्तिः समीचीनो हेतुरित्यादाविव युज्यत इति वक्तुमिति ध्येयम् । यद्वा युक्तिशब्देन मुख्यार्थस्यैवादौ धीरित्येतद्विवरणायानैकान्तिको हेतुरित्यस्योक्तिः । अन्यथा तत्र विशेषणोक्तिर्न स्यादिति भावः ।

**यादु०— न तत्कर्तव्यमिति** । निर्दोषोपपत्तिरित्यत्रापीति शेषः । मुख्यार्थपराच्छब्दादाभासरूपामुख्यार्थप्रतिपत्तौ जातायां तद्व्यवच्छेदेन मुख्यार्थोपदेशनार्थं निर्दोषग्रहणमित्येतन्निदर्शयति **समीचीनो हेतुरिति** । ननु मुख्यार्थपराच्छब्दादाभासरूपामुख्यार्थप्रतिपत्तिः क्व दृष्टा येनात्रापि तत्प्राप्तौ तद्व्यवच्छेदाय यत्न इत्यत उक्तं **नैकान्तिक इति** । यथाशब्दस्योभयत्रान्वयः ।

**कं०रा०— नास्ति चेदिति** । निर्दोषत्वग्रहणस्य व्यावर्त्यं नास्ति चेन्निर्दोषोपपत्तिरनुमेति ग्रन्थान्तरे निर्दोषत्वग्रहणं न कर्तव्यमित्यर्थः ।

**श्रीनिधि०—** ननु उपपत्तिशब्दः आभाससाधारणः युक्तिशब्दस्तु नाभास एव वर्तते । तथा चात्र निर्दोषग्रहणं न कर्तव्यमित्यत आह **युक्त्युपपत्तिशब्दाविति** । **तदनपेक्षणादिति** । निर्दोषत्वविशेषणानपेक्षणादित्यर्थः ।

**शे०वा०—** युक्तिरेवोक्तेत्यत्रत्यैवकारस्योक्तैवेति भिन्नक्रमतामाश्रित्य सार्थक्यं वर्णितम् । इदानीं यथास्थितसम्बन्धमङ्गीकृत्य तत्सार्थक्यं सुवचमिति भावेन तद्वक्तुमाशङ्कते **नन्विति** । अन्यत्रेत्यस्यैव विवरणं **निर्दोषोपपत्तिरनुमेत्यादाविति** । यद्वाऽन्यत्र मानलक्षणादावित्यर्थः । निर्दोषोपपत्तिरनुमेत्यादौ इत्यादिपदेन 'तर्कोऽदुष्ट' इत्यादेः सङ्ग्रहः । **अत्रापीति** । 'अनुमा युक्तिरि'त्यनुव्याख्यायामपीत्यर्थः । **तत्** निर्दोषपदम् । **अन्यथेति** । निर्दोषत्वेनाविशेषण इत्यर्थः । **न कर्तव्यमिति** । निर्दोषोपपत्तिरनुमेत्यादिप्रमाणलक्षणादाविति वर्तते । **निर्दोषग्रहणं कृतमिति** । उपलक्षणं चैतत् । अनुमानदोषनिरूपणाय पातनिव्यभिचाराभावादिति भावः । अत एव पद्धतौ 'निर्दोषोपपत्तिरनुमानमित्युक्तं के तत्रोपपत्तिदोषा' इत्युक्तम् । कार्थतया स्वरूपसङ्कीर्तनं तत् । अत एव च तत्र निर्दोषपदकृत्यं नोक्तम् । अन्यथा तस्य व्यावर्तकत्वे प्रत्यक्षागमलक्षणगतनिर्दोषत्वग्रहणस्येवास्यापि कृत्यमुच्येतेत्यपि द्रष्टव्यम् । **मुख्यमेवार्थमिति** । व्याप्तिसमुचितदेशादिसिद्धिमत्त्वरूपमित्यर्थः ।





स्यादेवं यदि मुख्यामुख्यभेदेन द्वयी वृत्तिः शब्दानां सिद्धा स्यात् । सैव तु कुतः सिद्धेत्यत उभयत्र प्रयोगप्रत्ययतौल्यादिति भावेनोभयत्र तौ दर्शयति **समीचीन इत्यादिना** । हेतुशब्दस्य मुख्यामुख्यहेतुविषयत्वं व्यवस्थापयितुं समीचीन इति अनैकान्तिक इति च तद्विशेषणमिति ध्येयम् । प्रतिज्ञातार्थे मूले हेत्वनुक्तेरपेक्षितं पूरयति **युक्तीति** ।

**वा०र०— व्यभिचाराभावादिति भाव इति** । लक्षणस्य लिङ्गतयोपयोगेन लक्षणातिव्याप्तेः लिङ्गस्य व्यभिचारे पर्यवसानं अभिप्रेत्यैव एवमुक्तमिति ज्ञेयम् । **पातनिकार्थतयेति** । प्रसक्त्यर्थतयेत्यर्थः । सामानाधिकरण्यनियमोक्त्या व्यधिकरणत्वमात्रव्यावृत्तिः । एवं च नदीपूरादौ व्यधिकरणे सामानाधिकरण्यमेव नास्ति दूरे दूरे तन्नियमः इत्याशयेनाह **व्यधिकरणेति** । **वह्न्यादाविति** । व्यधिकरणेन वह्न्यादिना धूमादिसाधनानङ्गीकारेण सामानाधिकरण्यनियमसत्त्वादिति भावः । नियमो दर्शनात् तन्न दर्शनादिति बौद्धकारिकायाः अयमर्थः । नियमो दर्शनात् इत्यत्रादर्शनात् इति छेदः । दर्शनात् इत्यत्र दर्शनशब्दोऽन्वयवाची । अदर्शनशब्दोऽन्वयविरुद्धव्यतिरेकवाची । नञः विरुद्धार्थवाचित्वात् । ततश्चान्वयात् अविनाभावनियमानां व्यतिरेकाच्चाविनाभावेनेति नकारद्वयसम्बन्ध इति । वरदराजीयटीकानुसारीयमर्थः । प्रथमतो दर्शनपदं अन्वयार्थम् । एको नकारो निषेधार्थः । अपरस्तु न दर्शनादिति विरुद्धार्थकः । सन् दर्शनपदेन समस्तः । तथा च दर्शनात् अन्वयात् न दर्शनात् अन्वयविपरीतव्यतिरेकाविनाभावनियमो नेति लभ्यते । न समासश्चायं इत्यपि प्रतिभाति । वरदराजीयानुसारेणाह **त्रिंशधात्वेनेत्यादिना** । अयं तत्पूर्वकानुमानं त्रिविधं इति अनुमानलक्षणपरसूत्रव्याख्यावसरे केचित् अविनाभावं तादात्म्यं तदुत्पत्तिनिबन्धनं अनुमानाङ्गं आचक्षते इत्यादि वाचस्पतिग्रन्थे एतत्कारिकोदाहरणपूर्वकं विशेषविचारानुसारेणाधिकं प्रमेयं बोध्यम् । नियमो दर्शनात् न न दर्शनात् इत्येतत् उपक्षेपया उक्तं स च प्रतिबन्धो न दर्शनादर्शनमात्रावसेयः । तथा सति स श्यामो मैत्रातनयत्वात् परिदृश्यमानस्तोमवत् इत्यपि अनुमानं स्यात् इहापि स्तोमे दर्शनादर्शनेति । तदनुसारेणात्र उपपादनं बोध्यम् ।

**स०व्र०— तत्कर्तव्यमिति** । निर्दोषग्रहणं कर्तव्यमित्यर्थः । **अन्यथेति** । निर्दोषादिव्यावर्त्य इति शेषः । **नास्ति चेदिति** । व्यावर्त्यमिति शेषः । **न कर्तव्यमिति** । निर्दोषोपपत्तिरित्यादिस्थल इति शेषः ।

**विठ्ठल०— न कर्तव्यमिति** । निर्दोषोपपत्तिरनुमेत्यत्रेति शेषः । मुख्यार्थपरशब्देनामुख्यार्थप्रतीतौ जातायां तद्व्यवच्छेदार्थं निर्दोषग्रहणमित्येतन्निदर्शयति **समीचीनो हेतुरिति** । ननु मुख्यार्थपरशब्देनामुख्यार्थप्रतीतिः क्व दृष्टा येन तद्व्यवच्छेदाय यत्न इत्यतः अमुख्यार्थेऽपि प्रयोगं दर्शयति **अनैकान्तिक इति** । यथाशब्दस्योभयत्र सम्बन्धः ।

**१४४ सु०— अथवा नेदं पर्यायलक्षणम्, किन्नाम युज्यते सम्बध्यते इति युक्तिरनुमोक्तेति योज्यम् । नन्वेवं सति विरुद्धानध्यवसितव्यवच्छेदेऽप्यनैकान्तिकस्यानुमानत्वं**





**स्यात्; इत्यतो युक्तिरेव इत्युक्तम् । युज्यत एव न तु (वि)युज्यतेऽपीत्यर्थः । प्रमेयत्वादिकं ह्यनित्यत्वादिना युज्यते, न युज्यते च; न तु युज्यत एव । तदनेन साहित्यनियमवत् व्याप्यं, लिङ्गम्, अनुमानमिति चोच्यत इत्युक्तं भवति ।**

**परि०— इदमिति** । अनुमा युक्तिरिति पदद्वयं, पर्यायेण क्रमेणेति वा, पर्यायं सदिति वा, युक्तिरित्येतदनुमेत्यस्य अनुमेत्येतद्युक्तिरित्यस्य, लक्षणं न भवति । किन्तु कर्मव्युत्पत्त्या युक्तिशब्दः सम्बध्यमानवाची । तथा च युक्तिः केनचित्साध्यत्वादिनाऽभिमतेन सम्बध्यमानं यत्तदनुमोच्यत इति योज्यमित्यर्थः । **विरुद्धानध्यवसितेति** । तयोः सपक्षावृत्तित्वेन साध्यसम्बन्धाभावादिति भावः । **अनैकान्तिकस्येति** । साधारणानैकान्तिकस्येत्यर्थः । असाधारण्यस्य अनध्यवसितपदेनोक्तत्वात् किमनेनोक्तमित्यतः निर्दोषोपपत्तिरनुमेत्यत्र निर्दोषपदेन साहचर्यनियमवदनुमेति वा व्याप्यमनुमेति वा अभिप्रेतं मिथ्यात्वानुमानखण्डने च लिङ्गं हेतुरिति लिङ्गपदं प्रयुक्तम्, 'तर्कोऽदुष्टस्तथानुमे'त्यत्र अनुमापदं प्रयुक्तं तथा चैतेषां भिन्नभिन्नार्थत्वाद्विरोध इति न शङ्क्यम् । किं त्वेकार्थत्वमेवोक्तं भवति इत्याह **तदनेनेति** । **साहित्यनियमवदिति** । व्याप्यमितीत्येवंरूपेणेतिशब्दस्य प्रत्येकं सम्बन्धः । साहित्यं च यथासम्भवं ध्येयम् ।

**यादु०— असाहित्यनियमवदिति** । अव्यभिचरितसम्बन्धवदित्यर्थः । न तु सामानाधिकरण्य-नियमवदिति । व्यधिकरणनदीपूरादावव्याप्त्यापत्तेः । व्याप्यं लिङ्गमित्युक्तिस्तु ग्रन्थान्तरविरोधपरिहाराय ।

**वं०प०— सम्बध्यत इति** । हेतुः साध्येनेत्यर्थः । **व्याप्यं** व्याप्तिमत् ।

**कं०रा०— नन्वेवमिति** । युज्यते साध्येन सह सम्बन्ध इति साध्यसम्बन्धोक्त्या तद्रहितयोः विरुद्धानध्यवसितयोर्व्यवच्छेदेऽपि शब्दो नित्यः प्रमेयत्वादिसाधनैकान्तिकस्य साध्यसम्बन्धसद्भावादनुमानत्वं स्यादित्यर्थः ।

**श्रीनिधि०— नेदं पर्यायलक्षणमिति** । अनुमा युक्तिरिति लक्षणबोधकं पदद्वयं नैकार्थबोधक-मित्यर्थः । तथात्वे हि पर्यायता स्यात् । **विरुद्धानध्यवसितव्यवच्छेदेऽपीति** । तयोः साध्यार्थेन योग एव नास्ति । तथा हि विरुद्धा साध्यविपर्ययव्याप्तिः । अनध्यवसितोऽपि तथैव । पक्षमात्रवृत्तित्वात्तस्य तत्र च साध्यसन्देहादिति भावः ।

**शे०वा०— व्यवच्छेदेऽपीति** । आद्यस्य साध्याभावेनैव सम्बन्धाद् द्वितीयस्य साध्यतदभाव-सम्बन्धशून्यत्वात् द्वयोरपि साध्यसम्बन्धाभावादिति भावः । **अनेनेति** । युक्तिरेवेत्यनेनेत्यर्थः । **साहित्य-**





**नियमवदिति** । अव्यभिचरितसम्बन्धवदित्यर्थः । नियतः सम्बन्धो व्याप्तिः नियमश्चाव्यभिचार इति वैशेषिकपरीक्षायां वक्ष्यमाणत्वादेतदेव चाभिप्रेत्य सम्बन्धविशेषो व्याप्तिरिति तृतीयस्य द्वितीये वक्ष्यति । न तु सामानाधिकरण्यनियमवदित्यर्थः । व्यधिकरणनदीपूरादावव्याप्त्यापातात् । धूमव्यभिचारिवह्न्यादावतिव्याप्तिप्रसङ्गाच्च । अत्र व्याप्यं लिङ्गमित्युक्तिस्तु ग्रन्थान्तराविरोधायेति द्रष्टव्यम् ।

**स०व्र०— विरुद्धानध्यवसितेति** । तत्र योगस्यैवाभावादिति भावः ।

**विठ्ठल०— नेदमिति** । युक्तिरित्येतन्न लक्ष्यान्तर्गतं लक्षणं येन पर्यायत्वेन व्यवहारः साध्य इति वक्तव्यम् । किं तु कर्मव्युत्पत्त्या युक्तिशब्दः सम्बध्यमानवाची तथा च युक्तिः केनचित्साध्येन सम्बध्यमानाया सानुमोच्यत इति योज्यम् । तथा च लक्ष्यलक्षणभावोपपत्तिरिति भावः । प्रागनुमितिरूपत्वं तत्करणत्वं च युक्तिशब्दार्थाभिप्रेतं इत्यसाध्येन व्याप्तत्वमात्रमिति ध्येयम् । **नन्वेवमिति** । युज्यते साध्येन सह सम्बध्यत इति साध्यसम्बन्धोक्त्या तद्रहितयोर्विरुद्धानध्यवसितयोर्व्यवच्छेदेऽपि शब्दोनित्यः प्रमेयत्वादित्यनैकान्तिकस्य साध्यसम्बन्धसद्भावादनुमानत्वं स्यादित्यर्थः । **तदनेनेति** । यत्साहचर्यनियमवदत एव व्याप्यं लिङ्गमित्यनुमेति चोच्यत इति सम्बन्धः । प्रकृतनिर्दोषपदानुरोधेन साहचर्यनियमवदित्युक्त्वा तत्फलं व्याप्यमित्यनेनोक्तं अत्र प्रमाणलक्षणादौ । अनुमेत्येवोक्तत्वान्मिथ्यात्वानुमानखण्डने लिङ्गमित्युक्तेर्भिन्नार्थतया विरोधप्रतीतिं वारयितुं लिङ्गमनुमेति पदद्वयं गृहीतमिति ध्येयम् ।

**चषकः— विरुद्धानध्यवसितेति** । विरुद्धासाधारणानैकान्तिकयोः साध्यासामानाधिकरण्यनियमादिति भावः ।

**१४५ सु०— सौगतास्तु मन्यन्ते, 'तादात्म्यतदुत्पत्ती एवानुमानाङ्गभूतौ सम्बन्धावि'ति । वैशेषिकास्तु, 'अस्येदं कार्यं कारणं सम्बन्ध्येकार्थसमवायि विरोधि चे'ति लैङ्गिकनिमित्तसम्बन्धान्परिसञ्चक्षते । एवं 'मात्रानिमित्तसंयोगिविरोधिसहचारिभिः स्वस्वामिवध्यघाताद्यैः साङ्ख्यानां सप्तधाऽनुमे'ति साङ्ख्याः परिसङ्ख्यातवन्तः । तत्सर्वमपाकर्तुं वा युक्तिरेव इत्यवधारणम् । नियतसम्बन्धवदेवानुमानं न सम्बन्धविशेषवदित्यर्थः । एतच्च उपपादयिष्यामः ।**

**परि०— तादात्म्यतदुत्पत्ती इति** । तादात्म्यमभेदः तदुत्पत्तिः कार्यकारणभावः । आद्यं यथा । अयं वृक्षः चूतत्वादित्यादि । द्वितीयमग्रे व्यक्तीकरिष्यामः । **अस्येदमिति** । अस्येदं कार्यं अस्येदं कारणं अस्येदं सम्बन्धि अस्येदमेकार्थसमवायि अस्येदं विरोधि चेति कार्यत्वकारण-





त्वादिरूपान् अनुमेयप्रयोजकसम्बन्धानाहुरित्यर्थः । सम्बन्धिपदेन संयोगिसमवायिनोर्ग्रहः । तत्राद्यं धूमादग्नेरनुमानम् । विशिष्टमेघोन्नत्यादिना वृष्ट्यादेर्द्वितीयम् । शीतोष्णादिपदार्थसंयोगिना देहेन तत्र स्पर्शनेन्द्रियस्य तृतीयम् । ऊष्मणा तेजस्समवायिना तेजसश्चतुर्थम् । रसेन रूपस्य पञ्चमम् । वृष्ट्यजनने तद्विरोधिनो वायुमेघसम्बन्धादेरिति षष्ठम् । **मात्रेति** । तत्तद्वस्तुस्वभावः । पद्मविकासादिना सूर्योदयादेरनुमानम् । निमित्तं कार्यकारणभावः । सहचारिणो रूपरसादयः । निमित्तादिचत्वारि प्राक् प्रदर्शितानि । **स्वस्वामीति** । स्वं वित्तभृत्यादि । तेन स्वामिनः । स्वामिना वा स्वस्यानुमानम् । अवस्थाविशेषयुक्तमार्जारेण तत्समीपेऽन्तर्हितमूषकानुमानमित्यादि द्रष्टव्यम् । तत्सर्वं वादित्रयोक्तं परिगणनत्रयमपीत्यर्थः । **एतच्चोपपादयिष्याम इति** । 'व्याप्तिरेव तु सा स्मृते'त्युत्तरवाक्यव्याख्यावसरेऽविनाभावरूपव्याप्तेरेव प्रयोजकत्वेन परोक्तपञ्चरूपाणां अव्यापकत्वोक्तिसाम्येन परस्पराव्याप्त्याऽप्रयोजकत्वादित्युपपादयिष्याम इति भावः । अन्ये तु भक्तिपादे रोहिण्युदयादेर्लिङ्गलिङ्गिभावोक्त्योपपादयिष्यामः । तत्र तादात्म्यादेरभाव इत्याहुः । अपरे तु 'अर्थापत्त्युपमाऽभावा अनुमान्तर्गताः क्वचिदि'ति, 'प्रारम्भाद्याश्च युक्तयः । आगमार्थावसित्यर्था नियतव्याप्तयोऽखिला' इति, 'परिशेषो मिथः सिद्धिचक्रकस्वाश्रयादय' इत्यादिना च अर्थापत्त्यादेरुपक्रमादेरात्माश्रयादेश्चानुमानत्वोपपादनेनोपपादयिष्याम इत्यर्थः । तत्रोक्तपरिगणनस्याव्याप्त्यापत्तेरित्याहुः ।

**गु०दी०— वैशेषिकास्तु** इत्यत्र क्वचित्कार्यकारणस्यानुमापकम् । यथा धूमः । क्वचित्कारणं कार्यस्यानुमापकम् । यथा विशिष्टपुष्पोन्नतिः । क्वचित्सम्बन्ध्येव सम्बन्ध्यन्तरानुमापकम् । यथा भेरीश्रवणं राजगमनस्य एकार्थसमवायी रसो रूपस्य । विरोधितमःप्रकाशनिवृत्तेरित्यर्थः । **मात्रानिमित्त** इत्यत्र **मात्रा** रूपादिविषयः । तेन चक्षुराद्यनुमानम् ।

**यादु०— अस्येदं कार्यमित्यादि**ः । यद्यपि 'अस्येदं कार्यं कारणं संयोगि विरोधि समवायि चेति लैङ्गिकमि'ति वैशेषिकसूत्रपाठः तथापि संयोगि समवायि एकार्थसमवायि विरोधि चेति सूत्रान्तरे एकार्थसमवायिनोऽपि गृहीतत्वात् संयोगिसमवायिनोः सम्बन्धिशब्देनैव लाघवेन निर्देशः कार्य इति तत्सम्प्रदायमाश्रित्य सम्बन्धीत्यनुवादः कृत इति ज्ञातव्यम् । अत्र कार्यं कारणमिति प्रकारद्वयमिति प्राञ्चः । नवीनास्तु कार्यं कारणमित्येक एव सम्बन्धः प्रकारद्वयेनोक्तः । संयोगि समवायि चेति प्रकारद्वयं सम्बन्धिशब्देन विवक्षितम् । एवं पञ्चरूपतोपपत्तिरित्याहुः । कार्याद्धूमादेरग्न्याद्यनुमानं, कारणाद्भेरीदण्डसंयोगविशेषाद्बधिरस्य शब्दानुमानं, संयोगिनः शरीरस्य स्पर्शनात् त्वगिन्द्रियानुमानं, समवायिना जलौष्ण्येन तत्सम्बद्धतेजोऽनुमाम्, एकार्थसमवायिना रसादिना





रूपाद्यनुमानम्, अभूतेन वर्षेण भूतस्य वाय्वभ्रसंयोगस्य विरोधिनोऽनुमानमित्याद्युदाहरणानि तच्छास्त्रोदितानि ज्ञातव्यानि । **एवं मात्रानिमित्तेति** । अत्र मात्राशब्दः स्वभावपरस्तेन तन्निबन्धनमनुमानं ग्राह्यम् । निमित्तशब्दः कार्यकारणपरः । सहचारिशब्दस्त्वेकार्थसमवायिपरः । स्वस्वामीत्यादि सम्बन्धकीर्तनम् । तेन तद्वदनुमानमिह ग्राह्यम् । समुद्रवृद्ध्या कुमुदप्रकाशेन च चन्द्रोदयस्यानुमानं स्वभावनिबन्धनानुमानोदाहरणम् । तत्र समानकालीनत्वेन न कार्यकारणभावः किन्तु स्वभावनिबन्धनमेवानुमानमिति तेषामाशयः । निमित्तादीनामुदाहरणान्युक्तानि । अविनाभूतेन केनचिदित्यादिना, स्वेन स्वामी, तादृशेन स्वामिना वा तादृशं भृत्यादि स्वमनुमीयते । वध्यघातकभावेन तु विस्फूर्जितोऽहिर्झटान्तरितनकुले लिङ्गमिति ज्ञातव्यम् । कुत इत्यत आह **एतच्चेति** । भक्तिपाद इति शेषः । तत्र हि 'रोहिण्युदय आसन्नः कृत्तिकाऽभ्युदिता यतः' इत्यत्र कृत्तिकोदयादिकं रोहिण्युदयासत्त्यादावनुमानमिति समर्थ्यते । न हि तत्राविनाभावरूपमव्यभिचरितसम्बन्धं विना तादात्म्यादिरूपो वा संयोगादिरूपो वा परपरिगणितः सम्बन्धविशेषः सम्भवति । ततश्चाव्यापकत्वात्परकीयं परिगणनसमञ्जसमित्यपि तेन लभ्यत इत्याशयेनोपपादयिष्याम इत्युक्तमिति द्रष्टव्यम् । यद्वा न सम्बन्धविशेषवदित्यत्रोक्तरीत्याऽव्यापकत्वादिति हेतुर्द्रष्टव्यः । ननु व्याप्यं चेदनुमानं तदा धूमः शब्दानित्यत्वेऽप्यनुमानं स्यात्, व्याप्तो हि सोऽग्निनेत्यत आह **एतच्चेति** । व्याप्यमित्यस्य सम्बन्धिशब्दत्वादित्यादिनाऽनुपदमुपपादयिष्याम इत्यर्थः ।

**कं०रा०— सौगता इति** । अयं वृक्षः शिंशुपात्वादित्यादौ वृक्षशिंशुपादीनां तादात्म्यरूपाय वह्निमान् धूमादित्यादौ धूमादेर्वह्न्यादित उत्पत्तेश्च सत्त्वात्तादात्म्यात् तदुत्पत्ती एवानुमानाङ्गभूतसम्बन्धाविति सौगता मन्यन्त इत्यर्थः । **वैशेषिका इति** । क्वचिद्विशिष्टमेघोन्नत्वादिरूपकारणेन वृष्ट्यादिरूपकार्यमनुमेयम् । क्वचिद्धूमादिरूपकार्येण वह्न्यादिरूपकारणमनुमेयम् । सम्बन्धिना भिरीशब्देनापरं सम्बन्धिराजगमनमनुमेयं एकार्थसमवायिना रसेन तादृशं रूपमनुमेयम् । विरोधिना तमसा निवृत्तत्वाकारेण प्रकाशोऽनुमेय इति वैशेषिकानुमानाङ्गभूतसम्बन्धं परिसञ्चक्षत इत्यर्थः । **मात्रेति** । मात्रारूपादिः तेन तद्ग्राहकेन्द्रियानुमानं विरोधिना गोत्वेनेतद्विरोध्यस्वत्वाभावानुमानं अन्यत्सुगमम् ।

**श्रीनिधि०— एकार्थसमवायि विरोधि चेति** । एकार्थसमवायो रूपरसादीनां विरोध्यन्तरस्य प्रतियोग्यादेरभावेन विरोध्यन्तरमभावादिकमनुमीयत इति भावः । **साङ्ख्यानां** मते **अनुमा सप्तधा** सप्तप्रकारोपेता । सप्तविधसम्बन्धैरुपेतानामेवानुमानानुमेयभाव इति यावत् । के ते सप्तधा सम्बन्धाः इत्यपेक्षायामाह **मात्रेत्यादि** । बुद्ध्या विवेकेन योज्यम् । न केवलं संयोगिना धूमादिना संयोगिनो वह्न्यादेरनुमानम् । किन्तु समवायिनापि । रसादिना समवायिनोरुपाधेरपीत्याह **सहचारिभिरिति** ।

**शे०वा०—** सम्बन्धविशेषव्यावृत्तिरप्येवकारफलमिति भावेन तत्परतया तं व्याख्यातुं सम्बन्धविशेषपक्षानुत्थापयति **सौगतास्त्वित्यादिना** । 'कार्यकारणभावाद्वा स्वभावाद्वा नियामकात् । अविनाभावनियमो





दर्शनात् न तददर्शनादि'ति तदुक्तेरिति भावः । शिंशुपात्वेन वृक्षत्वानुमाने तादात्म्यं नियामकः सम्बन्धो, धूमाद्धूमध्वजानुमाने तदुत्पत्तिः । **अस्येदमित्यादि** । यद्यपि 'अस्येदं कार्यं, कारणं संयोगि, विरोधि समवायि चेति लैङ्गिकमि'ति नवमाध्यायस्थवैशेषिकसूत्रे एकार्थसमवायीति न श्रुतं संयोगि समवायि चेत्येव श्रवणात् सम्बन्धीत्यपि न श्रुतमिति न यथाश्रुततत्सूत्रानुवादोऽयं तथाऽपि तृतीयाध्यायस्थे संयोगिसमवायि एकार्थ-समवायि विरोधि चेति तत्सूत्रे एकार्थसमवायिनोऽपि श्रवणेन सूत्रद्वयोक्तार्थस्यैकीकरणेन संयोगिसमवायिनोश्च सम्बन्धित्वेनैक्यविवक्षया चायमनुवादः । अत्र कार्यं कारणमित्येक एव सम्बन्धो विवक्षितः । अस्येदं कार्यं कारणमित्येक एव सम्बन्ध इति निबन्धकृद्वचनात् । ततश्च लैङ्गिकनिमित्तसम्बन्धस्य चातुर्विध्यं तत्सिद्धान्त इत्युक्तं भवति । यश्च वैशेषिकैश्चतुष्प्रकारः सम्बन्ध उच्यते । अस्येदं कार्यं, कारणं, सम्बन्धि, एकार्थसमवायि, विरोधि, चेत्यादि न्यायवाचस्पतिवचनादस्येदं कार्यं कारणं संयोगविरोधिसमवायि चेति लैङ्गिकमिति सूत्रे चतुर्धा सम्बन्धं नियमयन्तीति किरणावलीकारवचनाच्चेति द्रष्टव्यम् । अत्र कार्याद्धूमादेरग्न्याद्यनुमानम् । कारणाच्च भेरी-दण्डसंयोगविशेषाच्छब्दानुमानम् । अन्त्यतन्तुसंयोगात् पटचरमकारणात् पटस्यानुमानम् । यथाविधि कारीर्या-द्यनुष्ठानाद्वर्षानुमानम् । संयोगनः शरीरस्य दर्शनात् त्वगिन्द्रियानुमानम् । वारिसंयुक्तसमवेतादुष्णस्पर्शाद्वारिस्थ-तेजोऽनुमानम् । एकार्थसमवायिना रसादिना रूपाद्यनुमानम् । स्फोटादेर्विरोधी मन्त्रपाठस्तथा चास्फोटादिना मन्त्रपाठस्यानुमानमिति विवेकः । **मात्रानिमित्तेति** । श्लोके मात्राशब्दः स्वभावपरः । न्यायसूत्रवृत्तौ रामभद्र-ठक्कुरैस्तथा व्याख्यातत्वात् । निमित्तशब्दः कार्यकारणपरः । सहचारिशब्दस्त्वेकार्थसमवायिपरः । स्वस्वामीति सम्बन्धमात्रकीर्तनम् । विरोधीति सामान्यं वध्यघातकैरिति तद्विशेष इत्यपौनरुक्त्यम् । अत्र चन्द्रोदयेन समुद्रवृद्धेः कुमुदविकासस्य च, शरदि जलप्रसादेनागस्त्योदयस्य चानुमानं मात्राशब्दोक्तस्वभावनिबन्धनानुमानोदाहरणम् । न चात्रापि तदनन्तरभावित्वमात्रेण कारणत्वमाशङ्कनीयम् । अन्यथासिद्धत्वात् । स्वावयवानामुत्तरदेशप्राप्ति-रूपायाः समुद्रवृद्धेः परस्परदलविभागरूपस्य च कुमुदविकासस्य पूर्वरूपनिवृत्तावुत्तररूपाद्युत्पादलक्षणस्य जल-प्रसादस्य, तत्कालसन्निपातिस्वकारणाधीनकर्मनिबन्धनत्वात् । निमित्तानामुक्तान्येवोदाहरणानि । स्वस्वामीत्यस्य त्वविनाभूतेन स्वेन स्वामिनां, तादृशेन स्वामिना च भृत्यस्य स्वस्यानुमानमुदाहरणम् । वध्यघातकभावस्य तु विस्फूर्जतोऽहेर्दर्शनात् झाटाद्यन्तरितस्य नकुलस्यानुमानमुदाहरणं द्रष्टव्यम् । **नियतसम्बन्धवदेवेति** । अव्यभि-चरितसम्बन्धवदेवेत्यर्थः । **न त्विति** । तस्याव्यापकत्वादिति भावः । ननु व्याश्रययोः सम्बन्धस्यैवानुपपत्त्या-ऽव्यभिचरितसम्बन्धस्य सुतरामसिद्धेः सम्बन्धसामान्यस्याप्यव्यापकत्वान्न तस्यापि प्रयोजकत्वमित्यतो-ऽविनाभावमात्रस्यैवाव्यभिचरितसम्बन्धरूपत्वात् तस्य च कृतकत्वानित्यत्वादावेकाश्रयतामन्तर्भाव्य भवनव-द्धूमाग्न्यादौ भिन्नाश्रयत्वेऽपि तत्सम्भवान्नानुपपत्तिरिति न ह्याज्ञैवात्र साधिकेत्येतद्व्याख्यानावसरे प्रपञ्चयिष्याम इत्याह **एतच्चेति** । यद्वा ननु तादात्म्यतदुत्पत्त्यादिरूपसम्बन्धविशेषवदेवानुमानं किन्न स्यादित्यतो भक्तिपादे 'रोहिण्युदय आसन्नः कृत्तिकाऽभ्युदिता यतः' इत्यादिना कृत्तिकोदयादे रोहिण्युदयासत्त्यादावनुमानत्वस्थित्या तत्र चाविनाभावरूपाव्यभिचारसम्बन्धस्य सत्त्वेऽपि तादात्म्यादिरूपपरपरिगणितसम्बन्धविशेषस्य तत्रासत्त्वेन अव्यापकत्वान्न तदित्याह **एतच्चेति** । यद्वा व्याप्यं चेदनुमानं तदा धूमः शब्दानित्यत्वेऽप्यनुमानं स्यात्





तस्याप्यग्निना व्याप्तत्वादित्यत आह **एतच्चेति** । व्याप्यशब्दस्य सम्बन्धिशब्दत्वेन यो येन व्याप्तः स तस्मिन्ननुमानमित्यर्थसिद्धेर्नातिप्रसङ्ग इत्यनुपदमेवोपपादयिष्याम इत्यर्थः ।

**वा०र०— अनुवाद इति** । उपलक्षणं चेदं तर्कपादीयशास्त्रदीपिकायामपि अस्येदं कार्यं करण-सम्बन्ध्येकार्थसमवायिविरोधी च इति लैङ्गिकं इत्यनुमानस्वरूपनिरूपणानन्तरं एतेनैव शाब्दं व्याख्यातं इति वदतः काश्यपीयस्त्वित्यादेरुक्तेष्वित्यपि ज्ञेयम् । तर्कताण्डवे व्यधिकरणासिद्धेः दूषणत्वभङ्गे अत एव वैशेषिकैरपि अस्येदं कार्यं कारणं सम्बन्ध्येकार्थसमवायिविरोधि चेति लैङ्गिकमिति प्रयोगाच्च एवमेव उपपाद्यः । एक एव सम्बन्धः इत्यत्र नियामकमाह **निबन्धकृदिति** । उक्तानुमानलक्षणसूत्रीयनिबन्धकृद्वचनादित्यर्थः । तेन हि यश्च वैशेषिकैः इत्येतत् वक्ष्यमाणोदाहृतस्थलीयन्यायवाचस्पतिवाक्यव्याख्यानावसरे तथोक्तमिति ज्ञेयम् । उपलक्षणं चैतत् । स चायं कार्यकारणलक्षणो एक एव सम्बन्धः इति वैशेषिकसूत्रोपस्कारे किरणावल्यां च उक्तत्वादिति द्रष्टव्यम् । एकसम्बन्धत्वनिरूपणफलमाह **ततश्चेति** । चातुर्विध्यमपि न्यायवाचस्पत्यादिसम्मत्या द्रढयति **यश्च वैशेषिकैरित्यादिना** । **किरणावलीकारेति** । गुणकिरणावलीकारस्यानुमानलक्षणनिरूपण-स्थलीयवचनादित्यर्थः । सूत्रकारानुसारेण उदाहरणं दर्शयति **अत्र कार्यादित्यादिना** । **वारिसंयुक्तेति** । वारिणा संयुक्ते पदार्थविद्यमानेन उष्णस्पर्शेनेत्यर्थः । उष्णस्पर्शस्य तेजःसम्भवेन उद्भूतरूपाभावेनाप्रत्यक्षत्वात् सामान्योक्तिरिति ध्येयम् । मात्रानिमित्तेति श्लोकः एतेनैव मात्रानिमित्तेनेत्यादिना न्यायवाचस्पतौ उदाहृतः । परन्तु निबन्धकता न व्याख्यातः अतः न्यायसूत्रकृत् व्याख्यानमाश्रित्य व्याचष्टे **मात्रानिमित्तेति श्लोक इत्यादिना** । एतच्छलं निष्कास्यमस्ति । वर्धमानेन तु साङ्ख्यवार्तिके मात्रा स्वभावः । वधघाताद्यैरिति पूर्वार्धोक्तविशेषणम् । न तु स्वतन्त्रमतो न सत्यत्वविरोधः । इति प्रतिपादितमित्यपि ज्ञेयम् । **विस्फूर्जतोऽहेरिति** । अत्र सान्तरतेति पाठः । यथा विस्फूर्जितमिति दृष्ट्या सटान्तरितस्य नकुलस्य सटान्तरितो नकुलोऽपि इति सूत्रोपस्कारोक्तेः । सटान्तरितस्य नकुलस्य किरणावल्यामपि उक्तेरिति ज्ञेयम् ।

**स०व्र०— अस्येदं कार्यमिति** । सम्बन्धि कारणमिति । तत्सम्बन्धि इत्यर्थः । लौकिकनिमित्तमिति अत्र कार्यादिग्रहणमिति दर्शनार्थम् । तस्मात् व्यतिरेकदर्शनात् । यथा, आश्रावयन्नध्वर्युः होत्रासत्तेर्गमकः चन्द्रोदयः समुद्रवृद्धेः तथा कुमुदविकासस्य, सरोवराभ्युदयः अगस्त्योदयस्येत्येवमादि अस्येदमिति सम्बन्धित्वेन सङ्गृहीतं भवति । वस्तुतस्तु अस्येदं कार्यमिति सम्बन्धिकारणमिति सम्बन्धि इत्यर्थः । लैङ्गिकनिमित्त-सम्बन्धमित्येव पाठः । लैङ्गिकमिति पाठेऽप्ययमेवार्थः । **मात्रेति** । अनेन एकदेश्येकदेशभावलक्षणसम्बन्ध उक्तो भवति । निमित्तेन नैमित्तिकानुमानम्, संयोगिना संयोग्यन्तरानुमानम्, विरोधिना विरोध्यन्तरानुमानम्, येन सहचारि तेन सहचारिणा तस्यानुमानम्, स्वेन स्वाम्यनुमानम्, वध्येन घातुकानुमानम् । आद्यशब्देन विशेषणेन विशेष्यानुमानमित्यादि ग्राह्यम् ।





**वं०प०— बाधसत्प्रतिपक्षयोरपीति** । बाधितस्य पक्षे व्यभिचारः स्पष्ट एव । शब्दोऽनित्यः कृतकत्वादित्यत्र शब्दो नित्यः श्रावणत्वादिति नित्यत्वसाधने पक्षेऽनित्यत्वाभावप्राप्त्या सत्प्रतिपक्षस्यापि कृतकत्वस्य पक्षे व्यभिचारः प्राप्त एवेत्यर्थः ।

**पक्षे व्यभिचार इति** । बाधितसत्प्रतिपक्षयोरित्यर्थः । **तत एवेति** । साध्याभावनिश्चायकप्रमाणान्तरविरोधादेवेत्यर्थः । **सति च तस्मिन्निति** । उपाधिव्यावृत्त्या साध्यव्यावृत्तिनिश्चये सति साध्यव्यापकतानिश्चयः । तथा हि । उपाधिः साध्यव्यापकः स्वव्यावृत्त्या तद्व्यावर्तकत्वात् । यत्स्वव्यावृत्त्या यद्व्यावर्तयति तत्तस्य व्यापकम् । स्वव्यावृत्त्या गुणादौ पृथिवीत्वं व्यावर्तयतीति द्रव्यत्वं पृथिवीत्वस्य व्यापकमित्यर्थः । **साध्यव्यापकत्वानिश्चयादिति** । पक्षे साध्याभावोऽस्ति वा न वेति संशयस्य साध्यसंशयरूपत्वेनोपाधेः पक्षे साध्यव्यापकत्वमपि सन्दिग्धमिति भावः । 'स एवोपाधिदोषोऽपि' इत्यत्रत्यैवकारार्थकथनं **सत्प्रतिपक्षतैवेति** ।

**कं०रा०— बाधितसत्प्रतिपक्षयोरिति** । बाधिते साध्याभावनिश्चायकप्रमाणेन सत्प्रतिपक्षे च साध्याभावव्याप्यलिङ्गान्तरेण पक्षे साध्याभावस्य प्राप्ततया तत्रैव हेतोर्व्यभिचारावश्यम्भावादिति भावः । **तत एवेति** । पक्षे साध्याभावनिश्चायकप्रमाणान्तरेणैवेत्यर्थः । सति च तस्मिन्निति पक्षे साध्यव्यावृत्त्यनिश्चये तत्र साध्यसत्त्वशङ्कया पक्षावृत्त्युपाधेः साध्यव्यापकत्वनिश्चयायोगेन पक्षसाध्यव्यावृत्तिनिश्चये सत्येवोपाधेः साध्यव्यापकत्वे निश्चय इति भावः । **नेति पक्ष इति** । पक्षे साध्याभावो न निश्चित इति पक्षे उक्तरीत्योपाधेः साध्यव्यापकत्वनिश्चयाभावात् कथमुपाधिव्यावृत्त्या पक्षे साधनस्य निश्चितो व्यभिचारः स्यादित्यर्थः । पक्षे व्यभिचारः किं निश्चितः उत सन्दिग्ध इति प्राग्विकल्पितं सन्दिग्धव्यभिचार इति पक्षः दूषयति **पक्ष इति** ।

**श्रीनिधि०— तद्व्यावृत्त्या** उपाधिव्यावृत्त्या । **सति तस्मिन्नसाविति** । उपाधिव्यावृत्त्या साध्यव्यावृत्तिनिश्चये सति उपाधेस्साध्यव्यापकत्वनिश्चय इत्यर्थः । उपाधेस्साध्यव्यापकत्वे तन्निवृत्त्या साध्यनिवृत्त्ययोगेन तन्निश्चये सति तन्निश्चय इति भावः । सर्वानुमानेष्वपि पक्षे व्यभिचारसन्देहस्य सत्त्वेनेति भावः । **सत्प्रतिपक्षतैवेति** । अत्र तु नोक्तदोषः । प्रतिज्ञाविरोधस्य समबलप्रमाणविरोधस्य व्यभिचारोपजीव्यत्वेन स्वतन्त्रदूषणत्वात् । स्वारसिकसंशयं पूर्वहेतुर्निरुणद्धि । निरुद्धमपि संशयं पुनरुज्जीवयति सत्प्रतिपक्षः । स्वारसिकसंशयस्य नियामकशून्यत्वेनादोषत्वं सत्प्रतिपक्षे जन्यसंशयस्य तु नियामकपूर्वकत्वेन दोषत्वमिति विवेको द्रष्टव्यः । **स एवोपाधिदोषोऽपीति** । प्रतिज्ञायास्समबलप्रमाणविरोध एव । पक्षादिप्रविभागानन्तरं अयमेव दोष इत्यभिप्रेत्येत्यर्थः । अत्र व्याप्तेः साध्यव्यापकतानिश्चयाभिमाने हेतोश्च साध्यव्यापकतानिश्चयाभिमाने सत्प्रतिपक्षः । अन्यतरत्रानुकूलतर्कादिना वा व्यापकत्वव्याप्यत्वयोर्निश्चये तु कस्यचित् बाध्यत्वं कस्यचित् बाधकत्वमिति विवेको द्रष्टव्यः । विषमव्याप्तिकस्य उपाधित्वं नेति वदन् प्रष्टव्यः । किं साधनव्यापकत्वादिना । उत दूषणत्वासम्भवेन ।





**शे०वा०— व्यावर्तयतीति** । व्यापकनिवृत्तौ व्याप्यनिवृत्तेरावश्यकत्वादिति भावः । **निरसिष्यमाणत्वादिति** । 'स्ववाक्येन विरोधेऽपि नैव साधकतां व्रजेदि'त्युत्तरवाक्यव्याख्यानावसरे 'एतेनैतदपि निरस्तमि'त्यादिनेति शेषः ।

**तत एवेति** । साध्याभावनिश्चायकप्रमाणान्तरविरोधादेवेत्यर्थः । **नेति पक्ष इति** । **पक्षे** साध्याभावोऽनिश्चित इति पक्षे । साध्यवत्युपाधेरुपाध्यभाववति च साध्याभावस्य निश्चितत्वेन व्यभिचारज्ञानाभावादुपाधेः साध्यव्यापकत्वनिश्चयोपपत्तेर्व्यापकीभूतोपाध्यभावेन साध्याभावनिश्चयोपपत्त्या साध्यरहिते पक्षे साधनस्य वर्तमानतया साध्यव्यभिचारनिश्चयसम्भवेऽपि पक्षे साध्याभावो न निश्चित इति पक्षे साध्यवत्युपाधेरुपाध्यभाववति च साध्याभावस्यानिश्चयेन व्यापकीभूतोपाध्यभाववत्तया निश्चिते पक्षे तद्व्याप्यभूतसाध्यसन्देहेन व्यभिचारज्ञानरूपप्रतिबन्धकवशादुपाधेः साध्यव्यापकत्वनिश्चयासम्भवादव्यापकव्यावृत्त्याऽव्याप्यव्यावृत्तेश्चातिप्रसङ्गेन निश्चेतुमशक्यत्वेनोपाधिव्यावृत्त्या पक्षे साध्यव्यावृत्त्यसिद्ध्या पक्षस्य साध्यरहितत्वासिद्धेस्तत्र वर्तमानस्य साधनस्य न साध्यव्यभिचारनिश्चय इति भावः । **पक्षे सन्दिग्धो व्यभिचार इति** । पक्षेऽपि सन्देहः किं स्वारसिकः फलतयाऽभिमतः किंवा संशयान्तरमिति विकल्प्य; न द्वितीयः उपाधिव्यावृत्त्याहितपक्षीयसाध्यसंशयमुपजीव्य प्रवृत्तव्यभिचारसंशयरूपसंशयान्तरस्योपाधिव्यावृत्त्याहितसाध्यसंशयरूपप्रतिपक्षोपजीव्यत्वात् उपजीव्यभूतप्रतिपक्षेणैव दुष्टत्वे तदाहितव्यभिचारसन्देहस्य निष्प्रयोजनत्वादिति द्वितीयपक्षदूषणं च मनसि निधायाद्यं प्रत्याचष्टे **पक्षे सन्दिग्धेति** । स्वत एव सिद्ध इत्यस्य विवरणं **नोपाधिमुखनिरीक्षणापेक्ष इति** । उपाधिं विनाऽपि तत्सिद्धेर्न तस्य तत्फलत्वमिति भावः । **सर्वेति** । निश्चितहेतुमति साध्याभावसन्देहरूपव्यभिचारसंशयस्य सर्वत्रापि सत्त्वादिति भावः । **तस्मादिति** । उक्तरीत्या केनापि प्रकारेणानुमानोत्तरकालमव्याप्त्युन्नायकत्वानुपपत्तेरित्यर्थः । **प्रतिपक्षतैवेति** । न च दूष्यानुमानस्य तर्कानुग्रहे उपाधिर्न साध्यव्यापक उपाधेस्तदनुग्रहे त्वनुमानस्य बाध एवेति न कदाऽपि प्रतिपक्षावसर इति वाच्यम् । यदैकत्रापि नानुकूलतर्कावतारस्तदा प्रतिपक्षावतारस्याविकलत्वात् । अन्यथा प्रतिपक्षमात्रोच्छेदापत्तेरित्याशयात् । ननु नोपाधेर्व्याप्तिग्रहदशायामव्याप्त्युन्नायकत्वमङ्गीकर्तुं युक्तम् । 'स एवोपाधिदोषोऽपी'ति प्रमाणलक्षणे, 'उपाधिः प्रतिरूपं यत्साधनं तन्न चापरमि'त्युत्तरानुव्याख्याने चोपाधेरव्याप्त्युन्नायकत्वनिरासेन सत्प्रतिपक्षमात्रोन्नायकत्वप्रतिपादनेन तद्विरुद्धत्वादित्यत उदाहृतप्रमाणलक्षणादेर्विप्रतिपत्त्यनन्तरमव्याप्त्युन्नयनवारकत्वेन ततः पूर्वमपि तदुन्नयनवारकत्वपरत्वाभावान्न तद्विरोध इत्यभिप्रेत्याह **एतदेवाभिप्रेत्येति** ।

**वा०र०—** उपाधेर्दोषकताबीजकथनस्थलीयतर्कताण्डवानुसारेणाह **न च दूष्यानुमानस्येति** ।

**स०व्र०— अनुमानोत्तरमपीति** । अनुमानोत्तरमव्याप्तिः किं न स्यादित्यत्र कथमिति वक्तव्यमित्यर्थः । **साध्यं व्यभिचरतीति** । तथा च व्यभिचारप्रदर्शनस्य विद्यमानत्वेन व्याप्तिनिश्चयो न सम्भवतीति अव्याप्तिरेव किं न स्यादिति भावः । **तथा सतीति** । बाधितस्थले प्रबलप्रमाणेन पक्षे साध्याभावस्यैव





निश्चितत्वेन तत्र विद्यमानस्य हेतोः साध्यव्यभिचारनिश्चयेन व्याप्तिनिश्चयासम्भवात् अव्याप्तिनिश्चयसम्भवात् अव्याप्तेरेव दोषत्वं, न तु सत्प्रतिपक्षस्येति भावः ।

**प्रथमे वेति । तत एव** साध्याभावनिश्चायकप्रमाणाभावादेवेत्यर्थः । **परस्पराश्रयत्वेति** अयमाशयः । उपाधिव्यावृत्त्या साध्यव्यावृत्तिनिश्चये सति, कथमुपाधेः साध्यव्यापकत्वाभावे उपाधिनिवृत्त्या साध्यनिवृत्तिः सम्भवतीति कृत्वा साध्यव्यापकत्वमिति साध्यव्यापकत्वनिश्चयः । सति च तस्मिन् उपाधिव्यावृत्त्या साध्यव्यावृत्तिनिश्चय इत्यन्योन्याश्रय इति । न चानुकूलतर्कादिना उपाधेः साध्यव्यापकत्वनिश्चयाभ्युपगमेन उपाधिव्यावृत्त्या साध्यव्यावृत्तेः तन्निश्चायकत्वस्यानभ्युपगतत्वात् कथमन्योन्याश्रय इति वाच्यम् । अनुकूल-तर्कादिना तद्व्यापकत्वनिश्चये व्यापकानुपलब्धिबाधेन दुष्टत्वोपपत्तौ उपाध्युद्भावनवैयर्थ्यापातादित्यत्र तात्पर्यात् । **नेति पक्ष इति** । साध्याभावः पक्षे न निश्चितः इति पक्षे साध्यसत्त्वसन्देहेन उपाधेः साध्यव्यापकत्वनिश्चयो न सम्भवति । यदि पक्षे साध्यं स्यात् तदा उपाध्यभावेन सन्दिग्धव्यभिचार इत्यर्थः । **स्वत एव सिद्ध इति** । न च स्वारसिकपक्षीयव्यभिचारसंशयस्यादोषत्वेऽप्युपाध्यभावाहितः संशयः प्रतिबन्धक एवेति वाच्यम् । उपाध्यभावेन पक्षीयतत्संशयस्यैव सत्प्रतिपक्षत्वेनेष्टापादनात् । नेति पक्षेऽपि किं निश्चितो व्यभिचारः, किं सन्दिग्ध इति विकल्पं मनसि निधायाद्यं दूषयति **नेतीति । पक्ष इति** । साध्याभावस्य पक्षेऽनिश्चये साध्यसत्त्वसन्देहेनोपाधेः साध्यव्यापकत्वनिश्चयस्यैवाभावात् सन्दिग्धव्यभिचारादिति भावः । द्वितीयेऽपि किं स्वारसिकसंशयः फलं, संशयान्तरं वा । नाद्य इत्याह **सन्दिग्धो व्यभिचारस्त्विति** । अन्त्यस्तु स्फुटत्वान्न दूषितः । तथा हि उपाधिव्यावृत्त्या हि तत्पक्षीयसाध्यसंशयमुपजीव्य प्रवृत्तव्यभिचारसंशयान्तरस्योपाधिव्यावृत्त्या हि साध्यसंशयरूपसत्प्रतिपक्षोपजीवित्वात् तेनैव दुष्टत्वे व्यभिचारसन्देहस्य निष्प्रयोजनत्वात् । **सर्वानुमानेति** । सन्दिग्धव्यभिचार इति शेषः । **एतदेवेति** । अनुमानप्रविभागानन्तरमुपस्थितस्योपाधेः सत्प्रतिपक्षोन्नायकत्व-मेवेत्यर्थः ।

**स०ना०— पक्षे साध्याभावो निश्चितो न वेति** । प्रतिवादिनेति शेषः । **तद्व्यावृत्त्या साध्यव्यावृत्तिनिश्चय इति** । प्रतिवादिनेति शेषः । **साध्यव्यापकत्वानिश्चयादिति** प्रतिवादिनेति शेषः । **निश्चितो व्यभिचार इति** । उभयसम्मतो व्यभिचार इत्यर्थः । अयं भावः । निश्चितव्यभिचारो हि तदा स्यात्; यदि साध्याभावसाधकं अनुमानं प्रबलं स्यात् । तत्प्राबल्यं च उभयसम्मत्या उपाधेः साध्यव्यापकत्व एव भवेत् । न चासावस्ति । साधनवादी साधनेन पक्षे साध्यं साधयित्वा साध्यस्य उपाधिव्यभिचारं मन्यते । उपाधिवादिना तु पक्षे साध्यमेव नास्तीति न व्यभिचार इति वक्तव्यम् । तत्र साधनवादिना कुतः पक्षे साध्यं नास्तीति चोदिते उपाध्यभावादिति उपाधिवादिना वक्तव्यम् । ततश्च उपाधेः साध्यव्यापकत्व-सिद्धौ पक्षे साध्याभावसिद्धिः तत्सिद्धौ च तत्सिद्धिरित्यन्योन्याश्रयो भवति । सत्प्रतिपक्षवादी तु परस्य साध्यव्यापकत्वानिश्चयेऽपि अभिमानमात्रेण सत्प्रतिपक्षप्रवृत्तिरिति नान्योन्याश्रय इति । एतेन व्यभिचारो-न्नायकत्वपक्षे यद्यन्योन्याश्रयः तर्हि सत्प्रतिपक्षोन्नायकत्वपक्षेऽपि स्यादविशेषादिति परास्तम् ।





**विट्ठल०— बाधितसत्प्रतिपक्षयोरिति** । ताभ्यां पक्षे साध्याभावस्य प्राप्तत्वेन तत्रैव हेतोर्व्यभिचारावश्यम्भावादिति भावः । **सति च तस्मिन्निति** । साध्यव्यावृत्तिनिश्चये सत्येवोपाधेः साध्यव्यापकत्वनिश्चय इत्यर्थः । विकल्पे सन्दिग्ध इति द्वितीयं पक्षं दूषयति **पक्षे सन्दिग्ध इति** । **स्वत एव सिद्ध इति** । पक्षघटकतया पूर्वमेव सिद्ध इत्यर्थः । **सर्वानुमानेति** । निश्चयहेतुमिति पक्षे साध्याभावसन्देहरूपव्यभिचारसंशयस्य सर्वत्र सत्त्वादिति भावः । **स एवोपाधीति** । प्रमाणलक्षणवाक्यं **आदि**पदेन प्रतिरूपं हि साधनं तन्न चापरमिति चतुर्थानुव्याख्यानसङ्ग्रहः ।

**चषकः— निरसिष्यमाणत्वादिति** । प्रकृतनय एव प्रत्याख्यास्यमानत्वादित्यर्थः ।

**१८२ सु०— अनुकूलतर्कादिना साध्यव्यापकत्वनिश्चये सति पक्षे निश्चितव्यभिचारितासिद्धिरिति चेन्न, निश्चितसाध्यव्यापकव्यावृत्तेर्बाधकत्वेन तत एवानुमाने दूषिते व्यभिचारवैयर्थ्यात् । तथाऽपि सोपाधिकत्वं सत्प्रतिपक्षत्वमिति गतः पक्ष इति चेन्न, प्रतिपक्षस्य यावज्जीवं तद्भावानङ्गीकारात् । 'सामर्थ्यानिर्धारणायामेव सत्प्रतिपक्षः, निर्धारिते तु सामर्थ्ये बाधको वा स्यात्, बाध्यो वे'ति को नाम नाभ्युपैति ।**

**परि०— सामर्थ्येति** । व्याप्तिः समुचितदेशस्थत्वं च सामर्थ्यम् । **अनिर्धारणायामिति** । द्वयोर्हेत्वोरिति योज्यम् । **निर्धारित इति** । अन्यतरस्येति भावः ।

**यादु०— निर्धारिते तु सामर्थ्य इति** । अन्यतरस्येति शेषः ।

**वं०प०—** ननु पक्षे साध्याभावो निश्चित एव । तन्निश्चयस्तु साध्यव्यापकोपाधिव्यावृत्त्यैव । न चान्योन्याश्रयः । उपाधेः साध्यव्यापकत्वनिश्चये तद्व्यावृत्त्या साध्यव्यावृत्तिनिश्चय इत्यंशः स्वीक्रियते । उपाधिव्यावृत्त्या साध्यव्यावृत्तिनिश्चये सत्युपाधेर्व्यापकत्वनिश्चय इत्यंशो न स्वीक्रियते । प्रकारान्तरेणानुकूलतर्कादिना तन्निश्चयसम्भवादित्याशङ्कते **अनुकूलेति** । **निश्चये** उपाधेरिति शेषः । **पक्षे** उपाधिव्यावृत्तेरिति शेषः ।

**कं०रा०— अनुकूलेति** । अनुकूलतर्कादिनोपाधेः साध्यव्यापकत्वनिश्चये सत्युपाधिव्यावृत्त्या पक्षे साध्यव्यावृत्तिनिश्चयात् तत्र वर्तमानस्य हेतोर्निश्चितव्यभिचारित्वसिद्धिरित्यर्थः । **निश्चितेति** । निश्चिता साध्यव्यावृत्तिर्ययोपाधिव्यावृत्त्या तस्या बाधकत्वेन तत एवानुमाने दूषिते व्यभिचारवैयर्थ्यादित्यर्थः । **तथापीति** । अनुकूलतर्कादिना साध्यव्यापकत्वनिश्चये सत्युपाधिव्यावृत्तेः पक्षे साध्याभावनिश्चायकतया त एव अनुमानस्य दुष्टत्वेन व्यभिचारवैयर्थ्येऽपि सोपाधिकत्वस्य प्रतिपक्षविधया दूषणत्वमित्येतद्गतमुक्तस्थले उपाधिव्यावृत्तेर्बाधकत्वादिति भावः । अनुकूलतर्कादिनोपाधेः साध्यव्यापकत्वनिश्चयदशायां सोपाधिकत्वस्य





प्रतिपक्षत्वाभाव इष्ट एवेति परिहरति **नेति** । **बाधको वेति** । प्रतिपक्षस्थले मन्त्रहेतोः सामर्थ्यनिर्धारणं स बाधकोऽन्यस्तु बाध्य इति व्यवस्थितविकल्पपरत्वेन योज्यम् ।

**शे०वा०—** ननूपाधिव्यावृत्त्यैव पक्षे साध्याभावनिश्चयेन साध्यरहिते पक्षे वर्तमानस्य साधनस्य पक्षे निश्चितव्यभिचारत्वेनानुमानोत्तरमपि व्यभिचारोन्नायकत्वोपपत्तेः कथमनुमानोत्तरकालं प्रतिपक्षतैवेत्यवधारणम् । न चोपाधेः साध्यव्यापकत्वनिश्चये तद्व्यावृत्त्या साध्यव्यावृत्तिनिश्चयः सति च तस्मिन्नसाविति परस्पराश्रयत्वान्नोपाधिव्यावृत्त्या साध्यव्यावृत्तिनिश्चय इत्युक्तमिति वाच्यम् । अनुकूलतर्कादिना साध्यव्यापकत्वनिश्चयाभ्युपगमेन साध्यव्यापकतानिश्चयस्योपाधिव्यावृत्त्या साध्यव्यावृत्तिनिश्चयसाध्यत्वानभ्युपगमेन तदप्रसङ्गादित्याशयेन शङ्कते **अनुकूलेति** । तत्रापि प्रथमोपस्थितबाधस्यैव दूषणत्वेन तदुपजीविनो व्यभिचारस्यादूषणत्वाद्युक्तमवधारणमित्याशयेन परिहरति **नेति** । अन्यथा बाधितसत्प्रतिपक्षयोरपि व्यभिचारितापातात् । तत्र बाधसत्प्रतिपक्षाभ्यामेवानुमानदूषणसम्भवे किं तदुपजीविना व्यभिचारेणेति यदि मन्यसे तर्ह्यत्रापि बाधेनैवानुमाने दूषिते किं तदुपजीविना व्यभिचारेणेति सममिति भावः । **गतः पक्ष इति** । उपाधिव्यावृत्त्या निश्चितायाः साध्यव्यावृत्तेर्बाधत्वेन व्यापकव्यावृत्तेः प्रतिपक्षत्वाभावादिति भावः । न सोपाधिकत्वं सर्वत्र प्रतिपक्षतया दोषः किन्तु क्वचिद्बाधत्वेनापीति । ततश्च नेदमनिष्टमिति भावेन परिहरति **नेति** । कथमेकस्यैव प्रतिपक्षत्वं बाधकत्वं च विरुद्धमुपपद्यत इत्यतो दशाभेदेनोभयमुपपादयति **सामर्थ्येति** । दूष्यानुमानमुपाधिश्चेत्यनयोर्मध्ये यदैकत्राप्यनुकूलतर्कावतारस्तदेत्यर्थः । **निर्धारिते त्विति** । अन्यतरस्येति शेषः । बाधक इत्यादेरयम्भावः । यस्य हि यदाऽनुकूलतर्कावतारः स तदा बाधकोऽन्यस्तु बाध्य इति । यद्वा प्रतिपक्षस्य सामर्थ्यावधारणे बाधत्वं स्वविरोधिनस्तदवधारणे तु बाध्यत्वमिति ज्ञेयम् । **एषः पक्ष इति** । समव्यापकत्वपक्ष इत्यर्थः ।

**स०व्र०— अनुकूलतर्कादिनेति** । उपाधेरिति शेषः । तथा च अनुकूलतर्कादिना उपाधेः साध्यव्यापकत्वे निश्चिते तद्व्यावृत्त्या साध्यव्यावृत्तिनिश्चयसम्भवेन तत्र विद्यमानहेतोः साध्यव्यभिचारिता उपाधिना उन्नीयत इति व्यभिचारोन्नायकत्वमेवोपाधेरिति शङ्कार्थः । **तत एवेति** । उपाधेः साध्यव्यापकत्वनिश्चायकानुकूलतर्कादिरित्यर्थः । ननु तथात्वे येनानुकूलतर्कादिना उपाधेः साध्यव्यापकत्वनिश्चयः तेनैव साध्यव्यावृत्तेरपि निश्चितत्वेन तत एवानुमानस्य दुष्टत्वसम्भवेन उपाधेः सत्प्रतिपक्षोन्नायकत्वं यदुक्तं, तदयुक्तमिति शङ्कते **तथापीति** । प्रमाणद्वयमध्ये स्वस्य सामर्थ्यावधारणे बाधकत्वं, स्वविरोधिनस्तदवधारणे तु बाध्यत्वमिति भावेन बाध्यो वेत्याद्युक्तम् ।

**विट्ठल०— बाधको वेति** । तत्प्रतिपक्षानुमानस्य प्राबल्ये बाधकत्वं अन्यथा बाध्यत्वमिति व्यवस्थितिविकल्प इति ध्येयम् ।

**॥ इति वैपरीत्यासम्भवात् ॥**

* * *





**॥ अथ सोपाधिकत्वं न साध्यसमव्यापकत्वम् (समव्याप्तस्यैवोपाधित्वमिति नियमासम्भवः) ॥**
**॥ अथ सन्न्यायरत्नावल्यामस्य पक्षस्य परमतत्वेनानुवादः ॥**

१८३ **सु०— अत्र सोपाधिकत्वमिति वक्तव्ये साध्यव्यापकवैलोम्यमिति वचनमुपाधिलक्षणस्यापि प्रदर्शनार्थम्, तदपि साध्यसमव्यापकत्वपक्षनिरासाय ।**

**नन्वेष पक्षष्टीकाकृताऽङ्गीकृतः । मैवम्, परमतानुवादत्वात्, अन्यथा 'एकसाध्याविनाभाव' इत्युदयनवचनोदाहरणवैयर्थ्यात् ।**

**परि०— टीकाकृतेति** । सन्न्यायरत्नावलीकृतेत्यर्थः । **एकेति** । 'एकसाध्याऽविनाभावे मिथः सम्बन्धशून्ययोः । साध्याभावाविनाभावी स उपाधिर्यदत्ययः' इत्यत्राविनाभावशब्दः साहचर्यमात्रपरः । परस्परपरिहारेण सतोर्हिंसात्वनिषिद्धत्वयोः पापहेतुत्वरूपैकसाध्याविनाभावे सति तयोर्मध्ये यदभावः साध्याभावाविनाभावी व्याप्तः स एवोपाधिरित्यर्थः ।

**यादु०— टीकाकृताऽङ्गीकृत इति** । टीकायां साध्यं व्यापकं यस्येति साध्यव्यापकः, साध्यस्य व्यापक इति वेति विग्रहद्वयस्य प्रदर्शितत्वेनायं पक्षः टीकाकारेणाङ्गीकृत इति ज्ञायत इति भावः । **परमतेति** । टीकायाः परमतानुवादपरं मूलमित्यभिप्रायकत्वादित्यर्थः । 'एकसाध्याविनाभावे मिथः सम्बन्धशून्ययोः । साध्याभावाविनाभावी स उपाधिर्यदत्ययः' इत्युदयनश्लोकस्यायमर्थः । मिथः सम्बन्धशून्ययोः परस्परपरिहारेण वर्तमानयोर्हिंसात्वनिषिद्धत्वयोरुभयोरप्येकेन साध्येनाधर्मसाधनत्वेनाविनाभावे साहचर्ये सति तयोर्मध्ये यस्यात्ययो निवृत्तिः साध्याभावेनाविनाभावी व्याप्तः स एवोपाधिः । एवं च कलञ्जभक्षणादौ सत्यामपि हिंसात्वनिवृत्तौ साध्यस्याधर्मसाधनत्वस्य निवृत्तिर्नास्ति । निषिद्धत्वाभावस्तु सर्वत्र साध्याभावेन व्याप्त इति तस्यैवोपाधित्वे प्रयोजकत्वं नेतरस्येति । अत्र प्रथमपादेनोपाधेः साध्यं प्रति व्याप्यत्वमुक्तम् । द्वितीयपादेन साधनाव्यापकत्वम् । उत्तरार्धेन साध्यव्यापकत्वमिति विवेकः ।

**कं०रा०— नन्वेष पक्ष इति** । साध्यं व्यापकं यस्येति साध्यव्यापकः साध्यस्य व्यापक इति वेति वदता सन्न्यायरत्नावलीकृता साध्यसमव्यापकत्वपक्षोऽङ्गीकृत इत्यर्थः । ***अन्यथेति*** । टीकाकारवचनस्य परमतानुवादरूपत्वाभावे 'एकसाध्याविनाभावेऽथ सम्बधशून्ययोः । साध्याभावाविनाभावी स उपाधिर्यदत्यय' इत्युदयनवचनोदाहरणस्य वैयर्थ्यप्रसङ्गादित्यर्थः ।

**शे०वा०— टीकाकृतेति** । सन्न्यायरत्नावलीकृतेत्यर्थः । **अङ्गीकृत इति** । तथा च कथं तन्निरास इति वाक्यशेषः । टीकायां साध्यं व्यापकं यस्येति साध्यव्यापकः, साध्यस्य व्यापक इति वेति विग्रहद्वयस्य





प्रदर्शितत्वेन समव्यापकत्वस्य तदङ्गीकृतत्वसिद्धिरिति भावः । उदयनमतानुवादरूपत्वादुदाहृतग्रन्थस्य न तेनास्य टीकाकृदभिमतत्वसिद्धिरित्याह **परमतेति** । टीकाया वस्तुस्थितिप्रदर्शनपरत्वमेवास्तु किं परमतानुवादकल्पनयेत्यत आह **अन्यथेति** । परमतानुवादत्वाभाव इत्यर्थः । मिथः सम्बन्धशून्ययोः परस्परपरिहारेणान्यत्र कलञ्जभक्षणादौ यागीयहिंसायां च वर्तमानयोः हिंसात्वनिषिद्धत्वयोरुभयोरप्येकेन साध्येनाधर्मसाधनत्वेनाविनाभावे व्यर्थहिंसायां साहचर्ये सति तयोर्मध्ये यस्यात्ययो निवृत्तिः साध्याभावेनाविनाभावी व्याप्तः स एवोपाधिः । एवं च कलञ्जभक्षणादौ सत्यामपि हिंसात्वनिवृत्तौ साध्यस्याधर्मसाधनत्वस्य निवृत्तिर्नास्तीति न तस्योपाधित्वम् । निषिद्धत्वाभावस्तु कदलीफलभक्षणादौ सर्वत्र साध्याभावेन व्याप्त इति तस्यैवोपाधित्वमिति सम्मतिग्रन्थार्थः । अत्र प्रथमपादेनोपाधेः साध्यं प्रति व्याप्यत्वमुक्तं, द्वितीयपादेन तु साधनाव्यापकत्वम्, उत्तरार्धेन तु साध्यव्यापकत्वमिति विवेकः ।

**वा०र०— टीकायामिति** । टीकाकृतेति । प्रकृतसन्न्यायरत्नावल्याख्यायामित्यर्थः । **विग्रहद्वय-स्येति** । यद्यपि विग्रहद्वयं नैकार्थसाधकतयोक्तम् । अत एव वाशब्दो विकल्पार्थः प्रयुक्तः । तथापि वाशब्दस्य समुच्चयार्थत्वात् इति वेति टीकायाः इति च इत्यर्थकत्वेन अर्थसमुच्चयलाभात् समव्याप्तिप्रतिपादकत्वं युक्तम् । अत एवोदयनवाक्यमत्रार्थे प्रमाणीकृतं उत्तरत्रे हृदयम् । **उदयनमतानुवादेति** । उदयनमते समव्याप्तस्यैव उपाधित्वात् तन्मतानुसारेण टीकाकृता समव्याप्तत्वं तद्व्याख्यानतया वर्णितमित्यर्थः । यद्यपि एकसाध्या-विनाभावः इत्येतत्कारिकामुदाहृत्य तस्यायोज्यमानायाः साध्यव्यापकत्वे सति साधनाव्यापकत्व इत्ययमर्थः इत्यादि खण्डनग्रन्थेऽभिहितम् । अयं च एकः साध्याविनाभावः इत्यादेः । पर्यवसितोऽर्थः इत्यन्तखण्डन-वाक्यात् तथाप्रतीतेः । तत्खण्डनव्याख्यानावसरे शङ्करभट्टेन एकसाध्येत्यादिकं पदत्ययो पदभावः इत्यादिना इति भट्टाचार्यवार्तिकयोजना इत्यन्तेन व्याख्यातम् । तत्र च एतत्कारिकाभट्टाचार्यवचनतया उक्तेति कथमस्य उदयनवचनत्वं मूले उक्तं इत्याभाति । तथापि विद्यासागरीकृता साध्यव्यापकत्वे सति साधनाव्यापकत्वमिति अत्रोदयनसम्मतिमाहेति अयं न एकसाध्येत्यादेः अवतरितत्वात् । अयं चास्य श्लोकस्यापर्यवसितार्थ इति सम्बन्ध इत्युक्त्वा कथमस्यायमर्थः इत्याद्युक्त्वा तमेव श्लोकं पठति इति एकसाध्येत्यस्यावतरितत्वात् तद्विरुद्ध-शङ्का भट्टोक्तिरनादेया । एतत्प्रघट्टके गुण्डीराजीतो विद्यासागरीकलामात्रतोऽपि नाधिकेति तद्विरोधाच्च । अत एव गङ्गापुर्यां समासमविनाभावौ एकत्र स्तः । यदा तदा समेन यदि नो व्याप्तः तयोर्हि नोऽप्रयोजकः इत्येतत् भट्टाचार्यवाक्यमुदाहृत्य साध्यसमव्याप्तत्वलाभं वर्णयित्वा तदेतत् उदयनेनापि उक्तं एकसाध्येत्याद्युक्तम् । षट्साहस्र्यां च प्रकृतोपाधिस्वरूपे किरणावलीकारसम्मतिमाहेति एवमेतदेव इत्येतत् अवतारितम् । वरदराजीय-व्याख्यानावसरे हरिदत्तदीक्षित्यामपि इदं उपाधिलक्षणं उदयनस्यापि सम्मतमित्याह यथाहुरिति । मिथः सम्बन्ध इत्यादेः अभिधानात् । ग्रन्थे उदयनवाक्याच्चोदयनवाक्यत्वस्यैव सिद्धेश्च । अत एव रघं इमे अयं चेत्यनेन एकसाध्ये इत्येतत् अर्थानुवादित्वमुक्त्वा तद्धर्मभूता हि व्याप्तिरित्यादि यथाश्रुत कुसुमाञ्जलिग्रन्थ एव लिखितः । ततोऽस्य कुसुमाञ्जलिस्थत्वाभावेऽपि अन्यत्रोदयनेन उक्तत्वाशयेन उदयनमतेत्युक्तं मूलटीकयोरिति ज्ञेयम् ।





खण्डनकृता साध्यव्यापकत्वे सतीत्यादिलक्षणस्य उदयनोक्तस्य एकसाध्याविनाभावः इत्येतत् श्लोकपर्यवसितार्थत्वोक्त्या तच्छ्लोकस्योदयनसम्मतित्वोक्तिरित्यप्याहुः । एकसाध्याविनाभावः इत्यतःपरं विद्यमानं मिथःसम्बन्धशून्ययोः साध्याविनाभावी स उपाधिः यदत्ययः इति वाक्यशेषं मिलित्वा सम्पूर्णकुसुमाञ्जलिकारिकां व्याख्याति **मिथः सम्बन्धशून्ययोरित्यादि** । इदं च व्याख्यानं वरदराजीयानुसारेण ।

**स०व्र०**— ननु परमतानुवाद इति कस्मात् ज्ञायते । स्वमतानुवाद एव किं न स्यात् विशेषनियामकाभावादित्यत आह **अन्यथेति** । परमतानुवादत्वाभावे इत्यर्थः । मिथः सम्बन्धशून्ययोर्ययोर्धर्मयोर्मध्ये एकस्य धर्मस्य साध्याविनाभावे सति यदत्ययः साध्याभावाविनाभावी स उपाधिः । अत्र प्रथमार्धेन साध्यव्याप्यत्वमुक्तम् । द्वितीयार्धेन साध्यव्यापकत्वमिति उदयनवचनार्थः ।

**विठ्ठल०**— अन्यैरेवोक्तत्वात्किमर्थं तत्प्रदर्शनमित्यत आह **तदपीति** । **नन्वेष पक्ष इति** । साध्यं व्यापकं यस्येति साध्यव्यापकः । साध्यव्यापक इति वा उपाधिः, साध्यव्यापकत्वे सति साधनाव्यापक इति सन्न्यायरत्नावल्यां बहुव्रीहितत्पुरुषावाश्रित्य व्याख्यातत्वादिति भावः । **अन्यथेति** । टीकाकारवचनस्यानुवादपरत्वाभावे एकसाध्याविनाभावे 'मिथः सम्बन्धशून्ययोः । साध्याभावाविनाभावी स उपाधिर्यत्प्रत्यय' इति उदयनवचनोदाहरणवैयर्थ्यप्रसङ्गादित्यर्थः । तस्य चायमर्थः । मिथः सम्बन्धशून्ययोः कलञ्जभक्षणादौ निषिद्धत्वस्य सत्त्वेऽपि हिंसात्वस्याभावात् । यागीयहिंसायां सत्यपि हिंसात्वे निषिद्धत्वस्याभावात् । ये परस्परपरिहारेण वर्तमानयोस्तयोरेकसाध्येनाधर्मसाधनत्वेनाविनाभावे बाह्ये हिंसायां साहचर्ये सति ययोर्मध्ये यस्य निषिद्धत्वस्यात्ययो भावः साध्याभावेनाविनाभावी व्याप्तः । स उपाधिरिति ।

**चषकः— टीकाकृताऽङ्गीकृत इति** । सन्न्यायरत्नावलीकृदङ्गीकृत इत्यर्थः । 'एकसाध्याविनाभावे मिथः सम्बन्धशून्ययोः । साध्याभावाविनाभावी स उपाधिर्यदत्ययः' इति कारिकार्थस्तु अत्राविनाभावशब्दः साहचर्यमात्रपरः मिथः सम्बन्धशून्ययोः परस्परपरिहारेण वर्तमानयोर्हिंसात्वनिषिद्धत्वयोरुभयोरप्येकेन साध्येनाविनाभावे साहचर्ये सति तयोर्मध्ये यस्यात्ययोऽभावः साध्याभावाविनाभावी तद्व्याप्तः स एवोपाधिः, कलञ्जभक्षणादौ हिंसात्वाभाववति साध्यीभूताधर्मसाधनत्वस्यैव सत्त्वेन तदभावाभावेन हिंसात्वाभावो न साध्याभावेन व्याप्त इति हिंसात्वं नोपाधिः किं तु निषिद्धत्वाभावस्तादृश इति निषिद्धत्वस्यैवोपाधित्वमिति । अत्र प्रथमपादेनोपाधेः साध्यं प्रति व्याप्यत्वमुक्तं द्वितीयपादेन साधनाव्यापकत्वमुत्तरार्धेन साध्यव्यापकत्वमिति विवेक इति स्थितम् ।

**॥ इति सन्न्यायरत्नावल्यामस्य पक्षस्य परमतत्वेनानुवादः ॥**

* * *





**॥ अथ तत्पक्षदूषणस्य स्फुटत्वात् तत्रानुक्तिः ॥**

**१८४ सु०— दूषणं तु स्फुटत्वान्नोक्तम् । तथा हि । समपदं किं विषमव्याप्तिकव्यवच्छेदार्थमुत प्रयोजनान्तरार्थम् ।**

**परि०—** कुतो न दूषितोऽयं पक्षः टीकाकृतेत्यत आह **दूषणं त्विति** ।

**यादु०—** ननु तर्हि मूले दूषणोक्त्या भाव्यमित्यत आह **दूषणं त्विति** । मूल इति शेषः । अत एव टीकायामपि तन्न प्रदर्शितमित्याशयः ।

**कं०रा०—** ननु टीकाकारीयस्य समव्याप्तोपाधित्ववचनस्य एकसाध्याविनाभाव इत्युदयनवचनोदाहरणानुसारेण परमतानुवादत्वे तत्र दूषणं कस्मान्नोक्तमित्यत आह **दूषणं त्विति** ।

**शे०वा०—** ननु दूषणाभावेनानुवादस्य तादर्थ्यानुपपत्तेः सम्मत्यैवायमनुवाद इति तेनैतत्पक्षस्य टीकाकृताऽङ्गीकृतत्वसिद्धिरवर्जनीयेत्यत आह **दूषणं त्विति** । टीकाकृतेति शेषः ।

**स०व्र०—** ननु अनुवादो हि द्वेधा । दूषणार्थं वा अङ्गीकारार्थं वा । नाद्यः सम्भवति । दूषणस्यानुदितत्वात् । तस्मादङ्गीकारार्थमेवेत्यत आह **दूषणस्येति** । तथा च दूषणानुक्तिरन्यथासिद्धेत्यर्थः ।

**विठ्ठल०—** तर्हि दूषणं टीकाकारैः कुतो नोक्तमित्यत आह **दूषणं त्विति** । स्वयमुपपादयति **तथा हीत्यादिना** ।

* * *

**॥ अथ समपदस्य विषमव्याप्तिकव्यवच्छेदार्थकत्वासम्भवः ॥**

**१८५ सु०— नाद्यः, 'पार्थिवपरमाणुरूपादयो नित्याः परमाणुविशेषगुणत्वात् आप्यपरमाणुरूपादिवदि'त्यादौ पृथिवीविशेषगुणत्वाभावादेः विषमव्याप्तिकस्यापि उपाधित्वेन तद्व्यवच्छेदस्यायुक्तत्वात्, प्रतिपक्षोन्नायकत्वसम्भवेन दूषणत्वाच्च ।**

**विषमव्याप्तिकस्योपाधित्वे पक्षेतरत्वस्यापि तत्प्रसङ्ग इति चेत्, तत्किमुक्तविशेषणद्वयोपेतं न वा । नेति पक्षे तत एवानुपाधित्वम् । आद्ये तु तस्याप्युपाधित्वे को दोषः ।**





**पर्वतेतरत्वादेः सर्वत्र सम्भवेन नैवमिति चेन्न, अनुमानव्याप्त्यादिग्राहकप्रमाणप्राबल्ये सति साध्यव्यापकत्वभङ्गात् । तदभावे चानुमानभङ्गस्येष्टत्वात् । अन्यथा 'शब्दोऽभिधेयः प्रमेयत्वाद्घटवदि'त्यादावशब्दत्वादेः समव्याप्तिकपक्षेतरस्यानिरासप्रसङ्गात् ।**

**तदिदमिष्टमपि त्यजति अनिष्टमपि गृह्णातीति न विशेषणम् ।**

**परि०**— परिमाणादावव्यभिचारायोक्तं **विशेषेति** । शब्दादावव्यभिचाराय **परमाण्विति** । **पृथिवीविशेषेति** । पृथिवीपरमा(अ)णुपरिमाणे साध्याव्यापकत्वनिरासाय **विशेषेति** । आप्यरूपादौ तन्निरासाय **पृथिवीति** । घटपटसंयोगादौ सत्यप्युपाधौ साध्याभावान्न समव्याप्तिरिति भावः । **उक्तविशेषणद्वयेति** । साध्यव्यापकत्वे सति साधनाव्यापकत्वरूपविशेषणद्वयेत्यर्थः । **साध्यव्यापकत्वभङ्गादिति** । 'अनुकूलेन तर्केण सनाथे सति साधने । साध्यव्यापकताभङ्गात्पक्षे नोपाधिसम्भवः' इत्युक्तदिशा पक्षे साध्यनिश्चये तत्रोपाधेरभावादिति भावः । **तदिदमिति** । समपदमिष्टमपि विषमव्याप्तस्योपाधित्वं त्यजति । अनिष्टमप्यशब्दत्वादेरुपाधित्वं गृह्णातीत्यर्थः ।

**यादु०**— **पृथिवीविशेषगुणवत्त्वादेरिति** । अत्र पारिमाण्डल्ये साध्याव्यापकतापरिहाराय विशेषपदम् । अत्र पृथिवीनिष्ठसंयोगादौ व्यभिचारान्न समव्याप्तिरिति भावः । **साध्यव्यापकत्वभङ्गादिति** । पक्ष एवेति शेषः । **अशब्दत्वादेरिति** । इदं च पक्षातिरिक्ते साध्यव्यापकत्वं ग्राह्यमित्यभिप्रायेण । वस्तुतस्तु पक्ष एव व्यभिचारान्न साध्यव्यापकतेति ध्येयम् । **इष्टमपीति** । अव्याप्त्यतिव्याप्तिसम्पादकमित्यर्थः ।

**वं०प०**— **विशेषणद्वयं** साध्यव्यापकत्वसाधनाव्यापकत्वरूपम् । **तत एव** लक्षणाभावादेव । **अन्यथेति** । समव्याप्तस्याप्युपाधित्व इत्यर्थः । **इदं** समव्याप्तत्वम् । **इष्टं** पृथिवीविशेषगुणत्वाभावादेर्विषमव्याप्तस्योपाधित्वम् । **अनिष्टं** केवलान्वयिन्यपि अशब्दत्वादेरुपाधित्वम् ।

**कं०रा०**— **पृथिवीति** । पार्थिवपरमाणुगतैकत्वादौ नित्यत्वे सत्यपि पृथिवीगुणत्वाभावस्याभावेन साध्याव्यापकत्वायोगाद्विशेषपदं पृथिवीविशेषगुणत्वाभावस्य कार्यजलादिगतरूपादौ सत्त्वेऽपि नित्यत्वाभावाद्विषमव्याप्तिकत्वमादिपदेन पाकजरूपवद्विशेषगुणत्वाभावादेर्ग्रहणं पक्षेतरस्येति भावप्रधानो निर्देशः । **तदिदमिति** । समव्याप्तत्वमुपाधित्वेनेष्टमपि विषमव्याप्तिकं त्यजति शब्दोऽभिधेयः प्रमेयत्वादित्यादावुपाधित्वेनानिष्टमप्यशब्दत्वादिकं संगृह्णातीति न विशेषणमित्यर्थः ।

**श्रीनिधि०**— **पृथिवीविशेषगुणत्वाभावादेरिति** । **उपाधित्वेन** साधनाव्यापकत्वादिना । न द्वितीय इत्याह **प्रतिपक्षोन्नायकत्वसम्भवेनेति** ।





**शे०वा०—** आद्येऽपि किं साधकाभावाद्विषमव्याप्तस्योपाधित्वं नेत्यभिमतं किंवा बाधकसद्भावात् । आद्येऽपि किं तत्रोपाधित्वेन शास्त्रे व्यवहारो नास्तीत्यभिमतं किंवा दूषकताबीजं नास्तीति विकल्पान्मनसि निधायाद्यं दूषयति **पार्थिवपरमाणुरूपादय इति** । **पृथिवीविशेषगुणत्वाभावादेरिति** । अत्र पार्थिवपरमाणुगतैकत्वपरिमाणैकपृथक्त्वेषु सत्यपि नित्यत्वे पृथिवीगुणत्वाभावाभावेन तत्र साध्याव्यापकतापरिहारायोपाधौ विशेषपदम् । आदिपदेन गन्धवद्विशेषगुणत्वाभावरूपोपाधिसङ्ग्रहः । **विषमव्याप्तिकस्येति** । नित्यत्ववत्याप्यपरमाणुरूपादौ पृथिवीविशेषगुणत्वाभावस्य सत्त्वेनोक्तोपाधेः साध्यव्यापकत्वेऽपि पृथिवीविशेषगुणत्वाभाववति संयोगादौ नित्यत्वाभावेनोपाधेर्न साध्यव्याप्यत्वमिति नास्य समव्याप्तिरिति ध्येयम् । **उपाधित्वेनेति** । तत्त्वेन शास्त्रे व्यवहृतत्वेनेत्यर्थः । द्वितीयं प्रत्याह **प्रतिपक्षेति** । साध्यव्यापकत्वादिमात्रस्यैव प्रतिपक्षोन्नायकत्वे प्रयोजकत्वेन समव्याप्त्यभावेऽपि विषमव्याप्तस्य प्रतिपक्षोन्नायकत्वोपपत्तेरिति भावः । आद्यद्वितीयं शङ्कते **विषमेति** । इयं च गूढाभिसन्धेः शङ्केति ज्ञेयम् । आशयमजानान इव गूढाभिसन्धिरेवोत्तरमाह **तत्किमिति** । शङ्किता स्वाभिप्रायमुद्घाटयति **अनुमानेति** । **प्रमाणप्राबल्य इति** । अनुमानमूलव्याप्त्यादिग्राहकप्रमाणस्यानुकूलतर्कसनाथत्वेन प्राबल्ये सतीत्यर्थः । **साध्यव्यापकत्वभङ्गादिति** । पक्ष एवेति शेषः । तथा च पर्वतेतरत्वादेरुक्तविशेषणवत्त्वस्यैवाभावान्न विषमव्याप्तस्योपाधित्वे तस्योपाधित्वप्रसङ्ग इति भावः । यत्रानुमानेऽस्त्यनुकूलतर्कस्तत्र पर्वतेतरत्वादेः पक्ष एव साध्यव्यापकताभङ्गेनोक्तविशेषणवत्त्वाभावादनुपाधित्वेन तदनुमानोच्छेदाप्रसक्तावपि यत्रानुमाने नानुकूलतर्कस्तत्रोक्तरीत्या साध्यव्यापकताभङ्गाप्रसक्त्योक्तविशेषणद्वयवत्त्वेन पर्वतेतरत्वादेरुपाधित्वं स्यादेवेत्यत आह **तदभावे चेति** । **अन्यथेति** । विषमव्याप्तस्योपाधित्वे तादृशपक्षेतरत्वस्याप्युपाधित्वप्रसङ्गेनानुमानमात्रोच्छेदप्रसक्तेर्न तस्योपाधित्वमित्यङ्गीकार इत्यर्थः । अशब्दत्वादेरिति आदिपदेन घटः पृथिवी घटत्वादित्यत्र घटगतगन्धवत्त्वरूपसमव्याप्तोपाधेः सङ्ग्रहः । यद्यप्यशब्दत्वादेः साध्यव्यापकतैव नास्त्यभिधेयत्ववति शब्देऽशब्दत्वाभावेन पक्ष एव व्यभिचारात् । तथाऽपि पक्षातिरिक्तसाध्यव्यापकत्वाभिप्रायेणेदम् । उपाधिलक्षणे साध्यव्यापकपदस्य पक्षातिरिक्तसाध्यव्यापकपरत्वादिति ध्येयम् । **इष्टमपीति** । सत्प्रतिपक्षोत्थापकत्वेन दूषकताबीजाक्रान्तत्वेनोपाधितयेष्टं विषमव्याप्तं न सङ्गृह्णाति । तत्र नास्तीति यावत् । तथा च तत्राव्याप्तिरिति भावः । **अनिष्टमपीति** । दूषकताबीजानाक्रान्ततयोपाधितयाऽनिष्टमशब्दत्वादिरूपसमव्याप्तमुपाधिं सङ्गृह्णाति । तत्रास्तीति यावत् । तथा च तत्रातिव्याप्तिरिति भावः ।

**वा०र०—** **आद्येऽपीति** । विषमव्याप्तिकव्यवच्छेदार्थ इत्याद्येऽपीत्यर्थः । उपाधित्वेन तद्व्यवच्छेदस्यायुक्तत्वात् । दूषणत्वाच्चेति वाक्यद्वयोक्तस्य प्रमेयस्यैकत्वे येन च शब्दानुपपत्तिः स्यात् । किन्तु पृथक् पृथक् आशङ्कानिरासकतया भिन्नार्थकमिति युक्तश्चशब्दः इत्याशयेन तर्कताण्डवोक्तरीत्या वाक्यद्वयार्थं स्पष्टयितुं विकल्पमुखेन योजयति **आद्येऽपि किं तत्रेति** । **आद्यमिति** । शास्त्रे व्यवहारे वा अस्तीत्याद्यमित्यर्थः । **आदिपदेन गन्धवत् विशेषेति** । यद्यपि इत्यादाविति प्रथमादिपदेन धूमवान् वह्नेः इत्याद्यनुमानसङ्ग्रहात् तत्रत्यइन्धनाद्युपाधिसङ्ग्रहोऽपि व्याख्यातव्यः तथापि पूर्वादिपदसङ्ग्राह्यानुमानानि तत्रोपाधयश्च स्पष्टत्वान्नावश्यं





उपदर्श्याः इत्याशयेनादिपदोक्तानुमान इव मुखतः उपात्तानुमानेऽपि आदिपदेनोपाध्यन्तरं सङ्गृहीतमिति मूलाशयं व्यञ्जयन् तत्रोपाध्यन्तरसङ्ग्रहपरतया आदिपदव्याख्यानमेतत् इत्यदोष इति ज्ञेयम् । आद्यपक्षनिरासलाभाय शास्त्रे पार्थिवेत्यादिस्वीकारात् इत्यन्ततर्कताण्डवोक्तिमनुसृत्योपाधित्वेन इत्येतत् व्याचष्टे **तत्त्वेन शास्त्र इति** । समव्याप्त्यभावेऽपि इत्यादि तर्कताण्डवानुसारेणाधिकं योजयति **साध्यव्यापकत्वादिमात्रस्यैवेति** । **आद्यद्वितीयमिति** । बाधकसद्भावादिति द्वितीयमित्यर्थः । पर्वतेतरत्वादेः इत्युत्तरग्रन्थानुत्थानशङ्कावारणायाह **इयं च गूढाभिसन्धेरिति** । उक्तविशेषणवत्त्वाभावादिति पाठः । **अभिधेयत्ववतीति** । पृथिवीत्ववतीत्यादिकमपि उपलक्षणया ज्ञेयम् । **पक्ष एव व्यभिचारादिति** । यद्यपि उपाधेः पक्षे साध्यव्यभिचारो न शङ्कार्हो । उपाधिमात्रोच्छेदकत्वापादकत्वात् । तथापि यत्र साध्यं निश्चितं तादृशपक्षे उपाधेः साध्यव्यापकताभङ्गः शङ्कार्हः इत्याशयेन इदमुक्तमिति ज्ञेयम् । **पक्षातिरिक्तेति** । सर्वोपाधिसङ्ग्रहाय तस्यावश्यकत्वात् । अशब्दत्वादेश्च पक्षे साध्यव्यापकताभङ्गेऽपि पक्षातिरिक्ते तद्व्यापकतायाः अन्यत्र क्लृप्तायाः अविकलत्वात् । अत एव शब्दः अभिधेयः प्रमेयत्वात् इत्यत्राश्रावणत्वमादाय बोध्यमिति । पक्षातिरिक्ते साध्यव्यापकत्वादेवेत्याद्युक्तान्यथापक्षे उपाधिः स्यात् इत्यादि वर्धमानव्याख्यानावसरे कुसुमाञ्जलिमकरन्दे रुचिदत्तेनोक्तम् । एतच्च पक्षातिरिक्तसाध्यव्यापकत्वसाध्यसन्देहात् उपाधिमात्रोच्छेदापत्तेः । इति वर्धमानग्रन्थश्च । न चैवं पक्षीयसाध्यव्यापकताभावात् तद्व्यावृत्त्या पक्षनिष्ठसाध्यव्यावृत्तेः कथं व्यभिचार इति चिन्त्यं इति रुचिदत्तेनोक्तं दूषयितुमाह **उपाधिलक्षण इति** । अनेन वस्तुतः पक्षातिरिक्ते साध्यव्यापकतामात्रमेव पक्षे साध्याभावायालं न तु पक्षे साध्यतद्व्यापकता आवश्यकीति मूलेऽभिप्रेतं इति दर्शयति । पक्षातिरिक्तसाध्येत्यादिमणिरुचिदत्ते त्वेवमुक्तम् । शिष्टं धर्मराज्यादौ उक्तं द्रष्टव्यमिति भावः ।

**स०व्र०—** किं साधकाभावाद्विषमव्याप्तस्यानुपाधित्वम्, किं वा बाधकसद्भावात् । आद्येऽपि किं तत्रोपाधित्वेन शास्त्रे व्यवहारो नास्तीत्यभिप्रेतम्, सत्यपि वा तस्मिन् दूषकताबीजाभावाद्वेति विकल्पं मनसि निधायाद्यं दूषयति **विषमव्याप्तिकस्याप्युपाधित्वेनेति** । **तत्त्वेन** शास्त्रे व्यवहारेणेत्यर्थः । पृथिवीविशेषगुणत्वाभावादेरित्यत्र आदिपदेन गन्धवद्विशेषगुणत्वरूपोपाधिसङ्ग्रहः । द्वितीये त्वाह **प्रतिपक्षेति** । द्वितीयं शङ्कते **विषमव्याप्तिकस्येति** । **प्रमाणप्राबल्य इति** । अनुमानग्राहकप्रमाणस्यानुकूलतर्कसनाथत्वेन प्राबल्ये सतीत्यर्थः । **अन्यथेति** । विषमव्याप्तत्वस्योपाधित्वे तादृशपक्षेतरस्याप्युपाधित्वापातात्तेनानुमानमात्रोच्छेदभिया तस्यानुपाधित्वे इत्यर्थः । **अशब्दत्वादेः** इत्यत्र (आदिपदेन) घटः पृथिवी घटत्वादित्यत्र गन्धवत्त्वस्य समव्याप्तपक्षेतरपरिग्रहः । समपदस्य विषमोपाधिव्यावर्तकत्वादिष्टत्यागः स्पष्ट एव । समव्याप्ताशब्दत्वादिपक्षेतरस्याप्युपाधित्वापातेन तद्व्यावर्तकत्वाभावादनिष्टसङ्ग्राहकत्वमिति भावः ।

**विठ्ठल०—** **पृथिवीविशेषगुणत्वादेरिति** । अत्र पारिमाण्डिल्ये साध्यव्यापकतापरिहाराय विशेषपदम् । पृथिवीनिष्ठसंयोगादौ व्यभिचारान्न समव्याप्तिरिति भावः । **साध्यव्यापकत्वभङ्गादिति** । पक्ष एवेति

शेषः । यथोक्तमुदयनेन 'अनुकूलेन तर्केण सनाथे अतिसाधने । साध्यव्यापकताभङ्गात्पक्षे नोपाधिसम्भव' इति । **अन्यथेति** । अनुव्याप्तिग्राहकप्रमाणप्राबल्ये सत्यपि अनुकूलतर्के सत्यपीति यावत् । साध्यव्यापकत्वभङ्गानङ्गीकार इत्यर्थः । **इष्टमपीति** । उपाधित्वेनेष्टमपि पृथिवीविशेषगुणत्वादिकमित्यर्थः ।

**चषकः— पृथिवीविशेषेति** । जलीयरूपादौ साध्यव्यापकता मा हि भूदिति पृथिवीपदम् । घटसंयोगादौ तद्व्यवच्छेदाय विशेषपदमुपात्तम् । **साध्यव्यापकत्वभङ्गादिति** । 'अनुकूलेन तर्केण सनाथे सति साधने । साध्यव्यापकताभङ्गात्पक्षे नोपाधिसम्भवः' इति वचनादिति भावः ।

* * *

**॥ अथ समव्याप्तस्यैवोपाधित्वमित्यत्र परोपन्यस्तं साधकं दूषयति ॥**

**१८६ सु०— यदप्युक्तम्, 'स्वसम्बन्धेन यः स्वीयं धर्ममन्यत्र योजयेत् । स उपाधिर्यथा लोके जपादिः स्फटिकादिषु । इहाप्यव्याप्यहेत्वर्थव्याप्यत्वभ्रमहेतुता । उपाधेः स्यात्तदा तस्य समव्याप्तिर्यदा भवेदि'ति । तत्र वक्तव्यम् । किमनेनोक्तं भवति । किं विषमव्याप्तिकस्य व्याप्यत्वाभावात्तत्सम्बन्धेन साधनाभिमते व्याप्यताभ्रमानुपपत्तेरदोषत्वेन तद्व्यवच्छेदाय समपदमिति, किंवाऽन्वर्थोपाधिशब्दसम्पादनार्थमिति ।**

**नाद्यः, प्रतिपक्षोन्नायकत्वेन दूषणत्वसम्भवे स्वगतव्याप्त्यवभासकताभावस्यादोषत्वात्, साध्यसाहचर्यदर्शनेनैव व्याप्यताभ्रमसम्भवाच्च ।**

**न द्वितीयः, उपाधिशब्दसम्बन्धस्य स्वकपोलकल्पितत्वात् । अत एव भगवान् आचार्यवर्यः सोपाधिकत्वमित्यनभिधाय साध्यव्यापकवैलोम्यमित्याह ॥ व्यवहारास्तु परकृतसङ्केतेनापि निर्वहणीयाः । यद्वा क्वचित्साध्यव्याप्यतासद्भावेनोपाधित्वेऽन्यत्रापि गौण्या वृत्त्या उपाधिव्यवहारोपपत्तिः ।**

**परि०— स्वीयमिति** । पूर्ववत्साधुत्वमस्य ध्येयम् । **इहापीति** । शास्त्रीयोपाधिव्यवहारस्थलेऽपीत्यर्थः । यथेति श्रवणात् तथेति योज्यम् । साध्याव्याप्यो हेत्वर्थः हिंसात्वादिः तस्य व्याप्योऽयमिति व्याप्यत्वप्रकारकभ्रमहेतुता उपाधेस्तदा भवेद्यदा समव्याप्तिर्भवेदिति योजना । **विषमव्याप्तिकस्येति** । अदोषत्वेनेत्यन्वयः । तत्र हेतुर्व्याप्यत्वेत्यादिः । **अन्वर्थेति** । उप-





समीपस्थे स्वनिष्ठव्याप्यत्वधर्ममादधातीत्यनुगतावयवार्थेत्यर्थः । **अत एवेति** । उपाधिशब्द-सम्बन्धस्य साध्यव्यापकादौ तार्किकेण सङ्केतिततयौत्पत्तिकत्वाभावादेव अन्यथा व्यवहृतवा-नित्यर्थः । 'स एव उपाधिदोषोऽपी'त्यादिव्यवहारः कथं तर्हि निमित्ताभावादित्यत आह **व्यवहारास्त्विति** । बहुवचनेन कालात्ययापदिष्टानध्यवसितप्रकरणसमादिव्यवहारग्रहः । क्वचिदन्व-र्थत्वमुपेत्याप्याह **यद्वेति** । **क्वचिदिति** । समव्याप्ते । **गौण्येति** । प्रतिपक्षोन्नायकत्वेनानुमानदूष-(कत्व)णत्वगुणयोगेन लब्धवृत्त्येत्यर्थः ।

**गु०दी०— इहापि अव्याप्यहेत्वर्थव्याप्यत्वभ्रमहेतुता** इत्यत्र साध्येन तस्योपाधेः व्याप्तिर्व्याप्यता न भवेच्चेदुपाधेरव्याप्यहेत्वर्थव्याप्यत्वभ्रमहेतुताऽपि न स्यादिति योजना ।

**यादु०— इहाप्यव्याप्येति** । वस्तुतः साध्याव्याप्यो यो हेतुवाक्यार्थो हिंसात्वादिस्तत्र साध्य-व्याप्यत्वभ्रमहेतुतेत्यर्थः । **समव्याप्तिरिति** । अत्र यद्यपि साध्यव्याप्यत्वं यदा भवेदित्येव वक्तव्यम् । अन्यथा स्वनिष्ठधर्मासञ्जकत्वरूपोपाधिपदप्रवृत्तिनिमित्तालाभात् । तथाऽपि सत्प्रतिपक्षाद्युन्नयनार्थं साध्यव्यापकत्व-मप्यावश्यकमित्यभिप्रेत्य समव्याप्तिरित्युक्तमिति ध्येयम् । **उपाधिशब्दसम्बन्धस्येति** । स्वनिष्ठधर्मासञ्जक इति शेषः । **अत एवेति** । समव्याप्तस्यैवोपाधिशब्दवाच्यत्वमित्यत्राभिधानाद्यभावेन तस्य स्वकपोल-कल्पितत्वादेव साध्यव्यापकत्वमेवोक्तवान्न समव्याप्तिमित्यर्थः । नन्वेवं विषमव्याप्ते उपाधिशब्दप्रवृत्तिनिमित्त-शब्दाभावे तत्रोपाधिशब्दव्यवहाराः कथं स्युरित्यत आह **व्यवहारास्त्विति** । बहुवचनं प्रामादिकत्वशङ्का-निरासाय । सङ्केतोऽपि न शब्दशक्तिप्राप्तार्थानुसारीति सूचयितुं परकृतेत्युक्तमिति ज्ञातव्यम् । तथा च न शास्त्रे लोकव्यवहारार्थमुपाधिव्युत्पादनं किन्त्वनुमानदूषणार्थमतो विषमव्याप्ते उपाधिशब्दः परीक्षकाणां पारिभाषिक एव निश्चितसाध्यकादौ सपक्षादिशब्दवदिति भावः । **क्वचिदिति** । समव्याप्त इत्यर्थः । **अन्यत्रापीति** । विषमव्याप्तेऽपीत्यर्थः । **गौण्येति** । प्रतिपक्षाद्युन्नायकत्वरूपगुणयोगेनेत्यर्थः । तथा च विषमव्याप्तस्यापि दूषणत्व एव ममाभिनिवेशो न तु तत्रोपाधिशब्दमुख्यत्वेऽपीति भावः ।

**वं०प०— तत्सम्बन्धेन** तादृशोपाधिसम्बन्धेन । स्वनिष्ठधर्मासञ्जकत्वमुपाधिपदप्रवृत्तिनिमित्त-मित्यङ्गीकृत्य समव्याप्तिर्वाच्या । तत्र धर्मपदेन यत्किञ्चिद्धर्मो विवक्षितो व्याप्तिरूप एव वा । नाद्यः । विषमव्याप्तेऽप्यार्द्रेन्धनसंयोगादौ स्वनिष्ठगुणवत्त्वरूपधर्मस्य दोषवशाद्वह्न्यादावासञ्जकत्वसम्भवात् । न द्वितीयः । दृष्टान्तीकृते जपाकुसुमादौ व्याप्तिरूपधर्मोपसङ्क्रामकत्वाभावात् । किञ्च नेदमुपाधिशब्दप्रवृत्तिनिमित्तम्, लाभा-द्युपाधिनोद्यमः कृत इत्यादिप्रयोगे लाभादावुपाधिशब्दव्यवहारेण तत्रोक्तनिमित्ताभावात् । तदिदमभिप्रेत्याह **स्वकपोलकल्पितत्वादिति** ।





**कं०रा०— क्वचिदिति** । समव्याप्ते साध्यव्यापकतासद्भावेन स्वनिष्ठधर्मासञ्जकत्वयोपाधिशब्दवाच्यत्वे सति विषमव्याप्तेऽपि साध्यव्यापकत्वादिना तत्सादृश्याद्गौण्या वृत्त्योपाधिशब्दव्यवहाररूपप्रयोजनार्थं समपदमिति द्वितीयोऽपि नेत्यर्थः ।

**श्रीनिधि०— अन्वर्थोपाधिसंज्ञेति** । यौगिकोपाधिसंज्ञेत्यर्थः । नन्वाचार्याणां सोपाधिकमित्यपि व्यवहारोऽस्तीत्यत आह **व्यवहारास्त्विति** ।

**शे०वा०—** समव्याप्तस्यैवोपाधित्वमित्यत्र परोपन्यस्तं साधकं दूषयितुमनुवदति **यदपीति** । उदाहरणमाह **यथेति** । स्वधर्मस्य रक्तत्वादेः स्फटिकादिषु सन्दर्शकत्वाज्जपाकुसुमादिः स्फटिकादिषु यथोपाधिरित्यर्थः । स्वसम्बन्धादन्यत्र स्वधर्मारोपकत्वमुपाधिशब्दप्रवृत्तिनिमित्तमिति भावः । तावताऽपि कथं समव्याप्तिनियमसिद्धिरित्यत आह **इहापीति** । वस्तुतोऽव्याप्यो यो हेत्वर्थो हिंसात्वादिः तत्र व्याप्यत्व-भ्रमहेतुत्वान्यथाऽनुपपत्त्या समव्याप्तिसिद्धिरिति भावः । यद्यपि साध्यव्याप्यत्वमात्रेण व्याप्यत्वभ्रमहेतुत्वोपपत्तेर्न समव्याप्तिं विना तदनुपपत्तिस्तथाऽपि स्ववृत्तिधर्मोपसङ्क्रामकत्वानुरोधात् साध्यव्याप्यत्वं, सत्प्रतिपक्षोत्थापकत्वार्थं साध्यव्यापकत्वमित्यर्थातसमव्याप्त एवोपाधिरित्यत्र तात्पर्यमित्यवधेयम् । ननु विषमव्याप्तस्यापि धर्मोऽन्यत्र वह्न्यादौ दोषवशादारोप्यत एवेति कथं न तस्य लक्ष्यता । न च व्याप्तिरूपधर्मोपसङ्क्रामकत्वं तत्पद-प्रवृत्तिनिमित्तम् । दृष्टान्ते जपाकुसुमादौ तदभावेन तस्योक्तदृष्टान्ताननुगुणत्वादिति सत्येव दोषे दूषणान्तरं वक्तुं विकल्प्य पृच्छति **किमनेनोक्तं भवतीति** । स्वनिष्ठव्याप्यत्वभ्रमहेतुत्वं दूषकताप्रयोजकं तदभावान्न विषमव्याप्तस्योपाधित्वमित्यभिमतं किंवा तस्योपाधिपदप्रवृत्तिनिमित्तत्वात् तदभावेनोपाधित्वमिति विकल्पार्थः । **साध्यसाहचर्येति** । साधनस्येति शेषः । तथा च व्याप्यत्वभ्रमरूपफलस्यान्यथासिद्धेर्न तत्रोपाधिरुद्भावनीयः स्यादिति भावः । **स्वकपोलकल्पितत्वादिति** । साध्यव्यापकत्वादिमति धर्मविशेष इति शेषः । ततश्च निश्चितसाध्यकादौ सपक्षादिशब्दस्येव धर्मविशेषेऽभिधानाद्यभावेन रूढ्याद्यभावेऽपि पारिभाषिकत्वेनोपाधिशब्द-स्यान्वर्थस्यैवाभावान्न तदन्वर्थत्वसम्पादनार्थता समपदस्य युज्यत इति भावः । उपाधिशब्दस्य धर्मविशेषे सङ्केतयितृपुरुषेच्छाधीनत्वेन यथारुचि कर्तव्यतया सोपाधिकत्वमिति परकृतसङ्केतवैलक्षण्येन साध्यव्यापक-वैलोम्यमिति स्वेच्छया सङ्केतान्तरकरणसम्भवेन तथोक्तेरुपपत्तावप्यन्वर्थत्वपक्षे तस्य सोपाधिकत्वमित्येव स्वेनापि निर्देष्टव्यतया साध्यव्यापकवैलोम्यमिति विलक्षणनिर्देशानुपपत्तेर्नान्वर्थतोपाधिशब्दस्यास्तीति सिद्ध्यतीति भावः । नन्वेवं स्वेच्छापरिकल्पितसाध्यव्यापकवैलोम्यमिति सङ्केतानुसारेण तथैव तस्य व्यवहर्तव्यतया कथं भाष्यकारस्य 'स एवोपाधिदोषोऽपि', 'प्रमाणविरुद्धत्वमुपाधिः' 'अथाऽपि सशरीरत्वं चात्रोपाधिर्न वै भवेत्', 'अदुःखित्वेन चानुक्तिः कथं नोपाधितां व्रजेदि'ति परःसहस्रावधिकोऽन्यथाव्यवहार इत्यतो गौरवेण स्वसङ्केतनिबन्धनत्व-स्याप्रयोजकत्वेन स्वपरसाधारणसङ्केतमात्रनिबन्धनत्वाद्व्यवहारस्य स्वसङ्केताभावेऽपि परसङ्केतसद्भावाद्युक्तो भाष्य-कारस्य तदनुयायिनां च तथा व्यवहार इत्याशयेनाह **व्यवहारास्त्विति** । ननु साध्यव्याप्यत्वरूपस्वधर्मस्य





साधने प्रतिबिम्बजनकत्वरूपावयवार्थभावाद्विषमव्याप्तस्य पारिभाषिकोपाधित्वसम्भवेऽप्यवयवार्थवति समव्याप्ते कथं तस्य साङ्केतिकत्वमन्यथाऽतिप्रसङ्गादित्यत आह **यद्वेति** । **क्वचिदिति** । समव्याप्त इत्यर्थः । **अन्यत्रेति** । विषमव्याप्त इत्यर्थः । **गौण्येति** । साध्यव्यापकत्वादिगुणयोगेनेत्यर्थः । समव्याप्तेऽवयवार्थसत्त्वादुपाधिपदं मुख्यं विषमव्याप्ते तु साध्यव्यापकत्वादिगुणयोगाद्गौणमेवोपाधिपदम् । विषमव्याप्तस्य दूषणत्व इव तत्रोपाधिपदस्य मुख्यतायामपि स्वस्याभिनिवेशाभावान्न तदङ्गीकारे काचित्क्षतिरिति भावः ।

वा०र०— **स्वसम्बन्धेनेति** मूलम् । विद्यासागरेणापि अन्यत्राप्युक्तम् । स्वसम्बन्धेनेत्यादेरेवाभिधानात् । पूर्वग्रन्थे च स्पष्टं अमुकीयत्वेनावचनात् किमियं न च नमेतदिति शोध्यमस्ति । स्वसम्बन्धात् इत्यादि विद्यासागर्यनुसारेणाह **स्वसम्बन्धादिति** । **इहापीतीति** । एतच्च वाक्यकृत्यं इति शोध्यमस्ति । व्याख्याति **वस्तुतोऽव्याप्य इति** । **न तदनुपपत्तिरिति** । ततश्च न तया समव्याप्तिसिद्धिरिति शेषः । **साध्यव्याप्यत्वमिति** । स्वीकार्यमिति पूरणीयम् । साध्यव्यापकत्वमित्यनन्तरमपि तथैव पूरणीयम् । तर्कताण्डवानुसारेणाह **ततश्च निश्चितेति** । धर्मविशेषे साध्यव्यापकत्वादिमिति धर्मविशेषे इत्यनन्तरं उपाधिशब्दस्येत्याकृष्य सम्बध्यते । **अन्वर्थत्वस्यैवेति** । प्रवृत्तिनिमित्तापेक्षत्वाभावादित्यर्थमुपष्टम्भकमाह । उपाधिशब्दस्य धर्मविशेषे साङ्केतिकत्वं इत्येतत् भाष्यकारेणापि सूचितमाहेत्यर्थः । **स्वेच्छेति** । भाष्यकारस्येति शेषः । **अन्यथा व्यवहार इति** । साध्यव्यापकवैलोम्यं इत्येवंरूपस्वसङ्केतात् अन्यथोपाधिरिति । परकृतसङ्केतानुसारेणं व्यवहार इत्यर्थः । व्यवहारस्य स्वपरसाधारणेति सम्बन्धः । **स्वसङ्केताभावेऽपि** । व्यवहारमूलेति योज्यम् । परसङ्केतेत्यत्रापि तथैव । **तदनुयायिनां चेति** । अनेन व्यवहाराः इत्यत्र भाष्यकारादीनामिति पूरणीयमिति सूचयति । भाष्यकारस्येति शङ्कावसरोक्तमपि उपलक्षणमित्यपि सूचितम् । यत्तु अन्यथाख्यातौ विषमव्याप्ते उपाधिशब्दप्रवृत्तिनिमित्ताभावेनेत्यादि अवतारः कृतः । सोऽनुपपन्नः । परकृतेति पदानुसारेण स्वीयव्यवहारत्वपुरस्कारस्यैव कार्यत्वात् साङ्केतिकत्वेनान्वर्थत्वाभावात् इत्युक्त्यनन्तरं पुनरेवमाशङ्कानुदयाच्च । प्रागुक्ताभिधानेऽप्यभावादिना उपाधिशब्दस्य प्रवृत्तिनिमित्तापेक्षत्वस्यैवाभाव इति भगवद्रीत्यापि प्राप्तेश्च । एतेनैवं व्यवहारोऽपि न शब्दशक्तिप्राप्तानुसारीति सूचनं परपदकृत्यतयाऽभिहितमपि निरस्तम् । स्वकपोलकल्पितत्वात् इत्येतत् मूलत एवास्यार्थस्य सिद्धत्वेन तदुपर्येव च व्यवहारानुपपत्तिशङ्काप्राप्तौ तत्परिहाराय पुनः तदभिधानपरत्वेन एव एतद्वाक्ययोजनायोगात् । तथा शास्त्रे लोके इत्यादिकमपि तर्कताण्डवोक्तं पूर्वग्रन्थार्थतयैव प्राप्तमिति तस्यात्राभिधानायोगश्च इत्यलम् । दूषणग्रन्थे निवेश्यमेतत् । यदुक्तं उपाधिसम्बन्धस्य स्वकपोलकल्पितत्वात् । अन्वर्थ उपाधिशब्दसम्पादनार्थं समपदमिति । तदयुक्तम् । अन्वर्थत्वपरित्यागो हि विषमव्याप्तिसङ्ग्रहाय क्रियते । तथात्वे च यस्मिन् समव्याप्तेऽन्वर्थत्वसम्भवः तत्र तथात्वमेवाङ्गीकृत्य यत्र विषमव्याप्ते उपाधिशब्दस्यान्वर्थत्वसम्भवः । तन्मात्र एव तच्छब्दं साङ्केतिकत्वमिति कल्पनाया एव कर्तव्यतया सर्वोपाधिषु पारिभाषिकत्वकल्पनायाः वैय्यर्थ्यात् इत्याशङ्कापरिहारपरत्वेनोत्तरग्रन्थं अवतारयति **ननु साध्यव्याप्यत्वेति** । अवयवार्थभावादित्यादि विषमव्याप्ते अवयवार्थभावात् ।





तस्यान्वर्थोपाधिशब्दवाच्यतानुपपत्त्या पारिभाषिकोपाधित्वेन तदङ्गीकारोपपत्तावपि । तत्रोपाधिशब्दस्य साङ्केतिकत्वेऽपीति यावत् इति योजना । **अतिप्रसङ्गादिति** । अग्निर्माणवक इत्यादौ अग्निशब्दप्रवृत्तिनिमित्तदाहकत्वादिशून्ये माणवके अग्निशब्दप्रवृत्तिनिमित्ताभावेऽपि गौण्या प्रयोगः । इत्येतावता दाहकत्वादिरूपप्रवृत्तिनिमित्तवति अग्नावपि तच्छब्दस्य गौणत्वापातात् इत्याद्यतिप्रसङ्गादित्यर्थः । एवमवतारकरणेनैव पूर्वमुपाधिशब्दस्य साङ्केतिकत्वे उक्ते सति पुनरवयवार्थवत्वाद्यङ्गीकारेण शङ्काया एवानुदयात् क्वचित् इत्यादि मूलकारीयावयवार्थसापेक्षताङ्गीकारेण परिहारोऽसङ्गतः इति शङ्कानवकाश इति सूचितम् । सर्वोपाधौ पारिभाषिकत्वस्याक्षेपात् । अवयवार्थस्य विवक्षायाः प्रयोजनाभावेन अवयवार्थस्यासार्वत्रिकत्वेन च काव्यादौ इव शब्दार्थवर्णनमात्रस्यायुक्तत्वात् । दूषकताबीजस्य सम्भवेनोपाधिनोपपत्तेश्चेति सिद्धं कृत्वैव तुष्यतु दुर्जन इति न्यायेन क्वचित् अवयवार्थवति उपाधिशब्दमुख्यत्वं क्वचित् शून्ये तच्छब्दस्य गौणत्वं इति वास्तु । त्वदुदाहृताग्न्यादिशब्दवत् इत्याशयेन क्वचित् इत्यादि परिहारमूलप्रवृत्तेः । उक्तं च तर्कताण्डवे **गौणो वास्त्विति** । ननु पारिभाषिकत्वस्य प्रागुक्तस्य परित्याग एवेत्यभिप्रायात् । अत एवोत्तरमूले दूषकत्वानुपपत्तिशङ्का तत्परिहारादिकमिति ज्ञेयम् ।

**स०व्र०— अव्याप्यहेत्वर्थ इति** । अव्याप्यः योऽयं हेतुवाक्यार्थः, तस्य व्याप्यत्वभ्रमहेतुनेत्यर्थः । **किमनेनोक्तं भवतीति** । स्वनिष्ठधर्मासञ्जकत्वमुपाधित्वप्रयोजकमिति विषमव्याप्ते तदभावात् तद्व्याप्योपाधित्वं न सम्भवतीत्यभिप्रेतम्, किं वा तस्योपाधिपदप्रवृत्तिनिमित्तत्वादभावे कथमुपाधित्वमिति विकल्पार्थः । **स्वकपोलेति** । सङ्केतितत्वादेवेत्यर्थः । **अत एवेति** । उपाधिशब्दसम्बन्धस्य स्वकपोलकल्पिततत्वादेवेत्यर्थः । नन्वेवं चेत् 'स एवोपाधिदोषोऽपि' इत्यादौ भवतां कथं तत्र तत्रोपाधिशब्दप्रयोगः । रूढ्याद्यभावादित्यत आह **व्यवहारस्त्विति** । **गौण्येति** । साध्यव्यापकत्वादिरूपगुणयोगेनेत्यर्थः ।

**विठ्ठल०— जपादिः** कुसुमादिः । **इहाप्यव्याप्यहेत्वर्थेति** । उपाधेर्यदा समव्याप्तिर्भवेत् तदा तस्योपाधेर्वस्तुतो व्याप्यो यो हेतुः । वाक्यार्थो हिंसात्वादिस्तस्मिन् साध्यव्याप्यत्वभ्रमहेतुता स्यादित्यर्थः । समव्याप्त्यभावे स्वसंसर्गिणि हिंसात्वे व्याप्यत्वभ्रमाप्रसञ्जकत्वं न स्यादिति भावः । उपाधेः स्यान्न साध्येन समव्याप्तिर्न चेद्भवेदिति क्वचित्पाठः । तत्रैवं योजना साध्येनोपाधेः समव्याप्तिर्न भवेच्चेत् तदा व्याप्यहेत्वर्थव्याप्यत्वाभ्रमहेतुता न स्यादिति । **अदोषत्वेनेति** । उपाधेरिति शेषः । तथा च वस्तुतः साध्यव्याप्येऽपि साधने स्वगतव्याप्यताधायकत्वेन तद्द्वारा हेतौ व्याप्यताभ्रमसम्पादकतयोपाधेर्दोषत्वं वाच्यम् । समव्याप्त्यभावे स्वस्मिन्व्याप्यत्वस्याभावेन साधने व्याप्यतानाधायकत्वात्साधने व्याप्यताभ्रमस्येवानुपपत्तेर्नोपाधेर्दोषत्वमिति भावः । **अन्वर्थेति** । उपसमीपस्थे स्वनिष्ठव्याप्यत्वधर्ममादधातीत्यवयवार्थेत्यर्थः । **उपाधिशब्दसम्बन्धस्येति** । साध्यव्यापकः साधनाव्यापको यो धर्मः तस्मिन्नुपाधिसम्बन्धस्येत्यर्थः । तर्हि स एवोपाधिदोषोऽपीत्यादिव्यवहारस्य का गतिरित्यत आह **व्यवहारस्त्विति** । **क्वचिदिति** । समव्याप्तिस्थल इत्यर्थः ।





**चषकः— व्यवहाराः** विषमव्याप्तिकादौ उपाध्यादिशब्दव्यवहाराः । **परकृतेति** । नैयायिककृतेत्यर्थः ।

**॥ इति समव्याप्तस्यैवोपाधित्वमित्यत्र परोपन्यस्तं साधकं दूषयति ॥**
**॥ इति समपदस्य विषमव्याप्तिकव्यवच्छेदार्थकत्वासम्भवः ॥**

* * *

**॥ अथ समपदस्य प्रयोजनान्तरार्थत्वासम्भवः ॥**

१८७ **सु०— अत एव न द्वितीयोऽपि ।**

**परि०— अत एवेति** । प्रतिपक्षोन्नायकत्वसम्भवेन दूषणत्वाच्चेत्यादिग्रन्थेनानुमानदूषणत्वसिद्ध्यर्थं वा पक्षेतरत्वस्योपाधित्वनिवृत्त्यर्थं वा अन्वर्थोपाधिशब्दसम्पादनार्थं वेत्यादिप्रयोजनानां निरस्तत्वादेव प्रयोजनान्तरार्थमिति प्राग्विकल्पितद्वितीयपक्षोऽपि निरस्त इत्यर्थः ।

**यादु०— अत एवेति** । अन्वर्थोपाधिशब्दसम्पादनरूपप्रयोजनस्य निरस्तत्वादन्यस्य च प्रयोजनस्यानुपलम्भात् प्रयोजनान्तरार्थं समपदमिति द्वितीयोऽपि नेत्यर्थः ।

**शे०वा०— अत एवेति** । उपाधिशब्दस्यान्वर्थतासम्पादनरूपप्रयोजनस्य निरस्तत्वादन्यस्य च प्रयोजनस्यानुपलम्भात् प्रयोजनान्तरार्थं समपदमिति प्राग्विकल्पितद्वितीयोऽपि नेत्यर्थः ।

**वा०र०— प्राग्विकल्पितमिति** । समपदं किं विषमव्याप्तेत्यादिरूपदूषणोपक्रमे किं कल्पितेत्यर्थः । समव्याप्तोऽवयवार्थस्य सत्त्वेनान्यत्र गौणो वास्तु इत्येतत् तर्कताण्डवानुसारेण इदम् ।

**स०व्र०— अत एव न द्वितीयोऽपीति** । प्रयोजनान्तरार्थं समपदमिति द्वितीयोऽपि न । प्रयोजनान्तरस्य प्रवृत्तिनिमित्तादेर्दूषितत्वादेवेत्यर्थः ।

**विठ्ठल०— अत एव न द्वितीयोऽपीति** । अन्वर्थोपाधिशब्दसम्पादनरूपप्रयोजनस्य निरस्तत्वात् प्रयोजनान्तरानुपलम्भादप्रयोजनार्थं समपदमिति द्वितीयोऽपि नेत्यर्थः ।

**॥ इति समपदस्य प्रयोजनान्तरार्थत्वासम्भवः ॥**

* * *





**॥ अथ समपदस्य विषमव्याप्तिकव्यवच्छेदार्थकत्वासम्भवे उक्तं प्रतिपक्षोन्नायकत्वेनदूषणत्वं आक्षिप्य समादधते ॥**

**१८८ सु०— ननु च विषमव्याप्तिकस्य प्रतिपक्षोन्नायकत्वं न सम्भवति, क्वचित्पक्षेतरविपर्ययस्यासाधारणत्वादिति । मैवम् । असाधारणत्वस्य दूषणत्वासम्मतेः, सम्मतौ वा तत्रोपाधित्वाभावस्य व्युत्पादनात् । यत्रोपाधिः पक्षैकदेशाद्व्यावर्तते तत्र कथं प्रतिपक्षः, भागासिद्धिप्रसङ्गात् । न चासौ नोपाधिः, पक्षैकदेशाद्व्यावृत्त्यापि साधनाव्यापकत्वसम्भवात् । न चायं समव्याप्तिपक्षेऽस्ति दोषः, उपाधिमत्येकदेशे साध्यसद्भावनियमेन तं विहायैकदेशान्तरस्यैव पक्षीकरणौचित्यादिति ।**

**उच्यते । अस्माभिरप्युपाधिव्यावृत्तिमा(नेवैक)नेकदेशः पक्षीक्रियते । एकदेशान्तरेऽपि यदि साध्यसम्मतिस्तदा तस्यापक्षीकरणमेव । असम्मतौ तु तत्र दोषान्तरमेव भविष्यतीति किमनुपपन्नम् ।**

**ननु शङ्कितोपाधौ कथं प्रतिपक्षः, सन्दिग्धासिद्धिप्रसङ्गेनासमबलत्वादिति चेन्न; पाक्षिकसिद्ध्यादिना सत्प्रतिपक्षताफलस्य संशयस्यानिवारणात् । संशयानङ्गत्वमेवासमबलत्वमभिप्रेतम् ।**

**परि०— क्वचिदिति** । (तेजः अनुष्णं) वह्निरनुष्णः पदार्थत्वादित्यादौ बाधोन्नीतपक्षेतरविपर्ययस्य वह्नित्वस्य वह्निरुष्णो वह्नित्वात् इत्यस्य सति सपक्षे तेजोन्तरेऽ(तत्रा)सत्त्वेनासाधारणत्वादित्यर्थः । **असम्मतेरिति** । अनुकूलतर्कसनाथत्वादिति भावः । पर्वतेतरत्वाद्युपाधिविपर्ययाभिप्रायेणाह **सम्मतौ वेति** । नेति पक्षे तत एवानुपाधित्वमिति ग्रन्थेनानुमानव्याप्त्यादिग्राहकेत्यादिग्रन्थेन चोपाधित्वाभावव्युत्पादनादित्यर्थः । **यत्रेति** । क्षितिद्व्यणुके सकर्तृकं कार्यत्वादित्यत्रानणुत्वोपाधिरित्यर्थः । **अपक्षीकरणमेवेति** । तस्यापि पक्षत्वे बाधापत्तेरिति भावः । **दोषान्तरमिति** । शास्त्रयोनिसूत्रानुभाष्याद्युक्तदिशेति भावः । अष्टमो मित्रागर्भस्थः श्यामः मित्रातनयत्वात् प्राचीनपुत्रवदित्यत्र सन्दिग्धत्वमपि शाकपाकजत्वमुपाधिरिष्यते । स न स्यादिति बाधकमाशङ्कते **नन्विति** । असमबलस्य कथं प्रतिपक्षतेत्यत आह **संशयेति** । विवृतमेतदुपाधेः प्रतिपक्षोन्नायकत्वमुपाधेर्दूषकताबीजोक्तिवादे तर्कताण्डवे ।





**गु०दी०— पाक्षिकसिद्ध्यादिना सत्प्रतिपक्षताफलस्यानिवारणात्** इत्युपलक्षणम् । नेदं साध्यवत्तया निर्णेतुं योग्यं सन्दिग्धतद्व्यापकधर्मत्वात् यथा निषिद्धत्वसंशयवान्न पापसाधनत्वेन निर्णेय इति । मेघनैल्यसन्देहे यथा वृष्टिर्न निर्णेय इति वेति साक्षात्प्रतिपक्षसम्भवाच्चेत्यपि द्रष्टव्यम् ।

**यादु०— क्वचित्पक्षेतरेति** । बाधोन्नीतपक्षेतरविपर्ययस्येत्यर्थः । **दूषणत्वासम्मतेरिति** । एकत्रानुकूलतर्कावतारदशायामिति शेषः । नन्वनुकूलतर्कानवतारकालेऽसाधारण्यं दोष एवेत्यत आह **सम्मतौ वेति** । **तत्रेति** । अतेजस्त्वादावित्यर्थः । उपाधिव्यतिरेकरूपहेतावनुकूलतर्काभावे पक्षे साध्याभावस्यानिश्चयेन बाधानुन्नीतपक्षेतरत्वमेव तस्यापीति नोपाधित्वमिति व्युत्पाद्यत इत्यर्थः । केचित्तु बाधानुन्नीतपक्षेतरस्थलेऽसाधारण्यस्य दोषत्वसम्मतावपीत्यर्थ इत्याहुः । समव्याप्तस्यौपाधित्वमित्यत्र नियामकान्तरं शङ्कते **यत्रेति** । क्षितिद्व्यणुकादिपक्षकेश्वराद्यनुमाने पक्षैकदेशवृत्त्यनणुत्वादेरुपाधित्वं कथमित्यर्थः । **पक्षैकदेशादिति** । द्व्यणुकादिरूपादित्यर्थः । **साध्यसद्भावनियमेनेति** । उपाधेः साध्यव्याप्यत्वादिति भावः । **एकदेशान्तरस्येति** । द्व्यणुकादिरूपस्येत्यर्थः । तावताऽपीश्वरानुमानोद्देश्यधीविरोधित्वेन प्रतिपक्षोपपत्तेरिति भावः । **अपक्षीकरणमेवेति** । सिद्धसाधनतापत्त्या स्थापनानुमानेऽपि तस्यापक्षीकरणमित्यर्थः । **दोषान्तरमिति** । शरीरिजन्यत्वादिकमुपाध्यन्तरं भविष्यतीत्यर्थः । **शङ्कितोपाधाविति** । साधनाव्यापकतादिसन्देहेन सन्दिग्धोपाधौ शाकपाकजत्वादावित्यर्थः । सन्दिग्धासिद्ध्यादीत्यत्रादिपदेन व्याप्तिसन्देहो ग्राह्यः । यत्र साध्यव्यापकतासन्देहेनोपाधिसन्देहस्तत्र तद्व्यतिरेकरूपहेतौ व्याप्तिनिश्चयासम्भवात् । ननु सन्दिग्धासिद्ध्यादिनाऽसमबलस्य कथं सत्प्रतिपक्षत्वमित्यत आह **संशयानङ्गत्वमिति** । तथा च संशयाङ्गत्वमेव समबलत्वमिति भावः ।

**वं०प०— व्युत्पादनादिति** । स्वनिष्ठधर्मासञ्जकत्वमुपाधिशब्दप्रवृत्तिनिमित्तमिति पररीत्या अङ्गीकृत्य विषमव्याप्ते पक्षेतरत्वे समव्याप्त्यभावेनोपाधित्वाभावस्य व्युत्पादनादित्यर्थ इत्याहुः । वस्तुतस्तु पक्षे साध्याभावो निश्चितो न वेत्युक्तरीत्येत्यर्थः । **अस्माभिरपीति** । विषमव्याप्तस्योपाधित्वं वदद्भिरपीत्यर्थः । **एकदेश इति** । पृथिवीद्व्यणुकयोः कार्यत्वेन सकर्तृकत्वे साध्येऽनणुत्वरूपोपाधिप्राप्तौ तेन सत्प्रतिपक्षोन्नयने भागासिद्धिप्राप्तावुपाधिव्यावृत्तिमन्तं पृथिवीरूपैकदेशं विहाय द्व्यणुकमेव पक्षीकृत्य विकर्तृकत्वं साध्यत इत्यर्थः । **एकदेशान्तरे** पृथिव्याम् । साध्यसम्मतिर्विकर्तृकत्वरूपं सत्प्रतिपक्षानुमानसाध्यं यदि परस्य सम्मतं तर्ह्यस्माकं सिद्धसाधनतापत्त्या तस्यापक्षीकरणम् । तत्र विकर्तृकत्वरूपसाध्यासम्मतौ सकर्तृकत्वमेव चेत् साध्यते तर्हि शरीरिजन्यत्वमनणुत्वभिन्नमेवोपाधिर्भविष्यतीत्यर्थः । **शङ्कितोपाधौ** स श्यामो मित्रातनयत्वादित्यत्र शाकपाकजत्वरूपे । **सन्दिग्धासिद्धीति** । सत्प्रतिपक्षानुमान इत्यर्थः ।

**कं०रा०— क्वचिदिति** । वह्निरनुष्णः कृतकत्वादित्यादौ वह्नीतरत्वव्यतिरेकेऽस्यानुष्णत्वव्यतिरेकसाधने वह्नीतरत्वव्यतिरेकस्यानुष्णत्वव्यतिरेकवत् स्वैरालोकादिव्यावृत्तत्वेनासाधारणत्वादित्यर्थः । विषमव्याप्तिकस्य





व्यापकत्वस्येव साधनव्यापकत्वस्यापि सत्त्वेन तदभावेन साध्याभावस्येव साधनाभावस्यापि सिद्ध्यापत्त्या तत्र हेतोरविषयवृत्तित्वासम्भवेन तत्रोपाध्यभावे साध्यावच्छेदकावच्छिन्नत्वं न विवक्षणीयमिति नायं प्रकारः सार्वत्रिकः । प्राचीनस्तु सार्वत्रिक इति स एवात्र विवक्षित इति द्रष्टव्यम् ।

**व्यतिरेकेति** । व्यतिरेकव्याप्तिर्न साधनाङ्गमन्वयव्याप्तिसाधने चान्वयव्याप्तिरेव सेत्युत्तरमुक्तमेवेत्यर्थः । नन्वेवं धूमानुमानस्यापि सोपाधिकत्वं प्रसज्यते । यत्किञ्चित्साध्यव्यापकत्वेन यत्किञ्चित्साधनाव्यापकत्वेन आर्द्रेन्धनसंयोगस्य तत्रोपाधित्वसम्भवादित्यतः साध्यसाधनपदाभ्यां तदनुमानीयसाध्यसाधनयोर्वह्निधूमयोरेवाभिधानेन आर्द्रेन्धनसंयोगस्य धूमवह्निरूपसाध्यसाधनव्यापकत्वाव्यापकत्वसद्भावेऽपि वह्निधूमरूपसाध्यसाधनव्यापकत्वाव्यापकत्वयोरभावेन न तत्र तस्योपाधित्वमित्याह **साध्यसाधनपदाभ्यामिति** । एवं तर्ह्यननुगमः स्यादित्यत आह **यो यत्साध्येति** । सर्वत्र नाम्नां बुद्धिस्थवाचकत्वेऽपि सार्वत्रिकव्यवहारौपयिकत्वस्यानुभवसिद्धत्वान्नाननुगम इत्यवधेयम् ।

**वा०र०**— अदर्शनं असिद्धमित्याह **शब्द इति** मूलम् । हेतुशरीरं दर्शयन् व्यभिचारस्थलादिविवेकेनाह **प्रत्यक्षत्वे सतीति** । तर्कताण्डवे यावद्द्रव्यभावित्वात् इति हेतुकथनम् । प्रकृत्यधिकरणीय सत्यत्वं गगनादेश्च इत्येतद्भाष्यमूलेऽपि किञ्चित् । **प्रत्यक्षस्पर्शाश्रयत्वमित्यादि** । इदं चानुमानं .....साध्यतावच्छेदकतयोपात्तविशेषणस्योपाध्यभावहेतुकानुमानीयसाध्यकोटौ निवेशाङ्गीकारे साध्यगतविशेषणस्य व्यभिचारापरिहारार्थत्वमाश्रयणीयं भवतीत्यपरितोषं मन्यमानं प्रति तद्विशेषणस्योक्तसाध्ये प्रवेशमनाश्रित्यैव हेतुशरीरप्रवेशमाश्रित्य समाधानान्तरमाह **क्वचित् साध्यतावच्छेदकेति** मूलम् । साध्यभूतस्पार्शनत्वादेः अवच्छेदकं द्रव्यत्वादि तदवच्छिन्नस्य चाक्षुषत्वादिरूपोपाध्यभावस्य केवलसाध्याभावे क्वचिद्धेतुत्वादित्यर्थः । इत्येतावान् ग्रन्थः । क्वचित् इत्यनन्तरं अयं भावः । वायुः स्पार्शनः इत्यादिटीकाग्रन्थात् पूर्वपत्रान्तरेऽस्ति । तदनुसारेणापि लेख्यः । ननु उपाध्यभावेन स्वसाध्ये साधनीये साध्यावच्छेदकविशेषणस्य कथमुपाध्यभावविशेषणताप्राप्तिरिति चेत् न । अवच्छिन्नस्पर्शनत्वादिसाध्यव्यापकचाक्षुषत्वाद्युपाधिस्थले तदवच्छेदकविशिष्टं तदुपाध्यभावं हेतुत्वेन पर्यवसायितुं तद्विशेषणविशिष्टो यः चाक्षुषत्वाद्यभावरूप एवोपाधिः शुद्धसाध्येऽङ्गीक्रियते । तस्य च वक्ष्यमाणरीत्या साध्यव्यापकत्वादिकं यथाश्रुतमेव सम्भवतीति युक्तमुपाधिलक्षणम् । तादृशविशिष्टोपाधेरभावश्च तत्प्रतियोगिभूतसाध्यावच्छेदकविशिष्टश्चाक्षुषत्वाद्यभाव एव । तेन च शुद्धसाध्याभावसाधने क्रियमाणे साध्ये विशेषणप्रसक्त्यभावात् न साध्यगतविशेषणस्य व्यभिचारवारणकत्वाश्रयणप्रसङ्गः । उक्तद्रव्यत्वावच्छिन्नचाक्षुषत्वाभावस्याभावरूपो य उपाधिः तस्य शुद्धसाध्ये प्राप्तस्याभावः साध्यतावच्छेदकावच्छिन्नचाक्षुषत्वाभावरूपः प्रतियोग्येव पर्यवस्यतीति सिद्धं कृत्वा साध्यतावच्छेदकावच्छिन्नस्योपाध्यभावस्य हेतुत्वादिति मूले उक्तमिति न दोषः इति दर्शयति **अयं भाव इत्यादि** । केचित्तु इत्यादि तर्कताण्डवानुसारेणायं ग्रन्थः । इत्यादाविति पाठः । अभावेन सद्भावादिति द्वयं अगतत्वे हेतुः । साध्यतावच्छेदकतया उपात्तविशेषणस्य तत्साधकानुमानीयोपाधेः योऽभावः तद्विशेषणत्वमाश्रित्य विशिष्टस्य तदभावस्य शुद्धसाध्ये उपाधित्वं तद्गत एव





तदभावेन शुद्धसाध्याभावस्यापिधानसम्भवश्चेत्यत्रापि युक्तसम्मतिमाह **अत एवेति** । सम्बन्धविशेषणे साध्ये । यदवच्छिन्ने साध्येऽयमुपाधिः । लगतिः तदवच्छेदकभूतविशेषणयुक्तो यः एतस्योपाधेः अभावः तस्याभूदभावकेवले साध्ये उपाधिरिति श्लोकार्थः । एवम्भूतस्य उपाधित्वे तदभावेन शुद्धसाध्याभावोऽनुमानमिति सिद्धत्वात् तदंशोऽपि नावश्यकिः सम्मतिः । शिष्टैरेतद् द्व्यणुकविवरणं आनन्दमयनयोदाहृत एतद्वाक्यव्याख्यानावसरे अस्मदुक्तप्रकारोऽस्ति । तदनुसारेण ज्ञेयम् । लालगीता इत्यादि पाठान्तरं तर्कताण्डवेऽस्ति । तथापि गीताभाष्यटीकायां शास्त्रे तु यः उपाधिर्लगतीति पाठस्य धृतत्वात् तस्यैव पुरस्कारोऽत्रेति न दोषः । तर्कताण्डवे तु केचित्तु इत्युदाहृतपक्षस्य यदि वायुः स्पार्शनः इत्यनुमाने प्रथमत एव उक्तविशिष्टोपाधिदाने तात्पर्यम् । तदा य उपाधिरिति तत्रोदाहृता सम्मतिः । शुद्धसाध्ये विशिष्टोपाधिः इत्येतावन्मात्रे । न तु सर्वांशे । इह तु साध्यतावच्छेदकेति मूले उक्तेः अवच्छिन्ने साध्ये च उपाधिः तत्पूर्वक एव शुद्धसाध्ये उपाधिरभिप्रेत इति ज्ञायते । यदि च साध्यतावच्छेदकपदं वस्तुतः साध्यस्यावच्छेदकतया कुत्रचित् प्रयुक्तः इत्येवावच्छेदकत्वमात्राभिप्रायं **मूले** इति मतं तदा तर्कताण्डवे एकार्थतेत्यादि विवेचनीयम् । ननु यद्येवं विशिष्टोपाधिः शुद्धसाध्ये एव **प्राप्नोति** । न हि शास्त्रे अवच्छिन्नसाध्योपाधिदानं व्यर्थं स्यात् । तेनोपाधिना स्वाव्यतिरेकेण शुद्धसाध्यव्यतिरेकासाधनात् इत्युक्तदोषादित्यत आह **शास्त्रे त्विति** । अवच्छिन्नसाध्यविवक्षया उपाधिदानम् । तेनाक्षिप्य शुद्धसाध्यव्यापकोपाध्यन्तरे पर्यवसन्नमित्यङ्गीकारे वृथा आयासः । प्रथमत एव विशिष्टोपाधिराश्रयणासम्भवात् इत्यत उक्तम् । **व्यतिरेकव्यास्यादिनेति** । शास्त्रे प्रयोजनानन्तरार्थतया तथा गौरवस्याश्रितत्वात् तद्वत्प्रकृतेऽपि गौरवं न दोषायेति भावः । न च व्यभिचाराभावप्रदर्शनरूपप्रयोजनसम्भवात् तत्र गौरवाश्रयणोपपत्तावपि प्रकृते प्रयोजनाभावात् न तदाश्रयणं युक्तमिति वाच्यम् । शुद्धसाध्यव्यापकत्वानुपपत्तिप्रतिसन्धानानन्तरमेवावच्छेदकजिज्ञासोत्पत्त्या तदनन्तरोपस्थितसाध्यतावच्छेदकत्वस्य शुद्धसाध्यव्यतिरेकसिद्धप्रलोभेनोपाधिशरीरगतत्वादि आश्रयस्य क्रियमाणतया उत्तरोपाध्युपस्थापकतानये पूर्वोपाधिदानस्यावश्यकतया सप्रयोजनत्वात् इत्याशयात् । न कश्चिद्दोषः इत्यनन्तरं तथा च साध्यतावच्छेदकावच्छिन्नस्य उपाध्यभावस्य शुद्धसाध्याभावे हेतुत्वमुपपन्नं इतीति वाच्यम् । पत्रान्तरगतं लेख्यम् । इत्ययं भाव इति सम्बन्धः । तर्कताण्डवानुसारेणाह **अत्रेति** । **अस्य प्रकारस्य इति** । उक्तरीत्या विशिष्टोपाधेः शुद्धसाध्यव्यापकतासम्भवः । तत एव तदभावेन शुद्धसाध्याभावसाधनोपपत्तिरिति प्रकारस्येत्यर्थः । **स्पार्शन इत्यादाविति** । अनुद्भूतरूपानधिकरणत्वे सत्युपलभ्यमानस्पर्शाधिकरणत्वात् इत्यनुमाने द्रव्यत्वावच्छिन्नसाध्यव्यापकचाक्षुषत्वोपाधावित्यर्थः । **असम्भवेनेति** । उक्तप्रकारस्येति वर्तते । साधनाव्यापकत्वमेवोपपादयति **साधनवतीति** । स्पर्शत्वरूपसाध्यवतीत्यर्थः । चाक्षुषत्वाभावरूपविशेष्यसत्त्वेऽपीति पूरणीयम् । ब्रवबीजां क्रीत स्वोपाधित्वस्येति व्यधिकरणषष्ठ्यौ । असङ्गतत्वात् इत्यनन्तरं ततश्च तत्रोक्तोपाधिव्यावृत्तेः शुद्धसाध्याभावे हेतुत्वस्यापि अयोग इति वाच्यम् । पत्रान्तरे लेख्यम् । तस्मादित्युपसंहारे विशिष्टार्थप्रतीतेः । एवं पूर्वत्रापि लेखने तस्मादित्युपसंहारे विशिष्टार्थप्रतीतिरेव मूलं ज्ञेयम् । क्वचित्पदाभिप्रायवर्णनम् । उपसंहरन् पूर्वप्रकारस्य तु न क्वाचित्कत्वमित्यपि दर्शयति **तस्मादिति** । अस्य प्रकारस्येत्यस्य पूर्वोक्त एवार्थः । **क्वचिदिति** ।





अनुद्भूतरूपेत्यादिहेतुकानुमानीयोक्तावुपाधावित्यर्थः । क्वचिदिति द्वितीयं स्पर्शत्वहेतुकानुमानीयोक्तोपाधाविति व्याख्येयम् । असत्त्वादित्यनन्तरं असार्वत्रिकत्वमिति शेषः । पूर्वप्रकारस्य सार्वत्रिकत्वादिति सम्बन्धः । सार्वत्रिकत्वादिति ध्येयम् इत्यनन्तरमेवायमेवात्र विवक्षित इति भावः । वक्ष्यति चोत्तरयोजनान्ते **सार्वत्रिक इति** । स एवात्र विवक्षित इति ज्ञेयम् । एवं क्वचिदित्यस्य हेतुत्वादित्यत्र सम्बन्धमङ्गीकृत्य उक्तहेतुद्वयानुसारेण स्पार्शनत्वसाध्ये हेतुत्वसम्भवासम्भवौ । अयं त्वित्यादि तर्कताण्डवानुसारेण दर्शितौ । तत्पक्षे उपाध्यभावस्य साध्यतावच्छेदकावच्छिन्नत्वं नियतम् । साध्यताभावहेतुत्वमनियतं इति प्रतीयते । न च तदस्ति । तत्र धर्मेत्युत्तरत्रोक्तप्रकारेण साध्याभावसाधकोपाध्यभावे साध्यतावच्छेदकावच्छिन्नत्वस्य क्वचिदभावात् इत्यपरितोषं मनसि निधाय क्वचिदित्यस्य साध्यतावच्छेदकावच्छिन्नविशेषणत्वमाश्रित्य साध्यतावच्छेदकेन क्वचिदवच्छिन्नस्येति योजनां दर्शयन् तत्पक्षे अभिप्रेतार्थं विशदयति **यद्वेति** । अत्र यदवच्छेदकं क्वचित् अवच्छिन्नस्येति पाठः । क्वचित् हेतुत्वादिति पाठेऽपि क्वचिदिति पूर्वत्रान्वितम् । उत्तरवाक्ये स्पष्टत्वादिति ज्ञेयम् । **उपाध्यभाव इति** । प्रतिपक्षानुमाने हेतुभूतोपाध्यभावः इत्यर्थः । उपाधिशरीरान्तर्गतोपाध्यभावे तदवच्छिन्नत्वस्य पृथगुत्तरत्र प्रतिपादनात् । **अवच्छिन्नोपाधीति** । अवच्छिन्नो यः उपाध्यभावः तदभावस्य तदभावरूपोपाधेरिति यावत् । स्थापनानुमानम् । वायुः स्पार्शनः इत्यादिरूपं उपाध्यभावेन साध्यतावच्छेदकावच्छिन्नोपाध्यभावरूपो यः उपाधिः तदभावेन । **साध्याभावे** स्थापनानुमानीयसाध्यस्याभावे । **उपाध्यभावे** साध्यावच्छेदकधर्मेत्यर्थः । एवमुत्तरत्रापि । **साध्यसमानव्यापकत्वेति** । यथाक्रमं सम्बन्धः । तत्र साध्यव्यापकत्वसत्त्वेऽपि द्वित्वावच्छिन्नोभयाभावाभिप्रायेणोभयग्रहणम् । वक्ष्यति च । साध्यव्यापकत्ववत् इत्यादीति ज्ञेयम् । उपाध्यभावेनेत्यादिकं पूर्ववत् व्याख्येयम् । **साधनाभावस्यापीति** । व्यापकनिवृत्तौ व्याप्यनिवृत्तिन्यायस्य तत्रापि तौल्यादिति भावः । **हेतोरविषयेति** । स्थापनानुमानहेतोरित्यर्थः । यदि उक्तोपाधेः साधनव्यापकता स्यात् तदा उक्तोपाधिना पक्षात् साध्ये निवर्तिते तत्र वर्तमानं साधनं स्वविषयशून्ये वर्तत इति अविषयवृत्तिर्भवेत् । साध्यव्यावृत्तिसम्पादनमात्रवैय्यर्थ्यात् । न चात्रोपाधेः साधनाव्यापकतास्ति । किन्तु साधनव्यापकतया पक्षे साध्याभावस्येव साधनाभावस्यापि प्राप्तौ साधनस्वविषयवत्येवास्तीति प्राप्त्या नोपाधिना साधनस्य विषयवृत्तित्वसम्पादनमिति भावः । मास्तु उपाधेः पूर्वहेतौ अविषयवृत्तित्वसम्पादकत्वमपीत्यत आह **तत्सम्पादकस्यैवेति** । प्रतिपक्षस्य दूषकताबीजं पूर्वहेतौ अविषयवृत्तित्वसम्पादकत्वमेवेति भावः । यत्र साध्यतावच्छेदकेत्युक्तं उपाध्यभावे विशेषणादानं उदाहरणेन दर्शयति **तथा च वायुरिति** । अचाक्षुषत्वाभावस्येत्यस्य चाक्षुषत्वरूपोपाध्यभावस्येत्यर्थः । **सत्त्वेनेति** । तथा च उपाधिना पक्षे साधनव्यावृत्तिः न प्राप्नोतीति भावः । **प्रतिपक्षेति** । उपाध्यभावरूपप्रतिपक्षहेतौ पूर्वहेतोः यत् अविषयवृत्तित्वं तत्सम्पादकत्वसद्भावेनेत्यर्थः । उक्तरीत्या साधनवति साध्यत्वे आनीते स्वविषयशून्ये वृत्तिता साधनस्य प्राप्नोतीति तत्सम्पादकत्वेन दूषकताबीजसम्भवात् युक्तं तस्य प्रतिपक्षत्वम् । साध्यमात्रस्य पक्षात् व्यावृत्तिमात्रकरणेन उभयव्यावृत्तीकरणस्पर्शत्वहेतुकानुमानीयोपाध्यभावस्थल इवाभावेन साध्याभावसाधनोपपत्तावपि इत्यर्थः । **तत्र हेतोरिति** । तथाविध उपाधिस्थले उपाध्यभावेन पक्षे साधनस्यापि व्यावर्तमाने सति स्वविषयशून्ये पूर्वहेतोः





वृत्तिरूपप्रतिपक्षफलस्य प्राप्त्या तत्सम्पादकत्वरूपदूषकताबीजाभावेन साध्याभावसाधनमात्रस्य वैय्यर्थ्येन च प्रतिपक्षस्य दूषणत्वाप्राप्तेः उपाध्यभावेन साध्याभावसाधनानुपपत्तेः तथाविधोपाध्यभावे विशेषणदानस्य व्यर्थत्वादित्याशयः । यदवच्छिन्ने साध्ये यः उपाधिः तद्व्यावृत्तेः इत्यादि पूर्वयोजनोक्तरीत्येति भावः । यत् पक्षधर्मतादिरूप इत्याद्यन्यथाख्यातिस्तु वाक्यार्थविनोदे निराकृतास्ति । अधिकमपि धर्मत्वरूपादौ व्यभिचारः । न हि एतत् उपाधिना प्रतिपक्षस्येव व्यभिचारस्यापि उन्नयनं सम्मतमिति इत्यादि शोध्यमस्ति ।

**स०व्र०— न चेति** । साध्यगतविशेषणानां व्यभिचारावारकत्वादिति भावः । **स्पर्शवद्विशेषगुण इति** । विशेषगुणत्वाभावसाधने च संयोगे व्यभिचारः । तस्य प्रत्यक्षत्वे सति अकारणगुणपूर्वकत्वेऽपि स्पर्शवद्गुणत्वेन तदभावाभावादतो विशेषपदम् । तथा च स्पर्शवद्गुणत्वेऽपि स्पर्शवद्विशेषगुणत्वाभावसद्भावान्न व्यभिचार इति भावः । आदिपदेन वेदः सजातीयोच्चारणानपेक्षोच्चरितजातीयः वाक्यत्वादित्यत्र शब्दमूलकशब्दे व्यभिचारवारणाय साध्ये सजातीयेति विशेषणदानात् तत्सङ्ग्रहः । यथा प्रत्यक्षस्पर्शाश्रयत्वं प्रत्यक्षत्वव्यभिचारि द्रव्यत्वाव्यभिचारित्वे सति द्रव्यप्रत्यक्षत्वव्यापकव्यभिचारित्वान्महत्त्ववदित्यस्य(ापि) सङ्ग्रहः । तत्रापि साध्ये हेतौ च प्रत्यक्षपदं बहिरिन्द्रियप्रत्यक्षपरम् । अन्यथा सुखादौ व्यभिचारापत्तेः इति परैर्व्याख्यातत्वादिति द्रष्टव्यम् । **क्वचित्साध्यावच्छेदकावच्छिन्नस्येति** । अयं भावः । वायुः स्पार्शनः अनुद्भूतरूपानधिकरणत्वे सति उपलभ्यमानस्पर्शाधिकरणत्वादित्यादौ स्पार्शनत्वादिरूपशुद्धसाध्य एव द्रव्यत्वादिविशिष्टस्य चाक्षुषत्वाद्यभावस्याभाव उपाधिः । अयं च विशिष्टाभावरूप उपाधिः स्पार्शनत्वादिरूपसाध्यवति स्पर्शादौ चाक्षुषत्वाभावरूपविशेष्यवति तदभावप्रयुक्तो न सम्भवतीति द्रव्यत्वरूपविशेषणस्याभावेन; तत्प्रयुक्तविशिष्टाभावानुगत इति शुद्धसाध्यव्यापकः । वायौ तु (द्रव्यत्वरूपविशेषणस्य) चाक्षुषत्वाभावरूपविशेष्यवति तदभावप्रयुक्तो न सम्भवतीति द्रव्यत्वरूपविशेषणस्याभावेन, घटादौ तु द्रव्यत्वसद्भावेन विशेषणाभावप्रयुक्तविशिष्टाभावासम्भवेऽपि तस्य चाक्षुषत्वेन चाक्षुषत्वाभावरूपविशेषस्यासत्त्वेन तदभावलक्षणोपाधेः अनुद्भूतरूपानधिकरणत्वे सति उपलभ्यमानस्पर्शाधिकरणत्वरूपसाधनवति पक्षे अभावाद्भवति साधनाव्यापकः । अत एवोक्तम् 'य उपाधिर्लगति साध्ये सम्बन्धविशेषणे । तद्विशेषणयुक्तैतदभावाभूस्तु केवले ।' साध्ये, उपाधिर्भवति । **तद्विशेषणयुक्तैतदभावः इति** । तस्य साध्यस्य यद्विशेषणं, तेन युक्तः स च एषः । एतच्छब्देनोपाधिरभिधीयते । तस्याभावः, तस्य भूः सत्ता अभूः अभाव इत्यर्थः । शास्त्रे तु व्यतिरेकव्याप्त्यादिना अन्वयव्याप्त्यादिकमिवावच्छिन्नसाध्यव्यापकोपाधिनोक्तशुद्धसाध्यव्यापकोपाधिराक्षिप्यत इति न कश्चिद्दोषः ।

अत्र क्वचिदित्युक्तिस्तु अस्य प्रकारस्योक्तरीत्या वायुः स्पार्शनः अनुद्भूतरूपानधिकरणत्वे सति उपलभ्यमानस्पर्शाधिकरणत्वादित्यादौ सम्भवेऽपि वायुः स्पार्शनः स्पर्शत्वादित्यसिद्धिसङ्कीर्णे द्रव्यत्वावच्छिन्नसाध्यव्यापके चाक्षुषत्वोपाधौ असम्भवेनासार्वत्रिकत्वाभिप्रायात् तत्र द्रव्यत्वावच्छिन्नचाक्षुषत्वाभावाभावरूपोपाधौ उक्तरीत्या स्पार्शनत्वरूपसाध्यव्यापकत्वेऽपि स्पर्शत्वरूपसाधनाव्यापकत्वस्याभावात् । साधनवति स्पार्शनद्रव्यत्वाभावेन द्रव्यत्वविशिष्टचाक्षुषत्वाभावाभावेनोपाधेः साधनव्यापकत्वात् । न चास्य उपाधि-

अनुद्भूतरूपेत्यादिहेतुकानुमानीयोक्तावुपाधावित्यर्थः । क्वचिदिति द्वितीयं स्पर्शत्वहेतुकानुमानीयोक्तोपाधाविति व्याख्येयम् । असत्त्वादित्यनन्तरं असार्वत्रिकत्वमिति शेषः । पूर्वप्रकारस्य सार्वत्रिकत्वादिति सम्बन्धः । सार्वत्रिकत्वादिति ध्येयम् इत्यनन्तरमेवायमेवात्र विवक्षित इति भावः । वक्ष्यति चोत्तरयोजनान्ते **सार्वत्रिक इति** । स एवात्र विवक्षित इति ज्ञेयम् । एवं क्वचिदित्यस्य हेतुत्वादित्यत्र सम्बन्धमङ्गीकृत्य उक्तहेतुद्वयानुसारेण स्पार्शनत्वसाध्ये हेतुत्वसम्भवासम्भवौ । अयं त्वित्यादि तर्कताण्डवानुसारेण दर्शितौ । तत्पक्षे उपाध्यभावस्य साध्यतावच्छेदकावच्छिन्नत्वं नियतम् । साध्यताभावहेतुत्वमनियतं इति प्रतीयते । न च तदस्ति । तत्र धर्मेत्युत्तरत्रोक्तप्रकारेण साध्याभावसाधकोपाध्यभावे साध्यतावच्छेदकावच्छिन्नत्वस्य क्वचिदभावात् इत्यपरितोषं मनसि निधाय क्वचिदित्यस्य साध्यतावच्छेदकावच्छिन्नविशेषणत्वमाश्रित्य साध्यतावच्छेदकेन क्वचिदवच्छिन्नस्येति योजनां दर्शयन् तत्पक्षे अभिप्रेतार्थं विशदयति **यद्वेति** । अत्र यदवच्छेदकं क्वचित् अवच्छिन्नस्येति पाठः । क्वचित् हेतुत्वादिति पाठेऽपि क्वचिदिति पूर्वत्रान्वितम् । उत्तरवाक्ये स्पष्टत्वादिति ज्ञेयम् । **उपाध्यभाव इति** । प्रतिपक्षानुमाने हेतुभूतोपाध्यभावः इत्यर्थः । उपाधिशरीरान्तर्गतोपाध्यभावे तदवच्छिन्नत्वस्य पृथगुत्तरत्र प्रतिपादनात् । **अवच्छिन्नोपाधीति** । अवच्छिन्नो यः उपाध्यभावः तदभावस्य तदभावरूपोपाधेरिति यावत् । स्थापनानुमानम् । वायुः स्पार्शनः इत्यादिरूपं उपाध्यभावेन साध्यतावच्छेदकावच्छिन्नोपाध्यभावरूपो यः उपाधिः तदभावेन । **साध्याभावे** स्थापनानुमानीयसाध्यस्याभावे । **उपाध्यभावे** साध्यावच्छेदकधर्मेत्यर्थः । एवमुत्तरत्रापि । **साध्यसमानव्यापकत्वेति** । यथाक्रमं सम्बन्धः । तत्र साध्यव्यापकत्वसत्त्वेऽपि द्वित्वावच्छिन्नोभयाभावाभिप्रायेणोभयग्रहणम् । वक्ष्यति च । साध्यव्यापकत्ववत् इत्यादीति ज्ञेयम् । उपाध्यभावेनेत्यादिकं पूर्ववत् व्याख्येयम् । **साधनाभावस्यापीति** । व्यापकनिवृत्तौ व्याप्यनिवृत्तिन्यायस्य तत्रापि तौल्यादिति भावः । **हेतोरविषयेति** । स्थापनानुमानहेतोरित्यर्थः । यदि उक्तोपाधेः साधनव्यापकता स्यात् तदा उक्तोपाधिना पक्षात् साध्ये निवर्तिते तत्र वर्तमानं साधनं स्वविषयशून्ये वर्तत इति अविषयवृत्तिर्भवेत् । साध्यव्यावृत्तिसम्पादनमात्रवैयर्थ्यात् । न चात्रोपाधेः साधनाव्यापकतास्ति । किन्तु साधनव्यापकतया पक्षे साध्याभावस्येव साधनाभावस्यापि प्राप्तौ साधनस्वविषयवत्येवास्तीति प्रास्त्या नोपाधिना साधनस्य विषयवृत्तित्वसम्पादनमिति भावः । मास्तु उपाधेः पूर्वहेतौ अविषयवृत्तित्वसम्पादकत्वमपीत्यत आह **तत्सम्पादकस्यैवेति** । प्रतिपक्षस्य दूषकताबीजं पूर्वहेतौ अविषयवृत्तित्वसम्पादकत्वमेवेति भावः । यत्र साध्यतावच्छेदकेत्युक्तं उपाध्यभावे विशेषणादानं उदाहरणेन दर्शयति **तथा च वायुरिति** । अचाक्षुषत्वाभावस्येत्यस्य चाक्षुषत्वरूपोपाध्यभावस्येत्यर्थः । **सत्त्वेनेति** । तथा च उपाधिना पक्षे साधनव्यावृत्तिः न प्राप्नोतीति भावः । **प्रतिपक्षेति** । उपाध्यभावरूपप्रतिपक्षहेतौ पूर्वहेतोः यत् अविषयवृत्तित्वं तत्सम्पादकत्वसद्भावेनेत्यर्थः । उक्तरीत्या साधनवति साध्यत्वे आनीते स्वविषयशून्ये वृत्तिता साधनस्य प्राप्नोतीति तत्सम्पादकत्वेन दूषकताबीजसम्भवात् युक्तं तस्य प्रतिपक्षत्वम् । साध्यमात्रस्य पक्षात् व्यावृत्तिमात्रकरणेन उभयव्यावृत्तीकरणस्पर्शत्वहेतुकानुमानीयोपाध्यभावस्थल इवाभावेन साध्याभावसाधनोपपत्तावपि इत्यर्थः । **तत्र हेतोरिति** । तथाविध उपाधिस्थले उपाध्यभावेन पक्षे साधनस्यापि व्यावर्तमाने सति स्वविषयशून्ये पूर्वहेतोः





वृत्तिरूपप्रतिपक्षफलस्य प्राप्त्या तत्सम्पादकत्वरूपदूषकताबीजाभावेन साध्याभावसाधनमात्रस्य वैय्यर्थ्येन च प्रतिपक्षस्य दूषणत्वाप्राप्तेः उपाध्यभावेन साध्याभावसाधनानुपपत्तेः तथाविधोपाध्यभावे विशेषणदानस्य व्यर्थत्वादित्याशयः । यदवच्छिन्ने साध्ये यः उपाधिः तद्व्यावृत्तेः इत्यादि पूर्वयोजनोक्तरीत्येति भावः । यत् पक्षधर्मतादिरूप इत्याद्यन्यथाख्यातिस्तु वाक्यार्थविनोदे निराकृतास्ति । अधिकमपि धर्मत्वरूपादौ व्यभिचारः । न हि एतत् उपाधिना प्रतिपक्षस्येव व्यभिचारस्यापि उन्नयनं सम्मतमिति इत्यादि शोध्यमस्ति ।

**स०व्र०— न चेति** । साध्यगतविशेषणानां व्यभिचारावारकत्वादिति भावः । **स्पर्शवद्विशेषगुण इति** । विशेषगुणत्वाभावसाधने च संयोगे व्यभिचारः । तस्य प्रत्यक्षत्वे सति अकारणगुणपूर्वकत्वेऽपि स्पर्शवद्गुणत्वेन तदभावाभावादतो विशेषपदम् । तथा च स्पर्शवद्गुणत्वेऽपि स्पर्शवद्विशेषगुणत्वाभावसद्भावान्न व्यभिचार इति भावः । आदिपदेन वेदः सजातीयोच्चारणानपेक्षोच्चरितजातीयः वाक्यत्वादित्यत्र शब्दमूलकशब्दे व्यभिचारवारणाय साध्ये सजातीयेति विशेषणदानात् तत्सङ्ग्रहः । यथा प्रत्यक्षस्पर्शाश्रयत्वं प्रत्यक्षत्वव्यभिचारि द्रव्यत्वाव्यभिचारित्वे सति द्रव्यप्रत्यक्षत्वव्यापकव्यभिचारित्वान्महत्त्ववदित्यस्य(ापि) सङ्ग्रहः । तत्रापि साध्ये हेतौ च प्रत्यक्षपदं बहिरिन्द्रियप्रत्यक्षपरम् । अन्यथा सुखादौ व्यभिचारापत्तेः इति परैर्व्याख्यातत्वादिति द्रष्टव्यम् । **क्वचित्साध्यावच्छेदकावच्छिन्नस्येति** । अयं भावः । वायुः स्पार्शनः अनुद्भूतरूपानधिकरणत्वे सति उपलभ्यमानस्पर्शाधिकरणत्वादित्यादौ स्पार्शनत्वादिरूपशुद्धसाध्य एव द्रव्यत्वादिविशिष्टस्य चाक्षुषत्वाद्यभावस्याभाव उपाधिः । अयं च विशिष्टाभावरूप उपाधिः स्पार्शनत्वादिरूपसाध्यवति स्पर्शादौ चाक्षुषत्वाभावरूपविशेष्यवति तदभावप्रयुक्तो न सम्भवतीति द्रव्यत्वरूपविशेषणस्याभावेन; तत्प्रयुक्तविशिष्टाभावानुगत इति शुद्धसाध्यव्यापकः । वायौ तु (द्रव्यत्वरूपविशेषणस्य) चाक्षुषत्वाभावरूपविशेष्यवति तदभावप्रयुक्तो न सम्भवतीति द्रव्यत्वरूपविशेषणस्याभावेन, घटादौ तु द्रव्यत्वसद्भावेन विशेषणाभावप्रयुक्तविशिष्टाभावासम्भवेऽपि तस्य चाक्षुषत्वेन चाक्षुषत्वाभावरूपविशेषस्यासत्त्वेन तदभावलक्षणोपाधेः अनुद्भूतरूपानधिकरणत्वे सति उपलभ्यमानस्पर्शाधिकरणत्वरूपसाधनवति पक्षे अभावाद्भवति साधनाव्यापकः । अत एवोक्तम् 'य उपाधिर्लगति साध्ये सम्बन्धविशेषणे । तद्विशेषणयुक्तैतदभावाभूस्तु केवले ।' साध्ये, उपाधिर्भवति । **तद्विशेषणयुक्तैतदभावः इति** । तस्य साध्यस्य यद्विशेषणं, तेन युक्तः स च एषः । एतच्छब्देनोपाधिरभिधीयते । तस्याभावः, तस्य भूः सत्ता अभूः अभाव इत्यर्थः । शास्त्रे तु व्यतिरेकव्याप्त्यादिना अन्वयव्याप्त्यादिकमिवावच्छिन्नसाध्यव्यापकोपाधिनोक्तशुद्धसाध्यव्यापकोपाधिराक्षिप्यत इति न कश्चिद्दोषः ।

अत्र क्वचिदित्युक्तिस्तु अस्य प्रकारस्योक्तरीत्या वायुः स्पार्शनः अनुद्भूतरूपानधिकरणत्वे सति उपलभ्यमानस्पर्शाधिकरणत्वादित्यादौ सम्भवेऽपि वायुः स्पार्शनः स्पर्शत्वादित्यसिद्धिसङ्कीर्णे द्रव्यत्वावच्छिन्नसाध्यव्यापके चाक्षुषत्वोपाधौ असम्भवेनासार्वत्रिकत्वाभिप्रायात् तत्र द्रव्यत्वावच्छिन्नचाक्षुषत्वाभावाभावरूपोपाधौ उक्तरीत्या स्पार्शनत्वरूपसाध्यव्यापकत्वेऽपि स्पर्शत्वरूपसाधनाव्यापकत्वस्याभावात् । साधनवति स्पार्शनद्रव्यत्वाभावेन द्रव्यत्वविशिष्टचाक्षुषत्वाभावाभावेनोपाधेः साधनव्यापकत्वात् । न चास्य उपाधि-





त्वाभावादसङ्ग्रह इति वाच्यम् । प्रतिपक्षोन्नायकत्वरूपदूषकताबीजाक्रान्तस्योपाधित्वस्यावश्यकत्वेन तदनुगत-लक्षणस्य कर्तव्यत्वेन लक्षणाभावेनोपाधित्वाभाववचनस्यासङ्गतत्वात् । तस्मादस्य प्रकारस्य क्वचित्सत्त्वेऽपि क्वचिदसत्त्वात्; यदवच्छिन्नसाध्ये उपाधिः तद्व्यावृत्तेः तद्विशिष्टाभावे हेतुत्वमिति पूर्वप्रकारस्य च वायुः स्पार्शनः स्पर्शत्वादित्यत्रापि द्रव्यत्वावच्छिन्नस्पार्शनत्वरूपसाध्यवति चाक्षुषत्वसद्भावेन साध्यव्यापकत्वात् स्पर्शत्वरूप-साधनवति स्पर्शे चाक्षुषत्वस्याभावेन साधनाव्यापकत्वेन अचाक्षुषत्वेन द्रव्यत्वावच्छिन्नस्पार्शनत्वाभाव-रूपसाधनस्य सम्भवेनात्रापि सत्त्वेन सार्वत्रिकत्वादयमेव पक्षः टीकाकाराणामभिप्रेत इति भावः ।

सूक्ष्मदृष्टयस्त्वेवं व्याकुर्वते । साध्ये यदवच्छेदकं तदवच्छिन्नस्योपाध्यभावस्य क्वचिद्धेतुत्वादित्यर्थः । साध्यावच्छेदकमुपाध्यभावे न सर्वत्र विशेषणम् । किं तु क्वचिदेव । तथा हि यत्र साध्यावच्छेदकावच्छिन्नो-पाध्यभावाभावस्य स्थापनानुमानीयसाध्यव्यापकत्वं, तत्रत्यसाधनाव्यापकत्वं च, तत्रैव उपाध्यभावेन साध्याभावे साधनीये उपाध्यभावे साध्यावच्छेदकावच्छिन्नत्वविशेषणं देयम् । यत्र तु तद्धर्मावच्छिन्नोपाध्यभावाभावस्य स्थापनानुमानीयसाध्यसाधनव्यापकत्वाव्यापकत्वाभावः तत्रोपाध्यभावेन साध्याभावे साधनीये उपाध्यभावे तद्धर्मावच्छिन्नत्वं विशेषणं न देयम् । तत्र तद्धर्मावच्छिन्नोपाध्यभावाभावस्य साध्यव्यापकत्ववत् साधन-व्यापकत्वस्यापि सत्त्वेन तद्धर्मावच्छिन्नोपाध्यभावेन साधनभावस्यापि व्यावर्तितत्वेन हेतोरविषयवृत्तित्वा-सम्पादकत्वात् । तत्सम्पादकस्यैव प्रतिपक्षस्य दूषणत्वात् । तथा च वायुः स्पार्शनः अनुद्भूतरूपानधिकरणत्वे सति उपलभ्यमानस्पर्शाधिकरणत्वादित्यत्र द्रव्यत्वविशिष्टचाक्षुषत्वाभावस्य स्पार्शनत्वरूपसाध्यव्यापकस्य उक्तसाधनाव्यापकत्वस्य च सत्त्वेन; वायुः स्पार्शनो न द्रव्यत्वे सति अचाक्षुषत्वादिति प्रतिपक्षानुमाने पूर्वहेतोरविषयवृत्तित्वसम्पादकत्वेन साध्याभावसाधनोपपत्तावपि स्पर्शत्वादित्यादौ विशिष्टोपाधेः साध्य-व्यापकत्वस्येव साधनव्यापकत्वस्यापि सत्त्वेन तदभावेन साध्याभावस्येव साधनाभावस्यापि सिद्ध्यापत्त्या हेतोरविषयवृत्तित्वासम्भवेन तत्रोपाध्यभावे साध्यावच्छेदकावच्छिन्नत्वं न विवक्षणीयमिति अस्य प्रकारस्य सार्वत्रिकत्वाभावः । यदवच्छिन्नसाध्य इति पूर्वोक्तप्रकारस्तु सार्वत्रिक इति ध्येयम् ।

**व्यतिरेकेति** । व्यतिरेकव्याप्तेः साधनेन साध्यसिद्धावनङ्गत्वात् तदन्वयव्याप्तिसाधने चान्वयव्याप्तित्वात् तत्र च साध्यव्यापकत्वादेः सत्त्वान्न व्यतिरेकोपाधावव्याप्त इत्यर्थः ।

**विठ्ठल०— शब्दो न स्पर्शवद्विशेषगुण इति** । अत्र प्रत्यक्षत्वे सत्यकारणगुणपूर्वकत्वस्य हेतोः कर्मजस्थाणुश्येनसंयोगे व्यभिचारवारणाय साध्ये विशेषपदं यथा तथा प्रकृतेऽपि आद्यानुमाने सामान्यादौ द्वितीयानुमाने च स्पर्शे व्यभिचारवारणाय साध्ये विशेषणम् । एवं च विशिष्टाभावरूपसाध्यस्य तत्र सत्त्वान्न व्यभिचार इति भावः । प्रतिपक्षासम्भवं क्वचित्प्रकारान्तरेणापि परिहरति **क्वचित्साध्यावच्छेदकावच्छिन्न-स्येति** । केवलोपाध्यभावस्य हेतुत्वे हि शुद्धसाध्याभावसाधनासम्भवः । न चैवं किन्तु साध्यावच्छेदका-वच्छिन्नस्योपाध्यभावस्यैव हेतुत्वम् । तथा च व्याप्त्यसम्भवाच्छुद्धसाध्याभाव एवानुमातुं शक्यत इत्यर्थः । यत्र





साध्यावच्छेदकधर्मस्य न पक्षे सत्त्वं तत्रायं प्रकारो न सम्भवति । विशेषणासिद्धिप्रसङ्गादित्याशयेन क्वचिदित्युक्तं तदुदाहृत्य दर्शयति **यथेति** । वायुः स्पार्शनोऽनुद्भूतरूपाधिकरणत्वे सत्युपलभ्यमानस्पर्शाधिकरणत्वादित्यत्र द्रव्यत्वावच्छिन्नसाध्यव्यापकचक्षुषत्वमुपाधिः तदभावरूपस्य साध्यावच्छेदकद्रव्यत्वावच्छिन्नस्याचाक्षुषत्वस्य शुद्धसाध्याभावरूपस्पार्शनत्वाभावं प्रति हेतुत्वदर्शनादिति भावः । **व्यतिरेकव्याप्ताविति** । व्यतिरेकव्याप्तेरेव नास्तीत्युक्तमेवोत्तरमित्यर्थः । नन्वेवं सदनुमानमात्रोच्छेदः पर्वतो धूमवान् वह्निमत्वादित्यत्र साध्यव्यापकस्य आर्द्रेन्धनादेर्लोके यत्रकुत्रचिदुपाधित्वसम्मतस्य धूमानुमानेऽपि सत्त्वादित्यत आह **साध्यसाधनेति** । **प्रकृतयोरेवेति** । वह्न्यादिधूमादिरूपयोरेव विवक्षितत्वाद्यत्किञ्चित्साध्यव्यापकयत्किञ्चित्साधनाव्यापकयोरविवक्षितत्वादिति भावः । नन्वेवमननुगम इत्यस्वरसादाह **यो यत्साध्येति** ।

**चषकः— व्यभिचारेति** । जातौ स्पर्शादिगुणे चानैकान्त्यव्युदासकत्वादित्यर्थः । **क्वचित्साध्यावच्छेदकेति** । साध्यव्यापकतानिर्वाहकपक्षधर्मादिरूपविशेषणावच्छिन्नस्येत्यर्थः । तथा च शुद्धसाध्याभाव एवानुमातुं सुशक इति नार्थान्तरतेति भावः । दर्शितविशेषणस्य पक्षे समवधानस्थले साध्यापत्त्या नेयं भङ्गी समाश्रयणीयेति ध्वनयितुं क्वचित्पदोपादानम् । प्रपञ्चितं चैतत् तर्कताण्डवे । व्यतिरेकोपाधावित्यभिहितां क्षतिमपहस्तयते **व्यतिरेकेति** । अनुमित्यनुपयोगादित्युत्तरमभिहितमेवेति तत्रत्योपाधावव्याप्तिर्न क्षतिमावहतीति भावः । **प्रकृतयोरेवेति** । तेन साध्यान्तरसाधनान्तरव्यापकत्वाव्यापकत्वे समादाय धूमानुमानादावार्द्रेन्धनत्वादेर्नोपाधिताप्रसङ्ग इति भावः ।

**॥ इति तच्छङ्कानिरासः ॥**

**॥ इति साध्यव्यापकत्वे सति साधनाव्यापकत्वमेव उपाधेः सामान्यलक्षणम् ॥**

* * *

### ॥ अथ 'दुर्बलेन विरोधेऽपि न प्रमाणमसाधकम्' ॥

**१९२ सु०— ननु च सोपाधिकत्वस्य सत्प्रतिपक्षत्वेऽपि तेनैवानुमानदोषाधिक्यमिति । मैवम्, प्रतिज्ञार्थविरुद्धतेत्यनेनैव प्रबलप्रमाणविरुद्धतालक्षणकालातीत(ता)वत्समबलप्रमाणविरुद्धतायाः सत्प्रतिपक्षताया अपि संगृहीतत्वात् । प्रतिस्पर्धिसद्भावमात्रं हि प्रतिज्ञार्थविरुद्धतेत्युक्तम् । एवं तर्हि दुर्बलेन विरोधोऽपि प्रतिज्ञार्थविरुद्धता स्यात्, उक्तलक्षणोपेतत्वादित्यत आह दुर्बलेनेति ।**

## अनु०— दुर्बलेन विरोधेऽपि न प्रमाणमसाधकम् ॥





**अयमर्थः । प्रकरणादिवशाद्धि सामान्यशब्दा अपि विशेषे वर्तन्त इति प्रसिद्धम्, यथा विशिष्टसमये पुरुषमानयेत्युक्ते पुरुषविशेष एवानीयते न तु यः कोऽपि पुरुषः । प्रकृते चानुमानस्यासाधकत्वनिमित्तपरिसङ्ख्यानम् । न च दुर्बलेन विरोधेऽप्यनुमानमसाधकं भवति, प्रबलविरोधादिना तस्यैवाभासत्वात्, यथा 'विमतश्चक्षुष्मान्रूपापरोक्षज्ञानित्वात्' इत्यत्र 'विमतोऽन्धः पुरुषत्वादि'ति । अतः सामान्यशब्दप्रसक्तोऽपि दुर्बलेन विरोधो (नानुमानासाधकतावच्छिन्नप्र) न प्रतिज्ञार्थविरुद्धता, किन्तु प्रबलसमबलप्रमाणविरुद्धतैव (इति) ।**

**परि०— अनुमानदोषाधिक्यमिति** । तथा च विरोधोऽपि त्रिधैवेत्युक्तिविरोधः । **कालातीतवदिति** । तथा च तेनापि नाधिक्यमिति भावः । **इत्युक्तमिति** । प्रतिज्ञार्थ-विरुद्धतेत्यनुव्याख्यानस्य तथा व्याख्यानादिति भावः । **विशिष्टसमय इति** । दानातिथिपूजासमय इत्यर्थः ।

**गु०दी०— यथा विशिष्टसमय** इत्यत्र विशिष्टसमयः ग्रहणादिपुण्यकालः ।

**वं०प०— उक्तलक्षणेति** । प्रतिस्पर्धिसद्भावरूपोक्तलक्षणेत्यर्थः ।

**कं०रा०— एवमिति** । प्रतिज्ञार्थे प्रतिस्पर्धिसद्भावमात्रस्य प्रतिज्ञार्थविरुद्धतारूपत्व इत्यर्थः । **अत इति** । प्रतिस्पर्धिसद्भावशब्देन प्रसक्तोऽपि दुर्बलेन विरोधो न प्रतिज्ञार्थविरुद्धता । प्रकरणबलेन तस्यानु-मानासाधकतानिमित्तप्रतिस्पर्धिसद्भावपरत्वाद्दुर्बलेन विरोधस्य च तन्निमित्तत्वाभावात्किन्तु प्रबलसमबलप्रमाण-विरुद्धतैव तस्यानुमानासाधकतानिमित्तत्वादिति भावः ।

**श्रीनिधि०— असाधकत्वनिमित्तपरिसङ्ख्यानमिति** । प्रकृतमिति शेषः ।

**शे०वा०—** ननु दुर्बलेन विरोधेऽपीत्युत्तरवाक्यमनर्थकम् । न च दुर्बलप्रमाणविरोधस्य प्रतिज्ञार्थ-विरुद्धताऽभावप्रतिपादनार्थं तदिति वाच्यम् । तस्य प्रतिज्ञार्थविरुद्धतायाः प्रसञ्जकाभावेनाप्रसक्तत्वेन तदभाव-प्रतिपादनस्याप्यनर्थकत्वात् । न च समबलप्रमाणविरोधस्य प्रतिज्ञार्थविरुद्धतया सङ्गृहीतत्ववर्णनमेव सिद्धा-न्तिनस्तत्प्रसञ्जकमिति वाच्यम् । निमित्ताभावेन सिद्धान्तिना प्रतिज्ञार्थविरुद्धतया समबलप्रमाणविरोधस्य सङ्गृहीतत्ववर्णनस्याकर्तव्यतया तस्य तत्र प्रसञ्जकत्वासम्भवादित्यतोऽनुमानदोषाधिक्यशङ्कानिरासार्थतया सिद्धान्तिना समबलप्रमाणविरोधस्य प्रतिज्ञार्थविरुद्धतया सङ्गृहीतत्ववर्णनस्यावश्यं कर्तव्यत्वाद्युक्तं तस्य तत्प्रसञ्जकत्वमित्याशयेन समबलप्रमाणविरोधस्य प्रतिज्ञार्थविरुद्धतया सङ्गृहीतत्वं सिद्धान्तिना वाचयितुं





तद्व्यावर्त्यतयाऽनुमानदोषाधिक्यशङ्कामुत्थापयति **ननु चेति** । **समबलप्रमाणविरुद्धताया इति** । समबलप्रमाणविरुद्धतालक्षणाया इत्यर्थः । ननु विरुद्धयोः कालातीतसत्प्रतिपक्षयोः कथं प्रतिज्ञार्थविरुद्धतया सङ्ग्रह इत्यतः प्रतिज्ञार्थस्य प्रतिस्पर्धिप्रबलप्रमाणसद्भावस्य प्रतिस्पर्धिसमबलप्रमाणसद्भावस्य प्रतिज्ञार्थविरुद्धतात्वे तस्योभयाननुगतत्वेन तयोभयसङ्ग्रहाभावेऽपि प्रतिज्ञार्थस्य प्रतिस्पर्धिसद्भावमात्रस्य तत्त्वे तस्योभयानुगतत्वाद्युक्तः प्रतिज्ञार्थविरुद्धतयोभयोः सङ्ग्रह इत्याशयेनाह **प्रतिस्पर्धीति** । एवं दुर्बलेन प्रमाणेन विरोधस्य प्रतिज्ञार्थविरोधताप्रसञ्जकमुक्त्वा तदभावोपपादकतयोत्तरं वाक्यं योजयितुं तस्य प्रतिज्ञार्थविरुद्धताशङ्कामुत्थापयति **एवं तर्हीति** । नन्वत्र दुर्बलप्रमाणविरोधस्य प्रमाणासाधकत्वसम्पादकत्वाभावो वर्ण्यते न तु प्रतिज्ञार्थविरुद्धत्वाभावः । तत्कथमनेनोक्तशङ्कापरिहार इत्यतस्तस्य तादर्थ्यान्नानुपपत्तिरित्याशयेनाह **अयमर्थ इत्यादिना** ।

**वा०र०— प्रतिज्ञार्थविरोधतयेति** । प्रतिज्ञार्थविरुद्धतेत्यनेनेत्यर्थः । प्रतिज्ञार्थविरुद्धतेत्यनेनैवेति मूलानुसारात् । एतेन विरुद्धस्य भावो विरुद्धताभावश्च विरोध एवेति । कथं विरोधस्य विरोधेन सङ्ग्रहः । विरोधावृत्तेः विरोधस्य सङ्ग्राहकत्वानुपपत्तेः इति निरस्तम् । यद्वा विरुद्धतया सङ्ग्रहो नाम विरुद्धतायां अन्तर्भावोऽभिमतः । न केवलोपपत्तिदोषाणां विरोधादिभिः सङ्ग्रहः किं नाम परनिरूपिताशेषनिग्रहस्थानानामपि इत्यादिपद्धत्यादिग्रन्थानुसारात् इति बोध्यम् । एवं प्रतिज्ञार्थविरुद्धताऽभावेति पूर्ववाक्येऽपि प्रतिज्ञार्थविरुद्धतारूपत्वाभावेत्यर्थः । प्रतिज्ञाविरुद्धतयेत्याद्युत्तरत्रापि पूर्वत्रेव द्वेधार्थो विज्ञेयः । प्रमाणविरुद्धतालक्षणकालातीतता तावदिति तलन्तकालातीतशब्दयुक्तो मूलपाठः मूलकोशे सत्त्वात् युक्तत्वाच्चेति ज्ञेयम् । **कालातीतसत्प्रतिपक्षयोरिति** । प्रतिज्ञार्थविरुद्धतया इत्यस्य विरुद्धतयेत्यनेन इत्यर्थकत्वादेः प्राक् प्रतिपादनात् । अत्र कालातीतप्रतिपक्षशब्दौ भावप्रधानौ । तथा च कालातीतता सत्प्रतिपक्षयोरित्यर्थः । धर्मनिर्देशानुसारेण यथाश्रुतार्थे कालातीततावत् सत्प्रतिपक्षताया अपि इत्येतन्मूलानुसारेण कालातीततासत्प्रतिपक्षयोः सङ्ग्रह एव फलतः आक्षेप्यः इत्यप्याहुः । कालातीतसत्प्रतिपक्षतयोरिति पाठे द्वन्द्वान्ते श्रूयमाणतल्प्रत्ययस्य प्रत्येकमभिसम्बन्धे कालातीततासत्प्रतिपक्षयोः इत्येवार्थः आयाति । कालातीततासत्प्रतिपक्षयोरिति पाठस्तु सुगम एवेति ज्ञेयम् । समबलप्रमाणसद्भावस्य चेति चशब्दयुक्तः पाठः । प्रतिज्ञार्थविरुद्धतात्वे इति विरुद्धतारूपत्वे इत्यर्थः । **तस्येति** । प्रतिस्पर्धिप्रबलप्रमाणसद्भावस्य प्रतिस्पर्धिसमबलप्रमाणसद्भावस्य चेत्युक्तरूपद्वयस्येत्यर्थः । **उभयाननुगतत्वेनेति** । कालातीतसत्प्रतिपक्षशब्दयोः न्यायप्रधानत्वेन कालातीततास्थलसत्प्रतिपक्षतास्थलयोरननुगतत्वेनेत्यर्थः । धर्मिनिर्देशपक्षे तु यथाश्रुत एवार्थः इत्यप्याहुः । उभयाननुगतत्वं चान्योन्यस्थलाननुगतत्वम् । एवं च प्रतिस्पर्धिप्रबलप्रमाणसद्भावस्य उक्तविधप्रमाणसद्भावस्थलसत्त्वेऽपि प्रतिस्पर्धिसमबलप्रमाणसद्भावस्थलेऽभावः । एवं प्रतिस्पर्धिसमबलप्रमाणसद्भाव इति विवेको बोध्यः । **तयेति** । प्रतिस्पर्धिप्रबलप्रमाणसद्भावादिरूपया प्रतिज्ञाकार्यविरुद्धतयेत्यर्थः । तृतीयार्थस्तु विरुद्धतयेत्यनेन इत्यादेः पूर्ववत् । उभयेत्यस्यापि पूर्ववदेवेत्यर्थः । **तत्त्वे** प्रतिज्ञाविरुद्धार्थतारूपत्वे । तस्योभयानुगतत्वात् । प्रतिस्पर्धिसद्भावमात्रस्य उभयस्थलानुगतत्वादित्यर्थः । **विरोधताप्रसञ्जकमिति** । विरोधतापदं विरुद्धतापरं





**अयमर्थः । प्रकरणादिवशाद्धि सामान्यशब्दा अपि विशेषे वर्तन्त इति प्रसिद्धम्, यथा विशिष्टसमये पुरुषमानयेत्युक्ते पुरुषविशेष एवानीयते न तु यः कोऽपि पुरुषः । प्रकृते चानुमानस्यासाधकत्वनिमित्तपरिसङ्ख्यानम् । न च दुर्बलेन विरोधेऽप्यनुमानमसाधकं भवति, प्रबलविरोधादिना तस्यैवाभासत्वात्, यथा 'विमतश्चक्षुष्मान्रूपापरोक्षज्ञानित्वात्' इत्यत्र 'विमतोऽन्धः पुरुषत्वादि'ति । अतः सामान्यशब्दप्रसक्तोऽपि दुर्बलेन विरोधो (नानुमानासाधकतावच्छिन्नप्र) न प्रतिज्ञार्थविरुद्धता, किन्तु प्रबलसमबलप्रमाणविरुद्धतैव (इति) ।**

**परि०— अनुमानदोषाधिक्यमिति** । तथा च विरोधोऽपि त्रिधैवेत्युक्तिविरोधः । **कालातीतवदिति** । तथा च तेनापि नाधिक्यमिति भावः । **इत्युक्तमिति** । प्रतिज्ञार्थ-विरुद्धतेत्यनुव्याख्यानस्य तथा व्याख्यानादिति भावः । **विशिष्टसमय इति** । दानातिथिपूजासमय इत्यर्थः ।

**गु०दी०— यथा विशिष्टसमय** इत्यत्र विशिष्टसमयः ग्रहणादिपुण्यकालः ।

**वं०प०— उक्तलक्षणेति** । प्रतिस्पर्धिसद्भावरूपोक्तलक्षणेत्यर्थः ।

**कं०रा०— एवमिति** । प्रतिज्ञार्थे प्रतिस्पर्धिसद्भावमात्रस्य प्रतिज्ञार्थविरुद्धतारूपत्व इत्यर्थः । **अत इति** । प्रतिस्पर्धिसद्भावशब्देन प्रसक्तोऽपि दुर्बलेन विरोधो न प्रतिज्ञार्थविरुद्धता । प्रकरणबलेन तस्यानु-मानासाधकतानिमित्तप्रतिस्पर्धिसद्भावपरत्वाद्दुर्बलेन विरोधस्य च तन्निमित्तत्वाभावात्किन्तु प्रबलसमबलप्रमाण-विरुद्धतैव तस्यानुमानासाधकतानिमित्तत्वादिति भावः ।

**श्रीनिधि०— असाधकत्वनिमित्तपरिसङ्ख्यानमिति** । प्रकृतमिति शेषः ।

**शे०वा०—** ननु दुर्बलेन विरोधेऽपीत्युत्तरवाक्यमनर्थकम् । न च दुर्बलप्रमाणविरोधस्य प्रतिज्ञार्थ-विरुद्धताऽभावप्रतिपादनार्थं तदिति वाच्यम् । तस्य प्रतिज्ञार्थविरुद्धतायाः प्रसञ्जकाभावेनाप्रसक्तत्वेन तदभाव-प्रतिपादनस्याप्यनर्थकत्वात् । न च समबलप्रमाणविरोधस्य प्रतिज्ञार्थविरुद्धतया सङ्गृहीतत्ववर्णनमेव सिद्धा-न्तिनस्तत्प्रसञ्जकमिति वाच्यम् । निमित्ताभावेन सिद्धान्तिना प्रतिज्ञार्थविरुद्धतया समबलप्रमाणविरोधस्य सङ्गृहीतत्ववर्णनस्याकर्तव्यतया तस्य तत्र प्रसञ्जकत्वासम्भवादित्यतोऽनुमानदोषाधिक्यशङ्कानिरासार्थतया सिद्धान्तिना समबलप्रमाणविरोधस्य प्रतिज्ञार्थविरुद्धतया सङ्गृहीतत्ववर्णनस्यावश्यं कर्तव्यत्वाद्युक्तं तस्य तत्प्रसञ्जकत्वमित्याशयेन समबलप्रमाणविरोधस्य प्रतिज्ञार्थविरुद्धतया सङ्गृहीतत्वं सिद्धान्तिना वाचयितुं





तद्व्यावर्त्यतयाऽनुमानदोषाधिक्यशङ्कामुत्थापयति **ननु चेति** । **समबलप्रमाणविरुद्धताया इति** । समबल-प्रमाणविरुद्धतालक्षणाया इत्यर्थः । ननु विरुद्धयोः कालातीतसत्प्रतिपक्षयोः कथं प्रतिज्ञार्थविरुद्धतया सङ्ग्रह इत्यतः प्रतिज्ञार्थस्य प्रतिस्पर्धिप्रबलप्रमाणसद्भावस्य प्रतिस्पर्धिसमबलप्रमाणसद्भावस्य प्रतिज्ञार्थविरुद्धतात्वे तस्योभयाननुगतत्वेन तयोभयसङ्ग्रहाभावेऽपि प्रतिज्ञार्थस्य प्रतिस्पर्धिसद्भावमात्रस्य तत्त्वे तस्योभयानुगतत्वाद्युक्तः प्रतिज्ञार्थविरुद्धतयोभयोः सङ्ग्रह इत्याशयेनाह **प्रतिस्पर्धीति** । एवं दुर्बलेन प्रमाणेन विरोधस्य प्रतिज्ञार्थ-विरोधताप्रसञ्जकमुक्त्वा तदभावोपपादकतयोत्तरं वाक्यं योजयितुं तस्य प्रतिज्ञार्थविरुद्धताशङ्कामुत्थापयति **एवं तर्हीति** । नन्वत्र दुर्बलप्रमाणविरोधस्य प्रमाणासाधकत्वसम्पादकत्वाभावो वर्ण्यते न तु प्रतिज्ञार्थविरुद्धत्वा-भावः । तत्कथमनेनोक्तशङ्कापरिहार इत्यतस्तस्य तादर्थ्यान्नानुपपत्तिरित्याशयेनाह **अयमर्थ इत्यादिना** ।

**वा०२०— प्रतिज्ञार्थविरोधतयेति** । प्रतिज्ञार्थविरुद्धतेत्यनेनेत्यर्थः । प्रतिज्ञार्थविरुद्धतेत्यनेनैवेति मूलानुसारात् । एतेन विरुद्धस्य भावो विरुद्धताभावश्च विरोध एवेति । कथं विरोधस्य विरोधेन सङ्ग्रहः । विरोधावृत्तेः विरोधस्य सङ्ग्राहकत्वानुपपत्तेः इति निरस्तम् । यद्वा विरुद्धतया सङ्ग्रहो नाम विरुद्धतायां अन्त-र्भावोऽभिमतः । न केवलोपपत्तिदोषाणां विरोधादिभिः सङ्ग्रहः किं नाम परनिरूपिताशेषनिग्रहस्थानानामपि इत्यादिपद्धत्यादिग्रन्थानुसारात् इति बोध्यम् । एवं प्रतिज्ञार्थविरुद्धताऽभावेति पूर्ववाक्येऽपि प्रतिज्ञार्थविरुद्धता-रूपत्वाभावेत्यर्थः । प्रतिज्ञाविरुद्धतयेत्याद्युत्तरत्रापि पूर्वत्रेव द्वेधार्थो विज्ञेयः । प्रमाणविरुद्धतालक्षणकालातीतता तावदिति तलन्तकालातीतशब्दयुक्तो मूलपाठः मूलकोशे सत्त्वात् युक्तत्वाच्चेति ज्ञेयम् । **कालातीतसत्प्रति-पक्षयोरिति** । प्रतिज्ञार्थविरुद्धतया इत्यस्य विरुद्धतयेत्यनेन इत्यर्थकत्वादेः प्राक् प्रतिपादनात् । अत्र कालातीतप्रतिपक्षशब्दौ भावप्रधानौ । तथा च कालातीतता सत्प्रतिपक्षयोरित्यर्थः । धर्मनिर्देशानुसारेण यथाश्रुतार्थे कालातीततावत् सत्प्रतिपक्षताया अपि इत्येतन्मूलानुसारेण कालातीततासत्प्रतिपक्षयोः सङ्ग्रह एव फलतः आक्षेप्यः इत्यप्याहुः । कालातीतसत्प्रतिपक्षतयोरिति पाठे द्वन्द्वान्ते श्रूयमाणतल्प्रत्ययस्य प्रत्येकमभिसम्बन्धे कालातीततासत्प्रतिपक्षयोः इत्येवार्थः आयाति । कालातीततासत्प्रतिपक्षयोरिति पाठस्तु सुगम एवेति ज्ञेयम् । समबलप्रमाणसद्भावस्य चेति चशब्दयुक्तः पाठः । प्रतिज्ञार्थविरुद्धतात्वे इति विरुद्धता-रूपत्वे इत्यर्थः । **तस्येति** । प्रतिस्पर्धिप्रबलप्रमाणसद्भावस्य प्रतिस्पर्धिसमबलप्रमाणसद्भावस्य चेत्युक्तरूप-द्वयस्येत्यर्थः । **उभयाननुगतत्वेनेति** । कालातीतसत्प्रतिपक्षशब्दयोः न्यायप्रधानत्वेन कालातीततास्थल-सत्प्रतिपक्षतास्थलयोरननुगतत्वेनेत्यर्थः । धर्मिनिर्देशपक्षे तु यथाश्रुत एवार्थः इत्यप्याहुः । उभयाननुगतत्वं चान्योन्यस्थलाननुगतत्वम् । एवं च प्रतिस्पर्धिप्रबलप्रमाणसद्भावस्य उक्तविधप्रमाणसद्भावस्थलसत्त्वेऽपि प्रतिस्पर्धिसमबलप्रमाणसद्भावस्थलेऽभावः । एवं प्रतिस्पर्धिसमबलप्रमाणसद्भाव इति विवेको बोध्यः । **तयेति** । प्रतिस्पर्धिप्रबलप्रमाणसद्भावादिरूपया प्रतिज्ञाकार्यविरुद्धतयेत्यर्थः । तृतीयार्थस्तु विरुद्धतयेत्यनेन इत्यादेः पूर्ववत् । उभयेत्यस्यापि पूर्ववदेवेत्यर्थः । **तत्त्वे** प्रतिज्ञाविरुद्धार्थतारूपत्वे । तस्योभयानुगतत्वात् । प्रतिस्पर्धिसद्भावमात्रस्य उभयस्थलानुगतत्वादित्यर्थः । **विरोधताप्रसञ्जकमिति** । विरोधतापदं विरुद्धतापरं





पूर्वोत्तरानुसारात् । तथा पाठस्तु सुगम एव । तथा च प्रतिज्ञार्थविरुद्धतारूपत्वप्रसञ्जकमित्यर्थे **तदभावेति** । दुर्बलेन प्रमाणेन विरोधस्य प्रतिज्ञार्थविरुद्धतारूपत्वाभावेत्यर्थः । प्रतिज्ञार्थविरुद्धतायां अन्तर्भावाभावेति यावत् । **विरुद्धताशङ्कामिति** । विरुद्धतारूपत्वशङ्कामित्यर्थः । एवमुत्तरत्रापि । प्रसक्तोऽपि दुर्बलेन विरोधेन प्रतिज्ञार्थविरुद्धतेति मूले पाठः ।

**स०व्र०— तेनैवेति** । सत्प्रतिपक्षत्वेनैवेत्यर्थः । सत्प्रतिपक्षस्य पूर्वोक्तप्रतिज्ञाविरोधाव्याप्तिलिङ्ग-राहित्यरूपानुमानदोषेष्वन्तर्भावासम्भवेन दोषचातुर्विध्यं स्यादिति भावः । ननु प्रतिज्ञार्थविरुद्धतेत्यनेन कथं सत्प्रतिपक्षस्यापि सङ्ग्रह इत्यत आह **प्रतिस्पर्धिसद्भावमात्रमिति** । **एवं तर्हीति** । प्रतिज्ञार्थविरुद्धतेत्यनेन सत्प्रतिपक्षस्यापि सङ्ग्रह इत्यर्थः । **उक्तलक्षणोपेतत्वादिति** । प्रतिस्पर्धिसद्भावमात्रमित्युक्तलक्षणोपेतत्वा-दित्यर्थः । **प्रकृत इति** । **परिसङ्ख्यानम्** आरब्धमिति शेषः । यद्यपि हीनबले प्रमाणशब्दप्रयोग एव नास्ति । आभासानाभासाविवेक एव हि प्रमाणशब्दप्रयोगः; न त्वप्रामाण्ये निश्चित इति पूर्वोक्तरीत्या न शङ्कावकाशः । तथापि प्रमाणशब्दस्य सामान्यार्थकत्वमङ्गीकृत्येयं शङ्केति ध्येयम् ।

**विठ्ठल०—** ननु प्रतिज्ञार्थविरुद्धार्थविरुद्धतेत्यस्य सामान्यशब्दत्वेन दुर्बलेन विरुद्धस्यापि तेन गृहीतत्वेन दुष्टतया दुर्बलेन विरोधेन असाधकं नेत्ययुक्तमित्यत आह **अयमर्थ इति** । राजगमनकाले बलात्कारेण भारवाहार्थं यत्किञ्चित्पुरुषग्रहणसमयो **विशिष्टसमयः** । विशिष्टसमय इति क्वचित्पाठः । उपरागादि पुण्यकाल इत्यर्थः । विनिगमकाभावादयमप्यस्तु दोष इत्यत आह **यत्र विरोधेति** । अनुष्णोऽग्निरिति प्रत्यक्षविरोधि । घनमम्बरमिति अनुमानविरोधि । ब्राह्मणो न हन्तव्यमित्यागमविरोधि । प्रत्यक्षं प्रमाणमिति सर्वाभ्युपगतविरोधि । वैशेषिकस्य प्रागुत्पत्तेः सत्कार्यमिति ब्रुवतः स्वशास्त्रविरोधि । न शब्दोऽर्थप्रमापक इति स्ववचनविरोधीति । प्रत्यक्षा-दविरोधोदाहरणानि तत्रैवोक्तानि ज्ञातव्यानि ।

**॥ इति दुर्बलेन विरोधेऽपि न प्रमाणमसाधकम् ॥**
**॥ इति सोपाधिकत्वस्य उक्तदोषान्तर्भावः ॥**

* * *

**॥ अथ प्रतिज्ञार्थविरोधस्य अव्याप्तावनन्तर्भावः ॥**
**॥ अथ एतदर्थे अनुव्याख्यानस्यावतरणं शब्दार्थकथनञ्च ॥**

१९३ **सु०—** 'नन्वेवमाधिक्यनिरासेऽपि नानुमानविरोधत्रैविध्यं सम्भवति, प्रतिज्ञा-विरोधस्याव्याप्त्यैव गतत्वात् । विरोधेनैव साध्यविरहिणि पक्षे वर्तमानस्य हेतोरव्याप्ति-र्भवति । न हि विरोधस्याव्याप्त्यसङ्कीर्णमुदाहरणमस्ति । यत्र तु विरोधसम्भवस्तत्राव्याप्ते-





रेवान्यत्रावधृतसामर्थ्याया दूषणत्वात्, विरोधस्याव्याप्त्युत्थापनेन चरितार्थत्वादि'त्याशङ्कां भिक्षु(क)पादप्र(सारणन्यायेन)सारणेन परिहरति **स्ववाक्येनेति ।**

## अनु०— स्ववाक्येन विरोधेऽपि नैव साधकतां व्रजेत् ।

**प्रमाणमित्यनुवर्तते । न केवलं प्रमाणविरोधे, किन्तु स्ववाक्येन विरोधेऽपि प्रमाणं नैव साधकतां व्रजेत् । एवशब्देन परेषामपि सिद्धोऽयमर्थ इति दर्शयति । यथोक्तम् । अविरोधिग्रहणात् प्रत्यक्षानुमानागमस्वशास्त्रस्ववचनविरोधिनो निरस्ता इति (भवन्ति इति) ।**

**परि०— अव्याप्तिर्भवतीति** । व्यभिचाररूपव्याप्त्यभावो भवतीत्यर्थः । विनिगमकाभावादयमप्यस्तु दोष इत्यत आह **यत्र तु विरोधसम्भव इति** । **भिक्षुपादेति** । यथा भिक्षुः पादप्रसारणावकाशे सति शनैश्शनैरन्तःप्रविशति । तथा स्ववाक्यविरोधार्थं पृथक् प्रतिज्ञाविरोधेऽवश्यं वाच्ये प्रमाणविरोधरूपोऽपि पृथगेव सेत्स्यतीति वक्तुमित्यर्थः । **यथोक्तमिति** । न्यायभाष्ये । अनुमेयोद्देशाविरोधी प्रतिज्ञेति प्रतिज्ञालक्षणेऽविरोधिग्रहणात् । वह्निरनुष्ण इति प्रत्यक्षविरोधी । आकाशं निबिडमित्यनुमानविरोधी । ब्राह्मणो हन्तव्य इत्यागमविरोधी । वैशेषिकस्य प्रागुत्पत्तेः सत्कार्यमिति ब्रुवतः स्वशास्त्रविरोधी । शब्दो नार्थबोधक इत्यादिः स्ववचनविरोधीत्येवं प्रतिज्ञाविरोधिनो निरस्ता इत्यर्थः ।

**यादु०— यथोक्तमिति** । प्रशस्तपादभाष्य इति शेषः । **अविरोधिग्रहणादिति** । अनुमेयोद्देशोऽविरोधी प्रतिज्ञेति प्रतिज्ञालक्षणेऽविरोधिग्रहणादित्यर्थः । अनुष्णोऽग्निरिति प्रत्यक्षविरोधी । घनमम्बरमित्यनुमानविरोधी । ब्राह्मणेन सुरा पेयेत्यागमविरोधी । वैशेषिकस्य प्रागुत्पत्तेः सत्कार्यमिति ब्रुवतः स्वशास्त्रविरोधी । न शब्दोऽर्थप्रत्यायक इति स्ववचनविरोधी । इति प्रत्यक्षादिविरोधोदाहरणानि तत्रैवोक्तानि ज्ञातव्यानि ।

**वं०प०— प्रतिज्ञाविरोधस्य** प्रमाणविरोधस्येत्यर्थः । अत एव 'न केवलं प्रमाणविरोध' इति वक्ष्यति । **यथोक्तं** प्रशस्तपादभाष्य इति शेषः । **ग्रहणादिति** । अनुमानोपदेशाविरोधी प्रतिज्ञेति प्रतिज्ञालक्षण इति शेषः ।

**श्रीनिधि०— अभ्युपगतस्वशास्त्रेति** (?)। अभ्युपगतमभ्युपगमः । तेन सं स्वीयम् । तच्च तत् शास्त्रं चेत्यर्थः ।





**शे०वा०— ननु** 'स्ववाक्येन विरोधेऽपी'ति स्ववाक्यविरोधस्य प्रमाणासाधकत्वोपपादनमनर्थकम् । न च तस्य पृथग्दोषत्वसमर्थनार्थं तदिति वाच्यम् । तत्समर्थनस्याप्यनर्थकत्वात् । न चानुमानविरोधत्रैविध्यानुपपत्तिशङ्कापरिहारार्थं तदिति वाच्यम् । तस्याः प्रागेव परिहृततया पुनरपरिहर्तव्यत्वात् । न च दोषान्तरसद्भावनिमित्तकत्रैविध्यानुपपत्तिशङ्कायाः पूर्वं परिहारेऽपि विरोधद्वैविध्यनिबन्धनतत्त्रैविध्यानुपपत्तिशङ्काया अपरिहारात्तदर्थमेतदिति वाच्यम् । अन्यतरेणान्यतरस्यागततया द्वैविध्यशङ्काया एवानुत्थानेन तत्प्रयुक्तत्रैविध्यानुपपत्तिशङ्काया दूरापास्तत्वादित्यतः प्रतिज्ञाविरोधस्याव्याप्त्या गतत्वात् तद्द्वैविध्यप्रयुक्ततत्त्रित्वानुपपत्तिशङ्का युक्तैवेत्याशयेन तामुत्थापयति **नन्विति** । प्रतिज्ञाविरोधस्याव्याप्त्या गतार्थतामेवोपपादयति **विरोधेनेति** । नन्वस्तु यत्र विरोधस्तत्राव्याप्तिरपि, तथाऽपि तस्या एव कुतो दोषत्वमित्यत आह **न हीति** । विरोधेन साध्याभावे निश्चिते तत्र सतो हेतोरव्याप्त्यापत्त्या तदसङ्कीर्णं विरोधोदाहरणं नास्तीत्यर्थः । नन्वेवं विरोधासङ्कीर्णाव्याप्त्युदाहरणाभावात् तस्या एवादोषत्वं किन्न स्यादित्यत आह **यत्र त्विति** । **अन्यत्रेति** । सर्वमभिधेयं प्रमेयत्वादित्यनुपसंहारिणि विरोधाभावादव्याप्तेरेव दोषत्वेन तत्र क्लृप्ततया तस्या एव सर्वत्र दोषत्वनिश्चयोपपत्तेरित्यर्थः । तर्हि विरोधोद्भावनानर्थक्यमित्यत आह **विरोधस्य चेति** । अन्यथासिद्धत्वान्न तस्य दोषत्वमिति भावः । नन्वेवं प्रबलसमबलप्रमाणविरोधस्याव्याप्त्याऽगतत्वव्युत्पादनमेव कर्तव्यम् । तस्यैवोक्तशङ्कानिवर्तकत्वात् । न तु स्ववाक्यविरोधस्यासाधकत्वसम्पादकत्ववर्णनम् । तेन तस्य दोषत्वप्राप्तावपि प्रमाणविरोधस्य तदप्राप्तेरित्यतस्तत्कालं तेन प्रबलप्रमाणविरोधादेस्तदसिद्धावपि प्रमाणविरोधवत्स्ववाक्यविरोधस्यापि प्रतिज्ञाविरोधप्रभेदत्वात् तद्रूपप्रतिज्ञाविरोधस्याव्याप्त्याऽगतत्वसिद्धेर्युक्त एव तेन तत्त्रैविध्यानुपपत्तिशङ्कापरिहार इत्याशयेनोक्तं **भिक्षुपादप्रसारणेनेति** । तन्न्यायेनेत्यर्थः । क्वचिद्भिक्षुपादप्रसरणन्यायेनेत्यपि पाठः । यथा हि भिक्षुणा वामनेन त्रिपदच्छलेन सर्वं जगद्व्याप्तम् । तथा स्ववाक्यविरोधाख्यपृथग्दूषणच्छलेन सर्वस्यापि प्रतिज्ञाविरोधस्य पृथग्दूषणत्वं साधयिष्यामीति भावः ।

ननु 'स्ववाक्येन विरोधेऽपि प्रमाणं न साधकतां व्रजेदि'त्येतावतैव पूर्तेरेवशब्दस्यानर्थक्यमित्यतः स्ववाक्यविरोधे प्रमाणं न साधकमित्यस्यार्थस्य परसिद्धत्वप्रदर्शनार्थत्वात् तस्य न वैयर्थ्यमित्याह **एवशब्देनेति** । **यथोक्तमिति** । प्रशस्तपादभाष्य इति शेषः । तद्वाक्यं पठति **अविरोधीति** । अनुमेयोद्देशोऽविरोधी प्रतिज्ञेति प्रतिज्ञालक्षणेऽविरोधिग्रहणादित्यर्थः । अत्र प्रत्यक्षानुमानागमस्वशास्त्रस्ववचनविरोधिनो निरस्ता इत्येव पाठः । मूलकोशेषु प्रशस्तपादभाष्यादिषु च तद्दर्शनात् । प्रत्यक्षानुमानाभ्युपगतस्वशास्त्रेत्येवमाकारस्तु लेखकदोषनिमित्तक एव । स्वमूलकोशेषु परग्रन्थेषु च तददर्शनात् । तत्रानुष्णोऽग्निरिति प्रत्यक्षविरोधी । घनमम्बरमित्यनुमानविरोधी । ब्राह्मणेन सुरा पेयेत्यागमविरोधी । वैशेषिकस्य प्रागुत्पत्तेः सत्कार्यमिति वदतः स्वशास्त्रविरोधी । शब्दोऽप्रत्यायक इति स्ववचनविरोधी । त एते सर्वेऽविरोधीग्रहणेन निरस्ता इत्यर्थः ।

**वा०र०— अन्यतरेणेति** । अन्यतमेनेत्यर्थः । अन्यतरस्येत्यस्यापि अन्यतमस्येत्यर्थः । यद्वा त्रिषु मध्ये केनचित् कस्यचित् गतत्वे त्रित्वानुपपत्तिर्भवति । केनचित् गतत्वं च एकेन इव उभाभ्यामपि





सम्भवति । प्रकृतं तु त्रिष्वेकस्य पदद्वयमपि एकेनैव गतत्वमभिमतम् । तच्च एकस्य तावदन्तर्भावानन्तरभावी वोदासीनतया पृथक्कारे सति उर्वरितयोः द्वयोरेव विवक्षायां अन्यतरेणेत्यादिकं उक्तमिति ज्ञेयम् । **साधयिष्यामीति भाव इति** । भिक्षुपादप्रसरणन्यायेन इत्यनेनोक्तो अनुव्याख्यानकारीयो भाव इत्यर्थः । इति भावेनेत्यर्थ इति पाठस्तु सुगम एव । **प्रशस्तपादभाष्यादिष्विति** । यद्यपि बहुदेशानुसारेण तमपदपदघटित-प्रशस्तपदं भाष्यवाक्यस्य एकस्य प्राप्तावपि आदिपदेन ग्रन्थान्तरग्रहणं युक्तम् । तत्र प्रशस्तपादभाष्य-गतवाक्यविन्यासविशेषस्य सद्भावनिमित्ताभावात् । नापि प्रशस्तपादभाष्यव्याख्यानरूपकिरणावलीग्रन्थस्य तद्व्याख्यानरूपकिरणावलीग्रन्थस्य इत्येतत् व्याख्यानवर्धमानादेश्च ग्रहणं युक्तम् । किरणावल्यादेः प्रशस्त-पादभाष्यव्याख्यानत्वेन तत्र प्रशस्तपादभाष्यगतवाक्यपाठस्य प्रतीकोपादानरूपेण कथञ्चित्सद्भावसम्भवेऽपि तत्रागमपदाभावात् । गुणकिरणावल्यां हि अविरोधग्रहणादिति प्रतीकोपादानानन्तरं प्रत्यक्षेणानुमानेन वा अभ्युपेतं प्रतिपन्नं तद्विरोध्यनुमेयाभास इत्यर्थ इत्युक्तेः । प्रत्यक्षविरुद्धं उदाहरति अनुमानविरुद्धमुदाहरति अभ्युपगत-विरुद्धमुदाहरति इत्यादि चोक्तम् । वर्धमानेऽपि क्षीरपादेनोदाहरणं इत्यादिकिरणावलिवाक्यस्याभ्युपगतविरुद्धत्वं उपपादयतीत्यवतारः कृतः तत् कथमादिपदं इत्याभाति । तथापि प्रशस्तपादभाष्यस्यैव ब्राह्मणेन सुरापेय इत्याद्यागमविरोधीत्युत्तरवाक्यरूपस्य विवक्षया आदिपदोपादानम् । तथा च यथोक्तं इत्यत्र मूले प्रशस्तपादभाष्य इति टीकाकृता पूरितत्वेन प्रशस्तपादभाष्यादिषु इत्यत्रत्य प्रशस्तपादभाष्यपदस्योदाहृतप्रत्यक्षानुमानागमेत्येतत् वाक्यपरतां स्थलभेदनिमित्तेनाश्रित्य च आदिशब्दस्य ब्राह्मणेन सुरा पेयेति आगमविरोधीत्युत्तरप्रशस्त-पादभाष्यपरतां चाश्रित्य दोषाभावात् । किरणावल्यादौ तु क्वाचित्काभ्युपगतेति पाठमुपादायापि आगमार्थ एव पर्यवसानमाश्रितम् । प्रत्यक्षेणानुमानेन वा अभ्युपगतं प्रतिपन्नं इति व्याख्याय उत्तरत्र प्रत्यक्षविरुद्धं अनुमानविरुद्धं इत्युक्तिश्च तत्रायुक्ता भाति । आगमेत्युत्तरभाष्यविरोधश्च स्पष्ट एव । एवं तत् वर्धमानादावप्यस्वारस्यं बोध्यम् । अत एवाभ्युपगतप्रामाण्यं तेनापि यद्विरुद्धं तत्प्रतिज्ञाभासः इत्यर्थ इत्युक्तम् । तथा ब्राह्मणेने-त्येतदुदाहरणोपपादनावसरे न च तत्रानुमानं प्रभवति । श्रुत्यागमसमधिगम्यत्वात् । तथा च दृष्टान्तसाधकेनैव स्वयमभ्युपगतसुरापानस्य पवित्रत्वं बाधितं भवतीत्यपि उक्तम् । तेन चाभ्युपगतविरोधः । आगमविरोधतयैव व्याख्यातः । तथा च यथोक्तमिति मूलोपात्तविरोधीति भाष्यवाक्यं तदनुपात्तम् । ब्राह्मणेन सुरा पेये-त्याद्यागमविरोधीत्युत्तरभाष्यवाक्यं तत् किरणावलि आदि च विवक्षित्वा उक्तरीत्यादिपदं बहुवचनं चोपपन्नमिति ज्ञातव्यम् । यथा उष्णोऽग्निरिति प्रत्यक्षविरोधीत्यादिप्रशस्तपादभाष्यानुसारेण उदाहरणान्याह **तत्रानुष्णो-ऽग्निरित्यादिना** । स्वक्रियाविरोधस्वन्यायविरोधश्च इत्येतत् पद्धतिरोत्यनुसारेण स्वक्रियास्वन्यायविरोधयोः च वाक्यविरोधत्वानुपपत्तिमाशङ्क्य तदनुसारेणैव समाधत्ते । ननु स्वक्रियास्वन्यायविरोधयोः इत्यादिना सुस्थमिति दिक् इत्यन्तेन तट्टीकायां चेतीति ज्ञेयम् । तट्टीकायां चेत्यत्र पूर्ववदेव उपपादनं विज्ञेयम् । एषा स्वक्रिया व्याहृता इत्यनन्तरं स्यादिति शेषः । तस्मात् अविषयवृत्तिताहेतुत्वेनेति मूले स्ववाक्यविरोधरूपेत्युपस्कारात् न स्ववाक्यविरोधेति न प्रक्रमासङ्गतिः इति वक्तव्यदुर्बलेन विरोधेऽपीति पूर्वार्धं इति शेषः ।





**स०व्र०—** प्रतिज्ञाविरोधस्य अव्याप्त्या गतार्थत्वमेवेत्युपपादयति **विरोधेनैवेति** । नन्वेतावता यत्र विरोधस्तत्राव्याप्तेरपि सत्त्वेन अव्याप्तेरेव दोषत्वानङ्गीकारे किं नियामकमित्यत आह **न हीति** । विरोधेन साध्याभावे पक्षे निश्चिते तत्र विद्यमानस्य हेतोरव्याप्त्यापत्त्या अव्याप्त्यसङ्कीर्णमुदाहरणं विरोधस्य नास्तीत्यर्थः । ननु यथा अव्याप्त्यसङ्कीर्णमुदाहरणं विरोधस्य नास्तीत्यव्याप्तेरेव दोषत्वं, न विरोधस्येत्युच्यते; तथा विरोधासङ्कीर्णाव्याप्तेरप्युदाहरणाभावेन विरोधस्यैव दोषत्वमङ्गीकृत्य अव्याप्तेर्नाङ्गीकर्तव्यमित्यत आह **यत्र त्विति** । **अन्यत्रेति** । सर्वमभिधेयं प्रमेयत्वादित्यनुपसंहारिणि विरोधाभावेन अव्याप्तेरेव दोषत्वात् तद्वत् यत्र विरोधस्तत्राव्याप्तेरेव दोषत्वमस्तु अन्यत्र क्लृप्तत्वादिति भावः । नन्वेवं चेत् विरोधोद्भावनं व्यर्थं स्यादित्यत आह **विरोधस्येति** । तया अन्यथासिद्धत्वान्न तस्य दूषणत्वमिति भावः । **भिक्षुपादप्रसरणेनेति** । यथा भिक्षुः मार्गे श्रान्तः सन् समीचीनगृहे उषितुं तत्र गत्वा आदावेव शयनस्थलं चेद्याच्यते तदा कोपं कृत्वा न दास्यन्तीत्यभिप्रायेण पादपरिमितप्रदेशमात्रं याचयति । अनन्तरं पादप्रसारणं कृत्वा स्वकार्यं शयनलक्षणं सम्पादयति, एवमेव प्रतिज्ञाविरोधस्य पार्थक्योपपादनलक्षणं स्वकार्यं साधयितुमिच्छुरादौ तावत् स्ववाक्यविरोधस्य सार्थक्यमुपपादयतीत्यर्थः । **यथोक्तमिति** । प्रशस्तपादभाष्य इति शेषः । **अविरोधिग्रहणादिति** । 'अनुमेयोद्देशः अविरोधी प्रतिज्ञे'ति प्रतिज्ञालक्षणे अविरोधिग्रहणादित्यर्थः । अनुष्णोऽग्निरिति प्रत्यक्षविरोधी । घनमम्बरमित्यनुमानविरोधी । ब्राह्मणेन सुरा पेयेत्यागमविरोधी । वैशेषिकस्य प्रागुत्पत्तेः सत् कार्यमिति ब्रुवतः स्वशास्त्रविरोधी । शब्दः अप्रत्यायक इति स्ववचनविरोधी । ते सर्वे अविरोधिग्रहणेन निरस्ता इति भावः ।

**विठ्ठल०—** **अविरोधग्रहणादिति** । अनुमेयोद्देश्याविरोधाप्रतिज्ञेति । प्रतिज्ञालक्षणे अविरोधिग्रहणादित्यर्थः ।

**चषकः—** **यथोक्तमिति** । प्रशस्तपादभाष्य इति पूरणीयम् । **अविरोधीति** । अनुमेयोद्देशो अविरोधी प्रतिज्ञेति प्रतिज्ञातलक्षणघटकतया अविरोधिपदोपादानाद्वह्निरनुष्ण इति प्रत्यक्षस्याम्बरं घनमित्यनुमानस्य, 'ब्राह्मणेन सुरा पेये'त्यागमस्य, वैशेषिकस्य प्रागुत्पत्तेः कार्यं सदिति स्वशास्त्रस्य, शब्दो नार्थप्रत्यायक इति स्ववचनस्य विरोधिनो निरस्ता इत्यर्थः ।

**॥ इति एतदर्थे अनुव्याख्यानस्यावतरणं शब्दार्थकथनञ्च ॥**

* * *

**॥ अथ अस्य अनुव्याख्यानस्य तात्पर्यम् ॥**

**१९४ सु०— एतदुक्तं भवति । प्रतिज्ञार्थविरोधो द्वेधा भवति । प्रमाणविरोधः स्ववाक्यविरोधश्चेति । तत्राद्यः प्रबलसमबलप्रमाणविरोधात्मा द्विविधो भवति । द्वितीयोऽप्यप-**





सिद्धान्तजातिभेदेन द्वेधा । जातिश्च स्ववचनविरोधस्वन्यायविरोधस्वक्रियाविरोधभेदेन त्रेधा ।

तत्रास्तां तावत्प्रमाणविरोधः, स्ववाक्यविरोधग्रहणं तावत्पृथक्करणीयम् । तस्याप्यव्याप्त्युत्थापने व्यापारायोगात् । स्ववाक्यविरोधे हि किं साधनस्योभयाभिमत्या (पक्षे) व्यभिचारो भवेत्, किंवाऽन्यतराभिमत्या । नाद्यः, स्ववाक्यप्रामाण्यस्योभयासम्मतेः । न द्वितीयः, तस्य स्वतःसिद्धत्वेन स्ववाक्यविरोधानपेक्षत्वात्, अदोषत्वाच्च । तस्मादविषयवृत्ति(ताहेतु)त्वेन प्रतिज्ञार्थविरुद्धता पृथगेव परिसङ्ख्यातव्येति ।

किञ्चायं न केवलं व्याप्त्यपेक्षप्रवृत्तेरनुमानस्यैव दोषः, किन्नाम तदनपेक्षस्य प्रत्यक्षादेरपि । तथा चान्यत्रोपलब्धसामर्थ्यस्यानुमानेऽपि स्वातन्त्र्यसिद्धिरित्याशयवता प्रस्तावादनुमानमिति वक्तव्ये प्रमाणमित्येवाधिकृतम् ।

**परि०**— कथमेतावता व्याप्त्यनन्तर्भाव इत्यत आह **एतदुक्तमिति** । अयोगादित्युक्तं व्यनक्ति **स्ववाक्यविरोधे हीति** । प्रतिज्ञार्थस्येति योज्यम् । **व्यभिचार इति** । व्याप्त्यभाव इत्यर्थः । **उभयासम्मतेरिति** । पर्वतोऽग्निमाननग्निकश्चेति प्रतिज्ञावाक्यप्रामाण्यस्योभयवाद्यसम्मतेः । तथा तत्र साध्याभाववति हेतुसत्त्वरूपो व्यभिचारो नोभयसम्मत इत्यर्थः । **स्वत इति** । प्रतिवादिनो वादिवाक्ये अनाश्वासेन तदुक्तानुमाने व्याप्त्यभावस्य प्रतिवादिनः सिद्धत्वेनेत्यर्थः । **अदोषत्वाच्चेति** । अन्यतररीत्या पक्षे साध्याभावप्रयुक्तपक्षीयव्यभिचारस्यानुमानमात्रसाधारण्यादिति भावः ।

**यादु०**— **उभयाभिमत्येति** । मे माता वन्ध्या स्त्रीत्वादित्यत्र स्ववाक्यविरोधेन पक्षे साध्याभावस्तावत्सिद्धः । स किमुभयसम्मत्या उत अन्यतरसम्मत्येति प्रश्नाशयः । **अदोषत्वादिति** । अन्यतररीत्या पक्षे साध्याभावेन व्यभिचारस्य सर्वानुमानसाधारण्यादिति भावः ।

**वं०प०**— तदेवोपपादयति **स्ववाक्येति** । **तस्य** अन्यतररीत्या व्यभिचारस्य । **अदोषत्वाच्चेति** । पक्षादन्यत्रान्यतरानैकान्त्यस्य दोषत्वेन पक्षेऽपि तस्य दोषत्वे तस्यानुमानमात्रसाधारणत्वेन तदुच्छेदकत्वापत्त्या न तस्य दोषत्वमिति भावः । **प्रवृत्तेः** प्रवृत्त्युपेतस्य । **दोषः** अव्याप्त्युन्नायकत्वेनेत्यर्थः । **अन्यत्र** प्रत्यक्षे । **स्वातन्त्र्यसिद्धिः** स्वातन्त्र्येण दोषत्वसिद्धिः ।

**कं०रा०**— **अपसिद्धान्त इति** । यद्यप्यपसिद्धान्तस्य पूर्वाचार्यवचनविरुद्धाङ्गीकाररूपत्वेन स्ववाक्यविरोधप्रभेदत्वं तथापि स्ववाक्यविरोधशब्दस्य स्वाङ्गीकृतवाक्यविरोधपरत्वात् पूर्वाचार्यवचनस्यापि स्वाङ्गी-





**कारणम् ।**

**विद्यापरीक्षाया इति शेषः । वाद इत्यनुवर्तते । वादो हि विद्यापरीक्षाकारण-मित्येष्टव्यः, न तु व्यसनितया । तत्फलं त्वन्यत एव जातमिति किं परीक्षया, किं तदङ्गेन वादेनेति ।**

**यादु०— प्रतियोग्यपेक्षयेति** । प्रतिवाद्यपेक्षयेत्यर्थः ।

**वं०प०— अन्यतरस्येति** । वादिप्रतिवादिनोर्मध्य इत्यर्थः । **प्रतियोगी** प्रतिवादी । **तत्फलं** विद्यापरीक्षाफलमुच्चनीचत्वादिकम् । **अन्यतो** लोकप्रवादादितः ।

**कं०रा०—** सिद्धावित्यत्र तच्छब्दस्यावृत्तिं तृतीयान्तत्वषष्ठ्यन्तत्वं चाभिप्रेत्य व्याख्याति **तेनेति** ।

**शे०वा०—** 'तत्सिद्धौ व्यर्थता' इत्यनेन समानविद्यत्वावधारणायां विषमविद्यत्वावधारणायां च वादेन सिद्धायां जल्पादेर्वैयर्थ्यमुच्यत इत्यन्यथाप्रतीतिनिरासाय तद्व्यावर्त्यशङ्काप्रदर्शनपूर्वकं विकल्पं मनसि निधाय वाक्यभेदमाश्रित्य व्याचष्टे **जल्पवितण्डार्थिनोरित्यादिना** । समानविद्यत्वसम्भावनायामित्यनेन तत्सिद्धा-वित्येतावन्मात्रं विभिद्यापेक्षिताध्याहारेण योजितं भवति । **उक्तमेवेति** । 'विद्यापरीक्षापूर्वैव वितण्डा जल्प एव चे'त्यनेनेति शेषः । **तत्सिद्धावितीति** । अनेन व्यर्थताऽन्ययोरिति वाक्ये तत्सिद्धावित्यनुवर्तत इत्युक्तं भवति । **तेनेति** । अनेन तत्सिद्धावित्यत्र तत्पदमावर्तते । तत्रैकं तृतीयान्तं, परं षष्ठ्यन्तमित्युक्तं भवति । यद्वा ननु तत्सिद्धौ व्यर्थताऽन्ययोरित्युत्तरवाक्यमनर्थकम् । न च जल्पवितण्डार्थिनोर्विद्यापरीक्षायां वादेन सिद्धायां किं कार्यमित्याकाङ्क्षापूरकत्वान्न तदिति वाच्यम् । किं कार्यमित्याकाङ्क्षायाः समविद्यत्वसिद्धौ किं कार्यमि-त्यभिप्रायकत्वस्यापि सम्भवेन तत्राप्यनुत्तरत्वेन तत्पूरकत्वायोगादित्यतोऽत्र सम्भावितं विकल्पद्वयं मनसि निधायाद्यं बहिरेव प्रदूष्य द्वितीयपक्षदूषणपरतया मूलं योजयति **जल्पवितण्डार्थिनोरित्यादिना** । अभिप्रायमाह **परीक्षार्थेनेति** । ननु वादेन विना बहुविद्यत्वसिद्धावुपायान्तरस्यैवाभावेनासति तस्मिन्बहुविद्यत्वसिद्धेरेवासम्भवात् तत्सिद्धिमभिलषता तदर्थतया वादस्य तत्र दातव्यतायाः स्वीकार्यत्वात् कथं तत्र तस्यादातव्यत्वाभिधानम्, इत्यतोऽविगीतविद्वत्प्रसिद्धेरपि तदुपायत्वेन वादमात्रस्य तत्रोपायत्वाभावान्नोक्तानुपपत्तिरिति भावेनापेक्षिता-ध्याहारेण तद्योजयति **प्रागिति** । वादोऽपीत्यपिशब्दार्थमाह **किम्विति** । तर्हि वादोऽपि नैवेत्येतावतैवोक्ताप-वादसिद्धेः कारणमित्यनर्थकमित्यतो हेतुसमर्पणार्थत्वान्न तदिति भावेन हेतुपरतया तद्योजयति **कुत इतीति** । कारणमित्येतावता नोक्तशङ्कापरिहार इत्यतोऽपेक्षितपूरणेन वाक्यं योजयति **विद्येति** । अस्तु तर्हि तत्रापि विद्यापरीक्षार्थमेव वादस्य दातव्यतेत्यत आह **तत्फलं त्विति** । विद्यापरीक्षाफलमित्यर्थः । **अन्यत इति** ।





अविगीतविद्वत्प्रसिद्ध्यादित इत्यर्थः । यत्र परीक्षापेक्षा तत्र वादस्यावश्यकत्वेऽपि यत्र न परीक्षापेक्षा तत्र न वादस्यापेक्षेति कुत इत्यत उक्तम् **तदङ्गेनेति** ।

**वा०र०— विकल्पं मनसि निधायेति** । व्यवस्थितपक्षभेदमाश्रित्येत्यर्थः ।

**॥ इति तत्परीक्षायां कृतायां कर्तव्यान्तरम् ॥**

* * *

**॥ अथ वादस्य विद्यापरीक्षाकारणत्वमुपपादयति ॥**

**२०६ सु०— यदुक्तं 'स्पर्धावतोः ख्यात्यादिकामयोर्वादो न सम्भवति, तत्रासत्साधनोत्तरप्रयोगस्य अवश्यमवर्जनीयत्वात्; ततश्च विद्यासाम्यवैषम्यनिर्णयानुपपत्तेरि'ति तत्राह सभेति ।**

## अनु०— सभासभापप्राश्नीकपूर्वस्तु स्पर्धिनामपि ॥ वाद एव

**प्रश्नशब्दात्करोतीत्यर्थे ईकक्प्रत्ययो वक्तव्यः । स्पर्धिनाम्** इति जातौ बहुवचनम् । **एव इत्यस्य युज्यत इत्यध्याहृतेनान्वयः । यतः सभादिपूर्वस्ततः स्पर्धिनामपि वादो युज्यत एवेति । तुशब्दो हेत्वर्थः । सभासभापतिप्राश्निकैर्नियतयोरसत्साधनादिप्रयोगवर्जनसम्भवादिति भावः ।**

**परि०—** ननु प्रश्नशब्दात् ठक्प्रत्यये प्राश्निक इति भाव्यम् । कथं प्राश्नीक इत्युक्तिरत आह **ईकक्प्रत्ययो वक्तव्य इति** । महाकविप्रयोगादिति भावः ।

**यादु०—** ननु तार्किकेत्यादिवत् प्रश्नशब्दात् करोत्यर्थे इक्प्रत्यये प्राश्निकेति वक्तव्यं प्राश्नीकेति कथमुक्तमित्यत आह **ईकक्प्रत्यय इति** । यद्यप्ययं प्रत्ययो न शास्त्रकारोदितस्तथाऽपि तद्धिता इति बहुवचनसामर्थ्यादयमपि प्रत्ययस्तदभिप्रेत एवेति । तेन विचित्रा हि तद्धितगतिरिति सूचनादिति भावः ।

**वं०प०— प्रश्नशब्दादिति** । तथा च प्रश्नशब्दात्तद्धिते ईकक्प्रत्यये क् इत्यस्य 'हलन्त्यमि'ति लोपे भसंज्ञकस्य श्नकारस्थाकारस्य लोपे कित्वात् 'किति चे'ति सूत्रेणादिवृद्धौ प्राश्नीकेति रूपम् । नन्वत्र





प्रेत्यत्रत्यरेफस्य ऋवर्णरूपे सम्प्रसारणे सति पृश्नीकेति स्यादिति चेत् । सत्यम् । 'पृच्छतेः सम्प्रसारणाभावो वाच्यः' इति वार्तिकाददोष इत्यवधेयम् । **सभादिपूर्व इति** । सभापतिप्राश्निकपूर्वकस्तन्नियमित इत्यर्थः । **नियतयोरिति** । सत्साधनदूषणप्रयोग एव कर्तव्य इति सभापतिप्राश्नीकनियतयोर्वादिप्रतिवादिनोरित्यर्थः ।

**कं०रा०**— ननु प्रश्नशब्दात् तत्र नित्युक्त इति ठकि कृते तस्येकादेशे आदिवृद्धौ च प्राश्निकेति वक्तव्ये कथं सभासभापप्राश्नीकेत्युक्तिरित्यत आह **प्रश्नशब्दादिति** । यथा द्वैतीयीकं तार्तीयीकं इत्यभियुक्तप्रयोगात्ती यादीककूस्वार्थे वक्तव्यस्तथा प्राश्नीकेत्यभियुक्ततमेन भाष्यकृता प्रयुक्तत्वात् प्रश्नशब्दात् करोत्यर्थे ईकक्प्रत्ययो वक्तव्य इति भावः । एतच्चोपलक्षणं प्राज्ञादित्वेन स्वार्थिकेण प्रत्यये प्रश्न एव प्राश्नः स एषामस्तीति प्राश्निनः प्राश्नीनामीर्येषां ते प्राश्नीका इत्यपि साधुत्वं द्रष्टव्यम् ।

**श्रीनिधि०— तत्रासत् साधनेति** । **तत्र** स्पर्धावत्प्रवर्तितकथायां **ईकक्प्रत्यय इति** 'तद्धिता' इति ज्ञापकात् तद्धितगतेर्विचित्रत्वादिति भावः । सभाशब्देन प्रवर्त्यमानकथार्थविचक्षणा उदासीना विद्वांस उच्यन्ते । प्राश्निकशब्देन तादृशासाक्षित्वे वृता विद्वांसाः । **सभापः** मूलराजा ।

**शे०वा०**— वादस्य सभासभापतिप्राश्निकपूर्वकत्वोपपादनपरोत्तरवाक्यमनर्थकमित्यतो वादेन विद्यापरीक्षणमिति पक्षोक्तदोषपरिहारार्थत्वान्न तदिति भावेन तत्परिहारकतयोत्तरग्रन्थं सङ्गमयितुं तत्पक्षोक्तदोषमुत्थापयति **यदुक्तमिति** । ननु मृदङ्गवादनं शिल्पं कौशलमस्येति मार्दङ्गिक इत्यादौ मृदङ्गवादनादावुपचरितवृत्तेर्मृदङ्गादिशब्दात् 'तदस्य शिल्पमि'त्यस्मिन्नर्थे 'शिल्पमि'ति सूत्रेण ठकि तस्येकादेशे आदिवृद्धौ च मार्दङ्गिक इत्यादिरूपसिद्धिवत्प्रश्नकरणं शिल्पमस्येति प्राश्नीक इत्यत्रापि प्रश्नकरणे उपचरितवृत्तेः प्रश्नशब्दात् 'शिल्पम्' इत्यनेन ठकितस्येकादेशे आदिवृद्धौ 'यस्येति चे'त्यकारलोपे प्राश्निकेति भवितव्यम्, तत्कथं भाष्ये प्राश्नीकेति दीर्घ इत्यतोऽभिप्रयुक्तप्रयोगसंरक्षणाय तत्र तत्र तद्धिता इति बहुवचनज्ञापितविचित्रतद्धितगत्याश्रयणेनापेक्षितप्रत्ययव्युत्पादनस्य कृतत्वादस्याप्यभियुक्तप्रयोगत्वेन विचित्रतद्धितगत्यैव प्रश्नकरणे उपचरितवृत्तेः प्रश्नशब्दात् तदस्य शिल्पमित्यर्थे ईकक्प्रत्यये सति प्राश्नीकेति रूपनिष्पत्तिरविकलैवेति सत्येव समाधाने 'उभयोः प्रश्नकर्तृत्वात् प्राश्निका इति कीर्तिताः' इति ब्रह्मतर्कमनुसृत्य करोतीत्यर्थे विचित्रतद्धितगत्या ईकक्प्रत्ययमाश्रित्य समाधत्ते **प्रश्नशब्दादिति** । एषैव दिक् सर्वत्रेति ध्येयम् । वाद एवेत्येवशब्दस्य यथास्थितान्वये वैयर्थ्यं वाद इत्येतावन्मात्रस्य साकाङ्क्षत्वेन वाक्याभासप्रसङ्गश्चेत्यतो युज्यत इत्यध्याहारान्न साकाङ्क्षत्वमध्याहृतान्वितस्य एवशब्दस्य परपक्षप्रतिक्षेपसूचकत्वान्न वैयर्थ्यमपीत्याशयेनाध्याहृतान्वयमाह **एवेत्यस्येति** । सभासभापप्राश्नीकपूर्वत्वमुक्तप्रतिज्ञायां हेतुरिति भावेन तथा व्याचष्टे **यत इति** । मूले यत इत्यादेरश्रवणात् कथं हेतुहेतुमद्भावेनान्वय इत्यतस्तुशब्दस्यैव तस्य तत्र हेतुत्वसमर्पकत्वान्नानुपपत्तिरित्याह





**तुशब्द इति** । सभादिपूर्वकस्य हेतुत्वप्रतिपादक इत्यर्थः । तावताऽपि कथं वादपक्षोक्तदोषपरिहार इत्यतोऽभिप्रायमाह **सभेति** ।

**वा०र०— मार्दङ्गिक इत्यादाविति** । आदिपदेन पाठनिकः, वैणविको नारदः इत्यादेर्ग्रहणम् । तत्रापि वैणववादनं वेणुवादनं शिल्पं अस्येति विग्रहो ज्ञेयः । मृदङ्गवादने मृदङ्गशब्दः प्रत्ययं व्युत्पादयतीत्यादिकाशिकां तन्मञ्जरीं चानुसृत्याह **मृदङ्गवादनादाविति** । मृदङ्गवादनविषयं शिल्पमस्येत्याद्यर्थविवक्षणात् सामानाधिकरण्यं सम्भवतीति मञ्जर्युक्तरीत्या ज्ञेयम् । मृदङ्गवादनशब्दात् अनभिधानात् प्रत्ययो न भवति । किन्तु अभिधानात् । उपचरितवृत्तेः मृदङ्गशब्दात् एव । तथा मृदङ्गनिष्पादनं शिल्पं अस्य मार्दङ्गिकः कुम्भकारः इति मृदङ्गशब्दात् उपचरितवृत्तेरपि अर्थान्तरे न भवतीति भावः । **मृदङ्गादिशब्दादिति** । मृदङ्गवादनशब्दात्तु प्रत्ययस्वीकारे मार्दङ्गवादनिकः इत्यादिरूपापत्तिः इति भावः । **शिल्पमिति सूत्रेणेति** । प्रथमासमर्थात् अस्येति षष्ठ्यर्थे ठक्प्रत्ययो भवति । यत्तत् प्रथमासमर्थे शिल्पं नाम कर्म भवतीति सूत्रार्थः । **प्राश्नीकेति दीर्घ इत्यत इति** । अनेन भट्टोजिना प्राश्नीकेति दीर्घोऽनुपपन्नः इत्युक्तमपि विवरणपूर्वकं सङ्गृहीतं भवति । विचित्रा तद्धितगत्याश्रयणेन परिहारस्याबाधितत्वात् शिल्पार्थ एव ईकक्प्रत्ययमनाश्रित्य करोतीत्यर्थे कुतः तदाश्रयणं मूलकारस्य इत्यतो वर्णकान्तरत्वेनैव तदाश्रयणम् । शिल्पार्थे प्रत्ययाश्रयणमपि उक्तरीत्याऽभिप्रेतमेवेत्याह **उपचरितवृत्तेः प्रश्नशब्दादिति** । **विचित्रतद्धितगत्येति** । शक्तियष्ट्योः ईकक् इति सूत्रे शक्तिः प्रगुणं अस्य शक्तिकः इति विहितस्य ईकक्प्रत्ययः प्रश्नेत्येतत् शब्दात् करोतीत्यर्थेऽपि भवति । तद्धिता इति बहुवचनज्ञापिततद्धितविचित्रगत्या शब्दान्तरस्यार्थान्तरस्य चाभ्यनुज्ञानादिति भावः । अत एव 'दित्यदित्यादित्य पत्युत्तरपदाण्ण्य' इत्येतत्सूत्रीयवार्तिकादिबलेन बहिषष्ठीलोपश्च ईकक् च इति बाह्यः बाहीकः इति व्युत्पादितं काशिकादाविति ज्ञेयम् ।

**स०व्र०—** ननु शाब्दिकस्तार्किक इतिवत् करोतीत्यर्थे ईकक्प्रत्यये प्राश्नीक इति भवितव्यम् । प्राश्नीक इति कथम् । न च 'इक्प्रत्यये तथोपपत्तिरिति वाच्यम् । तद्विधायकाभावादिति चेन्न । 'तद्धिता' इति बहुवचनज्ञापितविचित्रतद्धितगत्या प्रश्नशब्दात्करोतीत्यर्थे ईकक्प्रत्ययव्युत्पादनेन दोषाभावादिति भावेनाह **प्रश्नशब्दादिति** ।

**विठ्ठल०—** ननु प्रश्नशब्दात्तत्र नियुक्तमिति ढकि कृते तस्येकादेशे आदिवृद्धौ च प्राश्निकेति वक्तव्ये कथं प्राश्नीकेत्युक्तिरित्यत आह **प्रश्नशब्दादिति** ।

**॥ इति वादस्य विद्यापरीक्षाकारणत्वोपपादनम् ॥**

* * *





**॥ अथ 'वादेन जल्पवितण्डार्थिनोर्नीचोब्वतासिद्धौ जल्पवितण्डयोर्व्यर्थतो'पपादनम् ॥**

२०७ **सु०—** यदुक्तं 'तत्सिद्धौ व्यर्थताऽन्ययोरि'ति तदयुक्तम्, वादेन तत्त्वनिर्णयसिद्धावपि अर्थाद्यसिद्धेः । तथा चाभिलषितं न सिद्धम्, सिद्धं चानभिलषितमिति तत्राह **उभयेति** ।

**अनु०— उभयार्थः स्यान्निर्णीतिजयकारकः ।**

वाद इत्यनुवर्तते । अस्यैव विवरणं **निर्णीति** इति । न केवलं निर्णीतिकारकः किन्तु **जयकारकश्च** । **जयशब्देन** तत्साध्यमर्थ्यादिकमुपलक्ष्यते । विद्यापरीक्षार्थे वादे जयिनोऽर्थादिकमपि सभापतिना सम्पादनीयमिति भावः ।

**कं०रा०— अस्यैवेति** । उभयार्थ इत्यस्यैव विवरणं निर्णीतिर्जयकारक इत्येतदित्यर्थः ।

**शे०वा०—** मूले वादस्योभयार्थत्ववर्णनानर्थक्यमाशङ्क्य 'तत्सिद्धौ व्यर्थताऽन्ययोरि'त्युक्तस्य वैयर्थ्येन जल्पाद्यकर्तव्यत्वस्य वैयर्थ्योपपादनेन समर्थनार्थत्वान्न तदिति भावेन तदुपपादकतया तद्योजयितुं वैयर्थ्यानुपपत्तिशङ्कामुत्थापयति **यदुक्तमिति** । **विवरणमिति** । ततश्च न तद्वैयर्थ्यमिति भावः । निर्णीतिकारकताया वादे सिद्धत्वान्न विधेयत्वमिति तद्विधानानुपपत्तिरित्यतोऽनुवाद्यतया तमंशं योजयति **न केवलमिति** । तथाऽप्यभिलषितमर्थादिकं न सिद्धमिति शङ्काया न परिहार इत्यतो जयशब्दस्य लक्षणयाऽर्थादिपरत्वेन जयमात्रपरत्वाभावाद्युक्तोऽनेन तत्परिहार इत्याह **जयशब्देनेति** । लक्षणबीजभूतशक्यसम्बन्धमाह **तत्साध्येति** । ननु वादस्य तत्त्वनिर्णयसाधनत्वोपपत्तावपि कथमर्थादिपरत्वमित्यतः तदुक्तेरभिप्रायमाह **विद्यापरीक्षार्थ इति** ।

**वा०र०— व्यर्थतेति** प्रतीकोपादानपाठः ।

**॥ इति 'वादेन जल्पवितण्डार्थिनोर्नीचोब्वतासिद्धौ जल्पवितण्डयोर्व्यर्थतो'पपादनम् ॥**

* * *

**॥ अथ वितण्डाजल्पयोर्विशेषफलान्तरम् ॥**

२०८ **सु०—** ''एवं तर्हि न कदाऽपि जल्पवितण्डाप्रवृत्तिः, 'व्यर्थताऽन्ययोरि'ति युक्तेः सम(ान)त्वात् । यथा हि विद्यावैषम्यनिर्णये जितवतोऽर्थादिलाभः, तथा तत्साम्ये द्वयोरपि





अर्थादिलाभः सम्भवत्येव । न च फलान्तरमस्ति येन पुनर्जल्पवितण्डारम्भः स्यादि''त्यत आह **तत्त्वाप्रकाश एवेति ।**

**अनु०— तत्त्वाप्रकाश एवैको वितण्डाजल्पयोः फलम् ॥**

**तत्त्वाप्रकाश** इति परवञ्चनसामर्थ्यमुच्यते । तेन तत्साध्योऽर्थादिलाभो लक्ष्यते ।

इदमुक्तं भवति । यद्यपि विद्यासाम्यवैषम्ययोर्निर्णीतिजयौ स्याताम्, तथाऽपि तात्त्विककथाफलरूपावेव । पराच्छादनचातुर्यप्रयुक्तार्थादिलाभार्थं समानविद्ययोः पुनर्जल्प-वितण्डाप्रवृत्तिरिति । न चैवं विषमविद्ययोरपि तत्प्रवृत्तिः, उपप्लवप्रसङ्गस्योक्तत्वादिति ।

यद्वा तत्त्वनिर्णयफलो वादः, अर्थादिफले जल्पवितण्डे, इति फलभेदेन कथाभेद उक्तः; सोऽनुपपन्नः । तथा सत्यर्थादीनां भेदेन कथाऽऽनन्त्यप्रसङ्गादित्यत आह **तत्त्वेति ।** यद्यपि अर्थादयोऽवान्तरभेदभिन्नास्तथाऽपि तत्त्वाप्रकाश एक एव वितण्डाजल्पयोः फलम् । तत्त्वनिर्णयेतरत्वरूपेणार्थादीनामेकत्वान्नोक्तदोषः । तदवान्तरभेदविवक्षा तु व्यर्थैव इति भावः ।

**परि०— निर्णीतिजयौ** इत्यत्र निर्णीतिपदस्योच्चत्वनीचत्वनिर्णीतिरित्यर्थः । **उपप्लवेति ।** प्राश्निकानामसुज्ञत्वं प्रत्यवायश्च स्यादित्युक्तत्वादित्यर्थः ।

**यादु०— उपप्लवेति ।** प्राश्निकादीनामसुज्ञत्वं प्रत्यवायश्च स्यादित्युक्तत्वादित्यर्थः ।

**वं०प०—** ननु यथा वादेन समविद्यत्वसिद्धौ तत्प्रयुक्तार्थादिलाभेऽपि परवञ्चनादिचातुर्यप्रयुक्तार्थादि-लाभाय पुनर्जल्पवितण्डे देये इत्युच्यते तथा पूर्वं वादेन विषमविद्यात्वसिद्ध्या एकस्य बहुविद्यात्वप्रयुक्ता-र्थादिलाभेऽपि पुनः परवञ्चनादिचातुर्यप्रयुक्तार्थादिलाभार्थं पुनस्तेनापकृष्टेन जल्पादिना घटतामित्यत आह **न चैवमिति । उक्तत्वादिति ।** यद्यपकृष्टो वस्तुतो विद्ययाऽसमोऽपि परवञ्चनादिकरणे चतुरस्तर्हि तेन घटमान उत्कृष्टो दैवात्तेन पराजितः स्यात् तर्हि जितवतस्त्वपकृष्टस्य द्रव्यादि सभापत्यादिभिर्दापनीयमेव । ततश्च तत्पूजाकरणे 'अपूज्यः पूज्यते यत्र पूज्यो यत्र न पूज्यते । त्रीणि तत्र भविष्यन्ति दुर्भिक्षं मरणं भयमि'त्यनेन प्रत्यवायस्योक्तत्वान्न तयोः पुनर्जल्पादिरिति भावः । **अर्थादीनां भेदेनेति** हिरण्यवस्त्रपश्वादीनां भेदेनेत्यर्थः ।

**कं०रा०— उपप्लवेति ।** अत्यन्तापकृष्टोऽप्युत्कृष्टतमेन वैयात्यात् सङ्घटमानो यदि दैत्यमभिभावये-द्वथाख्यातिं वा लभेत तदा प्राश्निकादीनामसुज्ञत्वं प्रत्यवायश्च स्यादित्युपप्लवप्रसङ्गस्योक्तत्वादित्यर्थः ।





**अर्थादिफले इति** । यद्यपि जल्पोऽर्थादि व्यपेक्षयेति जल्पस्यैवार्थादिकत्वमुक्तं न वितण्डायास्तथापि जल्पलक्षणे सतामेवेत्येवकारस्य वितण्डाव्यावृत्त्यर्थत्वेनोपात्ततया अर्थाद्वितण्डाया अप्यर्थादिफलत्वमुक्तमिति ध्येयम् ।

**श्रीनिधि०**— तथापि तात्त्विककथाफलरूपावेवेति । अनेनैव शब्दसम्बन्धः उक्तो भवति । **तदवान्तरभेदेति** । अर्थस्य योऽयमवान्तरभेदः रत्नधान्याश्वादिरूपः स इत्यर्थः ।

**शे०वा०**— विद्यापरीक्षापूर्वैवेत्यादिनोक्तस्य विद्यासाम्यनिर्णयजल्पादिकर्तव्यत्वस्य समर्थनार्थत्वान्नोत्तरग्रन्थवैयर्थ्यमित्यभिप्रेत्य प्रापकाभावेन तदाक्षेपस्यैवानुत्थानात् किं समर्थनेनेत्यत आक्षेपहेतुभूतयुक्त्युपन्यासेन तदुपपादयन्नेव तत्समर्थनपरतयोत्तरग्रन्थं योजयति **एवं तर्हीति** । **कदाऽपीति** । समानविद्यत्वनिश्चयदशायामपीत्यर्थः । वैषम्यसिद्धावकर्तव्यता तु तवापि सम्मतेति भावः । विद्यासाम्यनिश्चयदशायां कुतो न तत्प्रवृत्तिरित्यतो विद्यावैशम्यनिश्चये जल्पादेरकर्तव्यत्वसाधकयुक्तिबलादेवेत्याह **व्यर्थतेति** । युक्तेः समतामेवोपपादयति **यथा हीति** । **न चेति** । भावे च तदर्थमेव विषमविद्ययोरपि प्रवृत्तिप्रसक्तेर्व्यर्थताऽन्ययोरिति तदकर्तव्यत्वोक्तिरनुपपन्नेति भावः । **न चेति** । यथा हि विद्यासाम्यनिर्णये तात्त्विककथाफलरूपनिर्णीतिजयसिद्धावपि पराच्छादनचातुर्यप्रयुक्तार्थादिलाभार्थं समानविद्ययोः पुनर्जल्पवितण्डारम्भ इष्यते । तथा वैषम्यनिर्णये जयिनस्तात्त्विककथाफलरूपनिर्णीतिजयसिद्धावपि पराच्छादनचातुर्यप्रयुक्तार्थादिलाभार्थं विषमविद्ययोरपि पुनर्जल्पवितण्डाप्रवृत्त्युपपत्तेस्तदकर्तव्यत्वोक्तिरयुक्तेति न च वाच्यमित्यर्थः । **उपप्लवेति** । असुज्ञत्वप्रत्यवायरूपोपप्लवेत्यर्थः । **उक्तत्वादिति** । अत्यन्तापकृष्टोऽप्युत्कृष्टतमेन वैयात्याद्धटमानो यदि दैवात् तमभिभावयेद्यदि वा वृथा ख्यातिं लभेत तदा प्राश्निकानामसुज्ञत्वं प्रत्यवायश्च स्यात् । अपूज्यः पूज्यते यत्रेति वचनादित्यादिनेति शेषः । इतीत्यस्येदमुक्तं भवतीति पूर्वेण सम्बन्धः । उक्तयोजनायां तत्त्वाप्रकाशपदस्य लक्षणप्रसङ्गादेक इत्यस्य चानर्थक्यात् तदुभयस्वारस्याय पक्षान्तरमाह **यद्वेति** ।

**स०व्र०**— **उपप्लवेति** । 'अपूज्यः पूज्यते यत्र' इत्यादिनोक्तत्वादित्यर्थः ।

**विठ्ठल०**— ननु तथापि नोक्तशङ्कापरिहारः । जल्पादिफलत्वेनोक्तार्थलाभस्यापि विद्यापरीक्षासाम्यतया वैयर्थ्यापरिहारादित्यतोऽधिकद्रव्यादिलब्ध्यर्थतया न व्यर्थतेत्याह **इदमुक्तं भवतीति** । **निर्णीतजयौ स्यातामिति** । अत्रत्य निर्णीतिशब्द उच्चनीचत्वनिर्णयपरः । जयशब्दोऽर्थाद्युपलक्षण इति द्रष्टव्यम् । **उपप्लवेति** । अपकृष्टेनोपकृष्टस्य पराजयादिप्राश्निकादीनामज्ञत्वादिकं स्यादित्युक्तत्वादित्यर्थः ।

**॥ इति वितण्डाजल्पयोर्विशेषफलान्तरम् ॥**

* * *





**॥ अथ वादेन विना विद्यापरीक्षणे कर्तुं शक्ये सति जल्पादिभिरपि तत्परीक्षा स्यात् ॥**

२०९ **सु०—** एवं कथया विद्यापरीक्षणमिति पक्षः समर्थितः । इदानीमन्यथेति पक्षमपि समर्थयमान आह **विनेति ।**

**अनु०— विना वादेन विद्याया यदि शक्यं परीक्षणम् ।**
**स्याज्जल्पादिरपि क्वापि**

अविगीतविद्वत्प्रसिद्ध्यादिनेति शेषः । **क्वापि** इत्यस्य पूर्वार्धेनान्वयः । तदा समविद्ययोः प्रथमम् **अपि जल्पादिः** कथाविशेषः कार्यः **स्यात्** इत्यर्थः ।

तर्हि **विद्यापरीक्षणं वादेनै**वेत्युक्तिविरोध इत्यत आह **वाद एवेति ।**

**वाद एवान्यथा भवेत् ॥**

"**वाद एव प्रथमं कर्तव्यो भवेदि**'ति यदुक्तं **तद् अन्यथा** वादेन विना विद्या**परीक्षणस्य कर्तुमशक्यत्व एव** अतो न विरोध इति ।

**परि०—** जल्पादिरित्यस्य पुल्लिङ्गनिर्वाहायाह **कथाविशेष इति ।**

**कं०रा०— क्वापीत्यस्येति** । स्याज्जल्पादिरपि क्वापीत्युत्तरार्धस्थस्य क्वापीत्यस्य क्वापि वादेन विना अविगीतविद्वत्प्रसिद्ध्यादिना **विद्यायाः** परीक्षणं यदि शक्यमिति **पूर्वार्धेऽ**न्वय इत्यर्थः । तदा समविद्ययोः प्रथमं कार्यमित्येषामध्याहारेण **स्याज्जल्पादि**रपीत्युत्तरवाक्यं योजयति **तदेति** । वाद एवान्यथा भवेदिति वाक्यं प्रथमं कर्तव्य इति यत् उक्तं तत् इत्येतेषामध्याहारम् एवशब्दस्यावृत्तिं चाश्रित्य योजयति **वाद एवेति** ।

**शो०व्या०—** **विना** वादेनेत्युत्तरग्रन्थानर्थक्यमाशङ्क्य कथातोऽन्यथा विद्यापरीक्षणमिति द्वितीयपक्षमभ्युपगम्य तत्रोक्तदोषपरिहारार्थत्वान्न वैयर्थ्यमिति भावेन **वृत्तानुवादपूर्वकं** तथोत्तरग्रन्थं योजयति **एवमिति** । क्वापीत्यनेनाविगीतविद्वत्प्रसिद्ध्यादिना विद्यासाम्यसिद्धावपि **जल्पादिरूपः कथाविशेषः** क्वचित्कार्यः क्वचिन्नेत्युच्यते, तच्चानुपपन्नम् ॥ **उक्तरीत्या** विद्यापरीक्षणसिद्धावपि **जल्पादे**रकर्तव्यतायां नियामकाभावात् । अन्यथा वादेन विद्यापरीक्षासिद्धावपि **जल्पादि**कथाविशेषस्य क्वाचित्कत्वापातादित्यतो न 'क्वापी'त्यस्योत्तरार्धेऽन्वयेन जल्पादिकथाविशेषस्य क्वाचित्कत्वाभिधायकत्वमभिमतं किन्नाम पूर्वार्धेऽन्वयेनाविगीतविद्वत्प्रसिद्ध्यादिना विद्या-





परीक्षणं न सार्वत्रिकं किन्तु क्वाचित्कमेवेति तत्क्वाचित्कत्वाभिधायकत्वमेवेति नानुपपत्तिरिति भावेनाह **क्वापीत्यस्येति** । ननु वादेन विद्यापरीक्षणेऽपि जल्पादेः कार्यत्वाविशेषादविगीतविद्वत्प्रसिद्ध्यादिना तत्परीक्षणे जल्पादिः कार्यः स्यादिति विशिष्याभिधानमनुपपन्नमित्यतो नात्र जल्पादिकथाविशेषस्य कार्यत्वमात्रं प्रतिपाद्यते येनासाधारण्येनोक्तिवैयर्थ्यं स्यात् किन्नाम प्रथमपदाध्याहारेण **प्रथमं** कार्यत्वं तच्च वादेन विद्यापरीक्षणपक्षे जल्पादेर्नास्तीति विशिष्योक्तिर्युक्तेत्याशयेनाध्याहारेण योजयति **प्रथमममपीत्यादिना** । अनेन न केवलं वादेन समानविद्यत्वसिद्धौ सत्यां वादोत्तरं जल्पादेः कार्यत्वं किन्त्वविगीतविद्वत्प्रसिद्ध्यादिना समविद्यत्वसिद्धौ सत्यां प्रथममपि जल्पादिः कार्य इत्यर्थसूचनात् समुच्चेतव्यानुपपत्तिप्रयुक्तद्वैयर्थ्यशङ्का निरस्ता भवति । **तर्हीति** । यद्यपि वादेनैव विद्यापरीक्षणमित्युक्तिरेव नास्तीति न तद्विरोधिशङ्कावकाशस्तथाऽप्यन्वयव्यतिरेकवर्णनेन सिद्धस्यार्थस्यायमनुवाद इति ध्येयम् ।

**वा०२०— क्वाचित्कत्वापातादित्यत इति** । ततश्च तत्सिद्धौ इत्यनुभाष्यमूलविरोध इति भावः ।

* * *

**॥ अथ वादेन विना विद्यापरीक्षणे कर्तुमशक्ये सत्येव**
**'वादेनैव परीक्षणम्' इति नियमः ॥**

२१० सु०— अस्त्वेवमुपायान्तरविरहे कथयैव विद्यापरीक्षणम् । सा तु वाद इति कुतः । तत्त्वनिर्णयार्थिनोरधिकारित्वात्तत्फलत्वाच्चेति चेत् (न । एवं), तर्हि विजिगीषावतोरधिकारित्वादर्थादिफलत्वात्सभाद्यङ्गोपेतत्वाज्जल्पोऽपि स्यादिति ।

किमत्र जल्पशब्दवाच्यतामात्रमापाद्यते, किंवा वादशब्दवाच्यताऽभावः, अथवा समाहाररूपं कथान्तरं, यद्वा निमित्तद्वयसमावेशो वादशब्दस्यैव व्यवहारानुपपत्तिः । सर्वत्राप्युत्तरमाह **जल्प इति** ।

## अनु०— जल्प इत्यपि नाम स्याद्वादस्यैतादृशस्य तु ।

**एतादृशस्य** निमित्तद्वयोपेतस्यात्र **जल्प इति नाम** स्यादित्यभ्युपगमेनाद्यो निरस्तः ।

**अपि**शब्देन वादशब्दवाच्यतां प्रतिज्ञाय **एतादृशस्य** इत्यनेन हेतुरुक्तः, तेन द्वितीयोऽपि निराकृतः । न हि निमित्तसद्भावे वाचकाप्रवृत्तिरिति युक्तम्, जल्पशब्देऽपि साम्यात् । अतस्तुलायां प्रमाणप्रमेयशब्दवदुभयशब्दवाच्यत्वमिति ।





**तृतीयोऽप्यनेनैव निराकृतः । अन्यथा तुलाऽपि प्रमाणादितो विधान्तरवती स्यात् ।**

**'वादस्य जल्प इत्यपि नाम स्यादि'ति वादसंज्ञा तु मुख्या जल्पसंज्ञा त्वमुख्येति सूचितम् । तेन चतुर्थोऽपि निरस्तः ।**

**तत्र हेतुविशेषसद्भावं तुशब्देन द्योतयति ।**

**तथा हि यद्यपि कथकावादितो विजिगीषू तथाऽपि सभ्यादिभिर्विजिगीषां परिभाव्योत्पादिता तत्त्वनिर्णयार्थितैव कथोपयोगिनी । अर्थादिलाभश्चान्तरा प्राप्तो न त्वादित एवोद्दिष्ट इत्यमुख्य एव । अत एव पूर्वम् उभयार्थः स्यादित्युक्ते साम्य-प्रतीतिप्रसक्तौ निर्णीतिजयकारक इति तत्त्वनिर्णीतेः प्राधान्यप्रदर्शनार्थं विवरणं कृतम्, अन्यथा कथाफलद्वयस्यैवोभयशब्देन प्रतीतेर्विवरणं व्यर्थं स्यात् ॥ अल्पाच्तरमिति लक्षणस्य व्यभिचारं कुर्वाणेनाप्येतदेव सूचितम्, अन्यथा जयनिर्णीतिकारक इत्यवक्ष्यत् ॥ सभ्यादिसंवरणं च विजिगीषुतापरिभवार्थमिति वादताप्राधान्यमेवोपोद्बलयतीति ।**

**परि०**— शङ्कते **अस्त्वेवमित्यादिना जल्पोऽपि स्यादितीत्यन्तेन** । हेतुरुक्त इति । वादपदवाच्यत्वे निमित्तसत्त्वरूपहेतुरुक्त इत्यर्थः । **अन्यथा तुलापीति** । प्रमाणप्रमेयसमाहार-रूपपदार्थः स्यादित्यर्थः । योगरूढेर्विधान्तरत्वप्रकारस्तु प्रागेवानुमानिकपादे तर्कताण्डवे च व्यक्तः । अत एवैतत्प्रतिबन्द्या न तत्र विधान्तराभावः शङ्क्यः । **तेन चतुर्थोऽपीति** । वादसंज्ञाया मुख्यत्व-कथनेन वादशब्दस्यैव व्यवहारानुपपत्तिरिति पक्षो निरस्त इत्यर्थः । मुख्यस्यैव व्यवहर्तव्यत्वादिति भावः । **तत्रेति** । वादशब्दस्य मुख्यसंज्ञात्वे जल्पशब्दस्यामुख्यत्वे चेत्यर्थः ।

**यादु०— अन्यथा तुलाऽपीति** । न चैवं योगरूढिसमाहारोऽपि विधान्तरं न स्यादिति वाच्यम् । तत्र परस्परसापेक्षतया विशिष्टार्थबोधनरूपैकप्रयोजनकत्वेन विधान्तरत्वेऽपि तुलायाः प्रमाणप्रमेयत्वयोः परस्परनिरपेक्षत्वेन विलक्षणप्रयोजनद्वयसम्पादकतया विधान्तरत्वकल्पकाभावात् । अन्यथा असिद्धिबाध-समाहारस्यापि तथात्वापत्तेरिति भावः । **तेन चतुर्थोऽपीति** । मुख्यस्यैव व्यवहर्तव्यत्वादिति भावः । **तत्रेति** । वादसंज्ञाया मुख्यत्व इत्यर्थः ।

**वं०प०— विजिगीषावतोः** वस्तुगत्येति शेषः । **अन्यथा तुलापीति** । प्रमाणप्रमेयसंशय-प्रयोजनेत्यादिरूपेण परिगणनापत्तेरित्यर्थः । यद्यप्यत्र प्रत्यक्षादेरपि प्रमाणत्वात् प्रमेयत्वाच्च तदुदाहरणं कर्तव्यं





तथाऽप्येतादृशे वादे जल्पतासद्भावेऽपि तद्व्यवहाराभावस्य विवक्षितत्वेन तुलायां प्रमाणत्वसद्भावेऽपि तद्व्यवहाराभावेन तादृशस्यैवोदाहर्तव्यत्वात् । न हि प्रत्यक्षादि तादृशमित्याशयः । नन्वत्र योगरूढिवत्तत्त्वनिर्णयार्थित्वविजिगीषुत्वादिरूपनिमित्तद्वयोपेतं समाहाररूपं कथान्तरं किन्न स्यादिति चेन्न । **वैषम्यादिति** । तत्र योगरूढ्योः परस्परं सापेक्षताऽस्ति । न ह्यत्रैवमस्ति । अन्यथाऽसिद्धिबाधसमाहारोऽप्यपरो हेत्वाभासः स्यादित्युक्तम् । **वादसंज्ञा मुख्येति** । वादस्य जल्प इत्यपि नाम स्यादिति वादस्यादितो निर्देशेनेत्यर्थः । **एतेनेति** । वादसंज्ञाया एव मुख्यत्वेन मुख्यस्यैव व्यवहर्तव्यत्वादिति भावः । **मुख्येति** । वादस्येति वादस्यादितो निर्देशेनेत्यर्थः । **अत एव** तत्त्वनिर्णयस्य मुख्यफलत्वादेव । सभ्यादिसंवरणं च वादप्राधान्यमेवोपोद्बलयतीत्यन्वयः । किमर्थमित्यतस्तत्र हेतुः **विजिगीषुतापरिभवार्थमिति । वादता** तत्त्वनिर्णयार्थित्वरूपं वादशब्दप्रवृत्तिनिमित्तं, तत्प्राधान्यमित्यर्थः । सभ्यादयो विजिगीषुतां परिभाव्य यतस्तत्त्वनिर्णयार्थितामुत्पादयन्ति ततस्तदेव प्रधानमिति भावः ।

**कं०रा०— एतादृशस्येति** । एतादृशस्येत्यनेन वादशब्दवृत्तिनिमित्तसद्भावरूपहेतुरुक्त इत्यर्थः । **तत्रेति** । विद्यापरीक्षार्थवादे जल्पसंज्ञाया अमुख्यत्वे हेतुविशेषसद्भावं तुशब्देन द्योतयतीत्यर्थः । **अमुख्य एवेति** । जल्पशब्द इति शेषः । साम्यप्रतीतिप्रसक्ताविति तत्त्वनिर्णीत्यर्थादिलाभयोरिति शेषः । **प्राधान्येति** । उद्देशत्वप्रदर्शनार्थमित्यर्थः । **अन्यथेति** । निर्णीतिर्जयकारक इत्युभयार्थत्वविवरणस्य तत्त्वनिर्णीतः प्राधान्यप्रदर्शनार्थत्वाभाव इत्यर्थः । **अल्पाच्तरमिति** । अल्पाच्तरं शब्दरूपं द्वन्द्वे पूर्वं प्रयोज्यमिति लक्षणविहितं जयशब्दस्य प्राक्प्रयोगमकृत्वा निर्णीतिजयकारक इति तस्य परतः प्रयोगं कुर्वाणेनापि तत्त्वनिर्णीतेः प्राधान्यमेव सूचितं तत्प्राधान्यविवक्षायां ह्यभ्यर्हितं चेति तत्त्वनिर्णीतिशब्दस्य प्राक्प्रयोगो युज्यत इति भावः । **अन्यथेति** । तत्त्वनिर्णीतेः प्राधान्यविवक्षाविरहेऽभ्यर्हितं चेत्यस्याऽप्रवृत्तेरल्पाक्षरमित्यस्यैव च प्रवृत्तेर्जयनिर्णीतिकारक इत्येवावक्ष्यदित्यर्थः । ननु विद्यापरीक्षार्थकथायाः सभ्यादिवरणपूर्वकत्वेन जल्पत्वं मुख्यमिति ज्ञायत इत्यत आह **सभ्यादीति** ।

**श्रीनिधि०—** एतादृशस्येत्यनेन **हेतुरुक्त इति** । तत्त्वनिर्णयार्थ्याद्यधिकारित्वं तत्फलत्वरूपप्रवृत्तिनिमित्तवत्वरूपहेतुरित्यर्थः । **विवरणं कृतमिति** । निर्णीतिजयेत्यनेन उभयार्थेत्येतद्विवृतमित्यर्थः । **व्यर्थं स्यादिति** । व्यर्थं सदर्थान्तरं गमयतीति भावः । **लक्षणव्यभिचारमिति** । निर्णीतेः प्राधान्याविवक्षायां अल्पाच्तरमिति लक्षणव्यभिचारो दोषः स्यात् । प्राधान्यविवक्षायां तु न दोषः । अभ्यर्हितं पूर्वमिति तदपवादलक्षणान्तराश्रयणादिति भावः । **प्राधान्यमेवोपोद्बलयतीति** । तत्त्वनिर्णीतिरिति शेषः । वदतेति पाठे अयं शेषः । वादतेति पाठे तु न कर्तव्यः ।

**शे०वा०—** ननु जल्प इत्यपीत्युत्तरवाक्यमनर्थकम् । न च विद्यापरीक्षार्थकथाया वादत्वसमर्थनार्थं तदिति वाच्यम् । तत्रानुपपत्तेरभावेन तत्समर्थनस्यैवाकर्तव्यत्वात् । न च जल्पत्वप्रसङ्ग एव तत्र बाधक इति





वाच्यम् । प्रसञ्जकाभावेन तदप्रसक्त्या तस्य बाधकत्वायोगादित्यतस्तत्प्रसङ्गनिवर्तकतयोत्तरवाक्यं योजयितुं प्रसञ्जकप्रदर्शनेन तत्प्रसङ्गशङ्कामुत्थापयति **अस्त्वेवमिति** । ननु जल्प इति नाम स्यादित्येतावतैव जल्पत्वप्रसङ्गस्येष्टापादनत्वोक्त्या तत्प्रसङ्गनिराससिद्धेरितरांशस्य वैयर्थ्यम् । न च वादत्वोपपादनार्थं तदिति वाच्यम् । जल्पत्वप्रसङ्गनिरासावसरे तस्याकर्तव्यत्वादित्यतो जल्पत्वं स्यादित्यस्य जल्पत्वापादन इव वादत्वं न स्यादित्यत्रापि तात्पर्यसम्भवान्न वादत्वोपपादनानर्थक्यमिति भावेन जल्पत्वं स्यादिति शङ्कावाक्यात् सम्भावितत्तया प्रसक्तसकलपक्षनिरासकतयोत्तरवाक्यं सङ्गमयितुं तन्निवर्त्यान् सम्भावितत्तया शङ्कावाक्यात्प्रसक्तान्विकल्पान् दर्शयति **किमत्रेति** । **समाहारेति** । वादजल्पसमाहारेत्यर्थः । **निमित्तद्वयेति** । वादजल्पशब्दप्रवृत्तिनिमित्तद्वयेत्यर्थः । अत्रैतादृशस्येत्यस्य जल्पशब्दप्रवृत्तिनिमित्तोपेतत्वार्थकत्वे अपिशब्दसमुच्चितवादशब्दस्य वाच्यतायां हेत्वनुक्तिप्रसङ्गात् वादशब्दप्रवृत्तिनिमित्तोपेतत्वार्थत्वे च जल्पशब्दप्रवृत्तिनिमित्तवत्त्वानुपादानेन तदापादनत्वासिद्धिप्रसङ्गान्नान्यतरमात्रार्थत्वं तस्य युक्तमित्याशयेनोभयपरतया तद्व्याचष्टे **एतादृशस्येति** । ननु कथमस्य पक्षचतुष्टयनिरासकत्वमित्यतः अंशभेदेनेत्यभिप्रेत्य तद्भेदेन तन्निरासप्रकारं दर्शयति **अत्रेति** । **हेतुरिति** । वादशब्दप्रवृत्तिनिमित्तसद्भावरूप इत्यर्थः । **तेनेति** । वादशब्दवाच्यत्वं प्रतिज्ञाय तच्छब्दप्रवृत्तिनिमित्तसद्भावरूपहेतुकथनेनेत्यर्थः । **निरस्त इति** । वादशब्दावाच्यत्वं न स्यादित्येवंरूपस्येति भावः । ननु वादशब्दप्रवृत्तिनिमित्तसद्भावेऽपि तच्छब्दवाच्यत्वं माऽस्तु विपक्षे बाधकाभावादित्यप्रयोजकत्वमाशङ्क्य तर्ह्युक्तन्यायेन जल्पशब्दप्रवृत्तिनिमित्तसद्भावस्यापि तच्छब्दावाच्यत्वेऽप्युपपत्त्या अप्रयोजकत्वप्रसङ्गाज्जल्पशब्दवाच्यत्वसिद्धिरपि न स्यात् । तत्र निरुपाधिकसहचारादेरेव विपक्षे बाधकत्वाभिप्राये च प्रकृतेऽपि तस्यैव बाधकत्वान्नाप्रयोजकत्वमित्याशयेनाह **न हीति** । **अत इति** । प्रवृत्तिनिमित्तद्वयसद्भावादित्यर्थः । निमित्तद्वयसद्भावसमावेशेन संज्ञाद्वयसमावेशो न्यायसूत्रोक्तं दृष्टान्तमाह **तुलायां प्रमाणप्रमेयशब्दवदिति** । यदा हि तुलान्तरेण तत्प्रामाण्यं निश्चीयते तदा प्रमेयम् । यदा पुनः सुवर्णगुरुत्वं प्रमापयति तदा प्रमाणमिति निमित्तद्वयसमावेशाद्यथा तुलायाः प्रमाणप्रमयेशब्दवाच्यत्वमित्यर्थः । एतच्च 'प्रमेया च तुला प्रामाण्यवदि'ति न्यायसूत्रभाष्यादौ स्पष्टम् । **तृतीयोऽपीति** । समाहाररूपकथान्तरमिति तृतीयोऽपीत्यर्थः । **अनेनैवेति** । निमित्तद्वयसमावेशस्य तदुभयशब्दवाच्यत्वमात्रप्रापकतया चरितार्थत्ववर्णनेनेत्यर्थः । **निरस्त इति** । अन्यथासिद्धनिमित्तद्वयसमावेशस्य कथान्तरानापादकत्वादिति भावः । **अन्यथेति** । निमित्तद्वयसमावेशस्य तदुभयशब्दवाच्यत्वमात्रप्रापकतया चरितार्थत्वमनभ्युपगम्य वादजल्पसमाहाररूपकथान्तरापादकत्व इत्यर्थः । **तुलाऽपीति** । तत्रापि निमित्तद्वयसमावेशस्य प्रमाणप्रमेयशब्दवाच्यत्वमात्रप्रापकतयाऽचरितार्थताया वक्तुं शक्यत्वान्निमित्तद्वयसमावेशेन तुला प्रमाणप्रमेयरूपविधान्तरं स्यादिति भावः । न चैवं योगरूढिसमाहारोऽपि विधान्तरं न स्यादिति वाच्यम् । तत्र परस्परसापेक्षतया विशिष्टार्थबोधनरूपप्रयोजनकत्वेन विधान्तरत्वेऽपि तुलायाः प्रमाणत्वप्रमेयत्वयोः परस्परनिरपेक्षत्वेन विलक्षणप्रयोजनद्वयसम्पादकतया विधान्तरत्वकल्पकाभावात् । अन्यथाऽसिद्धबाधसमाहारस्यापि दोषान्तरत्वं स्यादित्यवधेयम् । तथाऽप्यत्र चतुर्थपक्षनिरासकं न किमप्यस्तीति कथमनेन तन्निरास इत्यतो वादस्येत्येतदेव तन्निरासकमिति भावेन तद्योजनाप्रदर्शनपूर्वकं तत्सूचितमर्थमाह





**वादस्येति** । **सूचितमिति** । अन्यथा जल्प इत्यपि नाम स्यादेतादृशस्येत्येतावता पूर्तेस्तद्वैयर्थ्यं स्यादिति भावः । मूले तुशब्दानर्थक्यमाशङ्क्य निमित्तद्वयसमावेशे कुतो वादसंज्ञाया मुख्यत्वमिति शङ्कानिरासाय तन्मुख्यत्वे अपेक्षितहेतुविशेषसद्भावद्योतनार्थत्वान्न तदिति भावेन तथा योजयति **तत्रेति** । अनेन मूले तुशब्दो विशेषार्थ इत्युक्तं भवति ।

तुशब्दद्योतितं विशेषसद्भावमेव दर्शयति **तथा हीति** । अर्थादिलाभस्यामुख्यतायां हेतुमाह **अत एवेति** । तस्यामुख्यत्वादेवेत्यर्थः । **अन्यथेति** । न च न विवरणमात्रेण निर्णीतिः प्राधान्यज्ञापनमुपपद्यते । नियामकाभावात् । अन्यथा तत एव जयस्यापि तत्प्रसङ्गादिति वाच्यम् । प्राथम्येन तद्विवरणस्यात्राभिमतत्वेनानतिप्रसङ्गात् । ननु न प्रथमनिर्देशमात्रं प्राधान्यद्योतकमतिप्रसङ्गात् । किन्नाम द्वितीयतया निर्देष्टव्यस्यैव प्रथमं निर्देशः । न चात्र तथाऽस्तीति न प्रथमनिर्देशेन तत्त्वनिर्णयस्य प्राधान्यसिद्धिरित्यतो निमित्तान्तरमाह **अल्पाच्तरमिति लक्षणस्येति** । **अन्यथेति** । पटुगुप्तावित्यत्र 'द्वन्द्वे घी'त्यस्य ईशकृष्णावित्यत्र चाजाद्यदन्तमित्यस्य सावकाशत्वादिन्द्राग्नी इत्यत्र तदुभयप्रसङ्गे विप्रतिषेधे परमिति न्यायेनाजाद्यदन्तेन्द्रशब्दस्य पूर्वनिपातेऽप्यजाद्यदन्तमित्यस्य पूर्वोक्ते अल्पाच्तरमित्यस्य प्लक्षन्यग्रोधावित्यत्र सावकाशत्वात् वागिन्द्रावित्यत्र तदुभयप्रसङ्गे विप्रतिषेधे परमिति न्यायेनाल्पाच्तरस्य वाक्शब्दस्य पूर्वनिपातदर्शनेनाल्पाच्तरशास्त्रस्य तदुभयबाधकत्वस्थित्या निर्णीतिजयकारक इत्यत्राजाद्यदन्तमित्यस्याप्रसङ्गात् द्वन्द्वे घीत्यस्य प्रसङ्गेऽपि परत्वेनाल्पाच्तरमित्यस्य तद्बाधकत्वात् जयनिर्णीतिकारक इत्येवावक्ष्यदित्यर्थः । इदं चाल्पाच्तरमित्यस्य नित्यत्वमभिप्रेत्योक्तम् । वस्तुतो लक्षणहेत्वोः क्रियायाः समुद्राभ्राद्ध इत्यादिषु यथायथं व्यभिचारं कुर्वता सूत्रकृतैवैतत्प्रकरणस्यानित्यत्वज्ञापनादल्पाच्तरमित्यस्यानित्यताया एवाकरे स्थितत्वात् । अल्पाच्तरमित्यस्यानित्यत्वात् शकुनिसूत्रयोरिति साध्विति वदता टीकाकृताऽपि तदनित्यत्वस्यैवाङ्गीकृतत्वाच्चेति द्रष्टव्यम् । अत एवापरितोषान्निमित्तान्तरमाह **सभ्यादिसंवरणं चेति** । वादत्वे सभादिसंवरणानर्थक्यमाशङ्क्य विजिगीषुतापरिभवार्थं तदिति प्रतिपादकतया 'सभासभापप्राश्नीकपूर्वस्तु स्पर्धिनामपी'त्यादिना ग्रन्थेनाचार्यास्तत्त्वनिर्णीतेः प्राधान्यमेवोपोद्बलयन्तीत्यर्थः । क्वचिद्वादताप्राधान्यमेवोपोद्बलयन्तीति पाठः । तत्र सभ्यादिसंवरणं वादतायाः प्राधान्यमेवोपोद्बलयतीति सम्बन्धः । कथं सभ्यादिसंवरणस्य तदुपोद्बलकत्वमित्यत उक्तं **विजिगीषुतापरिभवार्थमितीति** । इतिशब्दो हेतौ । विजिगीषुतापरिभवार्थत्वात् तस्येत्यर्थः । जल्पताया अपि प्राधान्ये विजिगीषुतापरिभवार्थं सभ्यादिसंवरणानर्थक्यं स्यादिति भावः ।

**वा०र०— आपादनत्वासिद्धीति** । अत्र सिद्धिशब्दस्य उक्तिपरत्वात् इष्टापादनत्वोक्त्यभावप्रसङ्गात् इत्यर्थः । **न्यायसूत्रोक्तमिति** । गौतमीयद्वितीयाध्यायगत इति शेषः । **भाष्यादाविति** । उक्तस्थलीयेति शेषः । गुरुत्वपरिमाणज्ञानसाधनं तुलाप्रमाणं ज्ञानविषयो गुरुद्रव्यं सुवर्णादि द्रव्यं प्रमेयम् । यदा च सुवर्णादिना तुलान्तरव्यवस्थाप्यते तदा तुलान्तरप्रतिपत्तौ सुवर्णादिप्रमाणं तुलान्तरप्रमेयं इत्येवं भाष्यवार्तिकादौ चेत्यर्थः । रचनानुपपत्तेश्चेत्युत्तरपादीयाद्याधिकरणे प्रपञ्चयिष्यते चेदम् । अन्यथा तुलायाः इत्युत्तरवाक्यानुसारेण विधान्तर-





निरासपरतया स्पष्टमप्रतीतं अनेनेत्युक्तं हेतुं दर्शयति **वाच्यत्वमात्रप्रापकतयेत्यादि** । **परस्परसापेक्षतयेति** । ततश्च योगरूढिसमर्थनावसरे आनन्दमयाधिकरणे प्रागुपपादितं तत एव प्रतिपत्तव्यम् । **प्रथमनिर्देश इति** । प्राधान्यद्योतकमित्येतत् लिङ्गविपरिणामेन प्राधान्यद्योतक इत्यनुवर्तते । **पटुगुप्तावित्यत्रेति** । इदं च आम्नायस्मृतिहृदयेत्येतत् प्रथमपद्यटीकाप्रपञ्चेऽस्माभिरुपपादितं तत एव प्रतिपत्तव्यम् । **तदुभयबाधकत्वेनेति** । द्वन्द्वे धी इत्येतत् बाधकाजाद्यदन्तबाधकस्याल्पाच्शास्त्रस्य द्वन्द्वे धी इत्येतत् बाधकताया अपि कैमुत्य-न्यायासिद्धत्वादिति भावः । उपलक्षणं चैतत् । विश्वामित्रजमदग्नी इत्येतत् द्वन्द्वे धीत्यस्य साक्षाद्बाधकत्वं चास्तीत्यपि ज्ञेयम् । **परत्वेनेति** । उक्तरीत्या उभयथापि परत्वेनेत्यर्थः । वदतेति पाठे वदतेत्यस्य तत्प्रतिपादयता इति योजनया घटनां कृत्वा कर्त्रनुक्तिं परिहरति **आचार्य इति** । ततश्चायं शेष इति भावः । न च वादसम्बन्धिप्रवृत्तिप्रकारेति वाक्ये स इति वाच्यमिति पाठः । स इत्यनेनोत्तरग्रन्थस्य बुद्ध्या विवेकेन परामर्शः । तत् इतीति पाठस्तु लेखकागतः । तदिति सामान्ये नपुंसक इति वाक्यत्वाकारेण ग्रन्थपरामर्शात् नपुंसकपाठेऽपि नानुपपत्तिः इत्यप्याहुः । मुख्यतासिद्ध्यर्थं तदितीत्यत्र तच्छब्देन वादसम्बन्धिप्रवृत्तिप्रकार-वतोपदर्शनपरामर्शः । विप्रतिपन्नकथायाः इति वर्तते । अत्र वादत्वं सिद्ध्यर्थमिति पाठः । मुख्यतासिद्ध्यर्थ-मिति मुख्यपदं अधिकम् । प्राचीनटिप्पणग्रन्थेन च वादत्वस्यैवेत्युत्तरवाक्याभावेन मुख्यतापदघटितपाठस्याव-श्यकत्वेऽपि न च वादत्वस्यैव मुख्यत इत्याद्यधिकग्रन्थयुक्तनूतनटिप्पणपूर्वत्रवादत्वमात्रसिद्धेरेव प्रयोजनतया आशङ्काविषयत्वेनाभिप्रेतताया: सिद्ध्या विशिष्टपाठे समुख्यतापदस्य लेखककृतनाशाभावप्रयुक्तत्वात् । केचित्तु अत्र वादत्वस्य मुख्यतासिद्धिमात्रप्रयोजनतया आशङ्क्यते । उत्तरवाक्ये तु वादत्वस्यैव मुख्यतासिद्धिप्रयोजनतया आशङ्क्यते इति भिन्नविषयकं शङ्काद्वयमित्याहुः । तत्सिद्ध्यर्थकत्वायोगात् इत्यत्र तदित्यनेन प्रकृतम् उपदर्शनं षठ्यन्ततया अनुवर्तते ।

**स०व्र०— तुलाऽपीति** । प्रमाणप्रमेयरूपविधान्तरं स्यादित्यर्थः । न चैवं योगरूढिसमाहारोऽपि विधान्तरं न स्यादिति वाच्यम् । तत्र परस्परसापेक्षयोः योगरूढ्योः विशिष्टार्थबोधकत्वेन विधान्तरत्वेऽपि तुलायाः प्रमाणत्वप्रमेयत्वयोः परस्परनिरपेक्षत्वेन तत्समाहाररूपविधान्तरस्यानङ्गीकर्तव्यत्वात् । अन्यथा असिद्धिबाधसमाहारस्यापि तथात्वापत्तिरिति भावः । **अन्यथेति** । न च विवरणेन न तत्त्वनिर्णीतेरेव प्राधान्यज्ञापनमुपपन्नम् । जयस्यापि तथा सम्भावयितुं शक्यत्वादिति वाच्यम् । प्राथम्येन तद्वचन-स्यात्राभिमतत्वेन तल्लाभसम्भवादिति भावः । **सभ्यादिसंवरणं चेति** । सभ्यादिसंवरणं च वादतायाः प्राधान्यमेवोपोद्बलयतीति सम्बन्धः । कथं तस्य तदुपोद्बलकत्वमित्यत उक्तं **विजिगीषुतापरिभवार्थमिति** ।

**विठ्ठल०—** विद्यापरीक्षार्थकथायामर्थादिव्यपेक्षयेत्युक्तजल्पलक्षणस्य विद्यमानत्वाज्जल्पोऽपि किं न स्यात् इत्याशयेन शङ्कते **अस्त्वेवमिति** । **हेतुरुक्त इति** । निमित्तसद्भावरूपहेतुरुक्त इत्यर्थः । **तुलाया-मिति** । तुलायाः सर्ववस्तुपरिमाणप्रमापकत्वेन प्रमाणशब्दवाच्यत्वं स्वस्याप्यन्यतुलायाः प्रमेयत्वात् तच्छब्दवाच्यत्वं तद्वदिति भावः । **एतेनेति** । मुख्यस्यैव व्यवहर्तृत्वादित्यर्थः । **तत्रेति** । वादसंज्ञाया मुख्यत्व





इत्यर्थः । **अल्पाच्तरमिति** । एतत्सूत्रविहितं जयशब्दस्य प्राक्प्रयोगमकृत्वा तस्य परतः प्रयोगं कुर्वाणेनापीत्यर्थः । वादत्वस्यैव प्राधान्ये सभ्यादिसंवरणं कुत इत्यत आह **सभ्यादिसंवरणमिति** । **वादताप्राधान्यमिति** । वादस्य भावो वादता तस्यां प्राधान्यमित्यर्थः । वदतेति क्वचित्पाठः । तत्र च सभासभापप्राश्नीकपूर्वैस्त्वनेन शेषः ।

**॥ इति वादेन विना विद्यापरीक्षणे कर्तुमशक्ये सत्येव 'वादेनैव परीक्षणम्' इति नियमः ॥**

**॥ इति वादेन विना विद्यापरीक्षणे कर्तुं शक्ये सति जल्पादिभिरपि तत्परीक्षा स्यात् ॥**

* * *

**॥ अथ प्रकारान्तरेण वादस्य मुख्यत्वोपपादनम् ॥**

२११ **सु०—** अपि चाधिकारिभेदादिकं बहिरङ्गतयैव कथाभेदकम्, अन्तरङ्गं तु प्रवृत्तिप्रकार एव, स च वादसम्बन्ध्येवास्यां कथायामस्तीत्यतो वादत्वमेव मुख्यमित्याशयवानाह **प्रतिज्ञेति** ।

## अनु०— प्रतिज्ञामात्रसाध्यत्वमपि स्याद्याज्ञवल्क्यवत् ॥

विद्यापरीक्षार्थायां कथायां क्वापि प्रमेये **प्रतिज्ञामात्रेण** प्रमाणोपन्यासरहितेन वचनेन **साध्यत्वं** प्रज्ञापनीयं स्यात् । कुत एतत् । कत्येव देवा याज्ञवल्क्येति शाकल्येन पृष्टे, (याज्ञवल्क्येन) त्रयस्त्रिंशदिति वचनमात्रेण प्रज्ञापनस्य कृतत्वात् । सा च विद्यापरीक्षार्था कथेत्युपक्रमपर्यालोचनया सिद्धम् । **याज्ञवल्क्य**शब्देन तत्कथोपलक्ष्यते । सप्तम्यर्थे वतिः ।

ततः किमित्यत आह **संवाद इति** ।

## संवादे वादिनोः क्वापि

एवम्भावो हि, **वादिप्रतिवादिनोः संवादे** अन्योन्याप्तताऽऽश्वासे सत्येव स्यात् । तदाश्वासो हि वाद एव सम्भवति न जल्पे, विजिगीषुणाऽपसिद्धान्तादिपरिहारेण सर्वथा प्रमाणप्रश्नस्य कर्तव्यत्वात् । तेनायं वाद एवेति (प्रति)ज्ञायत इति ।





'नन्वेवं तर्हि न विद्यापरीक्षा सम्भवति; प्रमाणोपन्यासे हि तत्समर्थनोपालम्भाभ्यां सा स्यात्, न तु प्रश्नप्रतिज्ञाभ्युपगममात्रेणे'त्यत आह **विवाद इति** ।

## विवादे हेतुरिष्यते ।

**हेतुः इति प्रमाणमात्रोपलक्षणम्, प्रमाणहेतुरिति वा । न ह्येकत्राप्तः सर्वत्राप्त एवेति नियमोऽस्तीति भावः । याज्ञवल्क्येनापि तत्र तत्र प्रमाणोपन्यासः कृत एवेति सकलमनाकुलम् ।**

**परि०**— उत्तरवाक्यमवतारयति **अपि चेति** । आदिपदेन फलभेदग्रहः । **कत्येवेति** । बृहदारण्यके पञ्चमेऽध्याये नवमे शाकल्यब्राह्मणे शाकल्यप्रश्नस्य याज्ञवल्क्येनोत्तरे दत्ते कुत इति प्रमाणप्रश्नमकृत्वा ओमितिहोवाचेत्यङ्गीकारश्रवणादिति भावः । **उपक्रमेति** । जनको ह वैदेह इति अध्यायादिभागे तस्य जनकस्य वैदेहस्य विजिज्ञासा बभूव कःस्विदेषां ब्राह्मणानामनूचानतम इति । 'स ह गवां सहस्रमवरुरोधे'त्यादिना स्वनि(कटमा)केतनमागतानामृषीणां मध्ये को वा अत्यन्तं ज्ञानीति निर्णेतुं गोसहस्रं स्थापयित्वा भवतां मध्ये यो ब्रह्मज्ञानितमः इमाः गाः स गृह्णात्विति जनकेनोक्ते याज्ञवल्क्येन च तद्गोसहस्रे नीते सति कुपितैरन्यैः कथमस्माकं मध्ये भवान् ब्रह्मनिष्ठ इत्युक्त्वा आश्वलादिभिः कृतप्रश्नेषूत्तरितेषु याज्ञवल्क्यस्योच्चत्वनिर्णयात् सा कथा परीक्षार्थेति ज्ञायत इत्यर्थः । **ससम्यर्थे वतिरिति** । याज्ञवल्क्यकथायामिवेत्यर्थः । 'तत्र तस्यैवे'त्यनेन वतिरिति भावः । **एवम्भाव इति** । प्रतिज्ञामात्रेण साध्यस्य प्रज्ञापनीयत्वमित्यर्थः । **अपसिद्धान्तादिपरिहारेणेति** । अपसिद्धान्तमानबाधमानाभावादिदोषमादावनुक्त्वा प्रमाणप्रश्नस्य कर्तव्यत्वादित्यर्थः । अपसिद्धान्तादावादावेवोद्भाविते सति परेण पश्चात् प्रमाणोपन्यासे कृते स्वस्य पराजयस्यैव प्राप्तेरिति भावः । स्वस्यापसिद्धान्तादिपरिहारार्थमित्यर्थः । अस्य वाक्यस्य प्रमाणप्रश्नाकरणे तत्प्रमेयाङ्गीकारप्राप्त्या स्वस्यापसिद्धान्तसंवादादिदोषप्राप्तेरित्यप्याहुः । **याज्ञवल्क्येनापि तत्र तत्रेति** । अत्रैव शाकल्यब्राह्मणे 'तेषु हीदं वसु सर्वं हितं तस्मात्तद्वसव' इत्यादिरूपेण प्रमाणस्योक्तत्वादिति भावः ।

**यादु०— उपक्रमपर्यालोचनयेति** । 'जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे तत्र ह कुरुपाञ्चालानां ब्राह्मणा अभिसमेता बभूवुस्तस्य ह जनकस्य वैदेहस्य विजिज्ञासा बभूव कः स्विदेषां ब्राह्मणानामनूचानतम इति । स ह गवां सहस्रमवरुरोध । दश दश पादा एकैकस्यां शृङ्गयोराबद्धा बभूवुः । तान् होवाच । ब्राह्मणा





भगवन्तो यो वो ब्रह्मिष्ठः स एता गा उदजतामिति । ते ह ब्राह्मणा न दधृषुरथ याज्ञवल्क्यः स्वयमेव ब्रह्मचारिणमुवाचैताः सौम्योदज सामश्रवा इति । ता होदाचकार । ते ह ब्राह्मणाश्चुक्रुधुः कथं नो ब्रह्मिष्ठो ब्रवीतेति । अथ ह जनकस्य वैदेहस्य होताऽऽश्वलो बभूव स हैनं पप्रच्छ । त्वं नु खलु नो याज्ञवल्क्य ब्रह्मिष्ठोऽसीति । स होवाच नमो वयं ब्रह्मिष्ठाय कुर्मो गोकामा एव वयं स्म इति । तं ह तत एव प्रष्टुं दध्रे होताऽऽश्वल' इत्युपक्रमपर्यालोचनयेत्यर्थः । **अपसिद्धान्तादिपरिहारेणेति** । अपसिद्धान्तादिपरिहारेण निमित्तेने-त्यर्थः । तदर्थमिति यावत् । अन्यथा प्रमाणप्रश्नाभावे तत्पक्षाङ्गीकारप्राप्त्याऽपसिद्धान्तापत्तिरिति भावः । यद्वा ननूच्यमानदशाग्राह्यमपसिद्धान्तादिकमेव कस्मान्नोद्भाव्यते किं प्रमाणप्रश्नेनेत्यत उक्तम् **अपसिद्धान्तादीति** । अपसिद्धान्तादेः परिहारो यथा स्यात् तथा वादिनोक्तत्वेनेत्यर्थः । तथा च तदलाभेन प्रमाणप्रश्न एव कर्तव्य इति भावः । नन्वाप्तोक्ते कथं प्रमाणप्रश्न इत्यत आह **न ह्येकत्रेति** । ननु तर्हि कथं याज्ञवल्क्येन सर्वत्र प्रतिज्ञा-मात्रमुक्तमित्यत आह **याज्ञवल्क्येनापीति** । तेषु हीदं वसु सर्वं हितमिति तस्माद्वसवः । यदाऽस्मच्छरीरान्मर्त्या उत्क्रामन्त्यथ रोदयन्ति । तद्यद्रोदयन्ति तस्माद्रुदा इति । ते हीदं सर्वमाददाना यन्ति तस्मादादित्या इत्यादिना तत्र तत्र प्रमेये प्रमाणोपन्यासोऽपि क्वचित्कृत एवेत्यर्थः ।

**वं०प०— अस्यां** विद्यापरीक्षार्थायाम् । **सप्तम्यर्थ इति** । तत्तत्कथायामिवेत्यर्थः । **अभ्युप-गममात्रेणेति** । प्रमाणोपन्यासस्तु नास्तीति भावः ।

**कं०रा०— सा चेति** । याज्ञवल्क्यकथा च विद्यापरीक्षार्थेति जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे तत्र ह कुरुपाञ्चालानां ब्राह्मणा अभिसमेता बभूवुस्तस्य ह जनकस्य वैदेहस्य विजिज्ञासा बभूव कः स्विदेतेषां ब्राह्मणानामनूचानतम इति स च गवां सहस्रमवरुरोध दश दश पादा एकैकस्याः शृङ्गयोराबद्धा बभूवुस्तान् होवाच ब्राह्मणा भगवन्तो यो वै ब्रह्मिष्ठः स एता गां उदजतामिति ते ह ब्राह्मणा न दधृषुरथ ह याज्ञवल्क्यः स्वमेव ब्रह्मचारिणामुवाचैताः सोम्योदज सोमश्रवा इति तान् होदाचकार ते ह ब्राह्मणा चुक्रुधुः कथं नो ब्रह्म भो ब्रवीतेति । अथ ह जनकस्य वैदेहस्य होताश्वलो बभूव स एनं पप्रच्छ त्वन्नु खलु नो याज्ञवल्क्य ब्रह्मिष्ठोसीति सहोवाच नमो वयं ब्रह्मिष्ठाय कुर्मो गोकामा एव वयं स्म इति तं ह तत एव प्रष्टुं दध्ने होताश्वलः याज्ञवल्क्येति होवाच यदिदं सर्वं मृत्युनाप्तं सर्वं मृत्युनाभिपन्नं केन यजमानो मृत्योराप्तिमति मुच्यत इत्याद्युप-क्रमे । याज्ञवल्क्येन ब्रह्मिष्ठपणभूतगोसहस्रग्रहणे कृते तत्प्रयुक्तक्रोधेन याज्ञवल्क्यस्य विद्यापरीक्षार्थमाश्वलादि-ब्राह्मणैर्नानाविधतत्त्वविषयप्रश्नेषु कृतेषु तत्र याज्ञवल्क्येन प्रतिवचनमुक्तमित्यस्यार्थस्य प्रतीतेस्तात्पर्यालोचनया सिद्धमित्यर्थः । उदाहृतोपक्रमवाक्यस्यायमर्थः । विदेहवंशोद्भवो जनको नाम किल बभूव स च बहुदक्षिणा-युक्तेनाश्वमेधादिना ईजे अयजत तत्र तस्मिन् यज्ञे ह विद्वद्बाहुल्येन प्रसिद्धानां कुरूणां पाञ्चालानां च देशानां ब्राह्मणा अभिसमेता बभूवुः तान् दृष्टवतस्तस्य जनकस्य वैदेहस्य कः स्वित् कोऽनुपृषां ब्राह्मणानां मध्ये अनूचानतमोऽतिशयेनानूचानो ब्रह्मिष्ठ इति विजिज्ञासाविशेषेण ज्ञातुमिच्छा बभूव पश्चात्स जनकस्तद्विज्ञानो-





पायभूतं गवां सहस्रं गोष्ठे अवरुरोध तासामेकैकस्या गोः शृङ्गयोः दश दश पादाः सुवर्णफलस्य चतुर्थभागा आबद्धा बभूवुः । शृङ्गयोरिति द्विवचनात् प्रतिशृङ्गं पञ्च पञ्च पादा आबद्धा इत्यर्थः । एवं गा अवरुध्य जनकस्तान्ब्राह्मणान् किल उवाच हे ब्राह्मणाः भगवन्तः पूजार्हा इति सम्बोध्य यो वा युष्माकं मध्ये ब्रह्मिष्ठोऽतिशयेन ब्रह्मज्ञः स एता गा उदजतां स्वगृहं प्रत्युद्गमयत्विति एवमुक्ते ते ब्राह्मणा ह किल न दधृषुः आत्मनो ब्रह्मिष्ठतां प्रतिज्ञातुं धैर्यवन्तो नाबभूवन् अथानन्तरं याज्ञवल्क्यो ह किल स्वं स्वीयमेव ब्रह्मचारिणमन्तेवासिनमुवाच । हे सौम्य सोमश्रवा इति प्लुतिदूरादाह्वानार्थां सोमविधिं श्रुणोतीति सोमश्रवस्तस्य सम्बोधनं सोमश्रवा एता गा उदज अस्मद्गृहं प्रति उदगमयेति एवं गुरुवचः श्रुत्वा ह किल ब्रह्मचारी ता गा उदाचकार आचार्य गृहं प्रति नीतवान् एवं ब्रह्मिष्ठाय निर्दिष्टानां गवामपहाराद्याज्ञवल्क्येन स्वात्मनो ब्रह्मिष्ठता प्रतिज्ञायत इति मन्वानास्ते ह ब्राह्मणाश्चुक्रुधुः क्रोधं कृतवन्तः तेषां क्रोधाभिप्रायमाह **कथमिति** । नोऽस्माकमाद्ये ब्रह्मिष्ठोऽस्मीति कथमयं ब्रवीत कथयेति इतिशब्दोऽभिप्रायकथनसमाप्तिद्योतकः अथ क्रोधानन्तरं ह जनकस्य वैदेहस्याश्वलो नाम होता ऋत्विक् बभूव स ब्रह्मिष्ठाभिमानी राजाश्रयाद् धृष्टः सन् याज्ञवल्क्यं पप्रच्छ हे याज्ञवल्क्य नोऽस्माकमग्रे त्वं नु खलु ब्रह्मिष्ठोऽसि इति प्लुतिर्भर्त्सनार्था अनौद्धत्यं ब्रह्मविदो लिङ्गमिति सूचयन् स याज्ञवल्क्यो ह उवाच वयं ब्रह्मिष्ठाय नमस्कुर्मः किमिति तर्हि ब्रह्मिष्ठपणभूता गावः स्वगृहं प्रापिता इत्यत आह **गोकामा इति** । वयं गोकामास्मो गोग्रहणं कृतवन्त इति याज्ञवल्क्येनोक्ते ततो ब्रह्मिष्ठपणस्वीकरणादेव होताश्वलस्तं याज्ञवल्क्यं प्रष्टुं दध्रे मनो धृतवान् याज्ञवल्क्येति सम्बोध्योवाच इदं सर्वं प्राणिजातं यत् येन मृत्युनाप्तं प्राप्तं न केवलमेतावत् किन्तु मृत्युनाभिपन्नं ग्रस्तं च तस्य मृत्योराप्तिं यजमानः केनोपायेन अति अतिक्रम्य मुच्यत इतीति । **सप्तम्यर्थे वतिरिति** । याज्ञवल्क्यशब्देन तत्कथायामुपलक्षितायां सप्तम्यर्थे वतिप्रत्यये च याज्ञवल्क्यवदित्यस्य याज्ञवल्क्यकथायामिवेत्यर्थ इति भावः । **एवं भाव इति** । विद्यापरीक्षार्थायां कथायां क्वापि प्रमेये प्रतिज्ञामात्रेण ज्ञापनीयत्वमित्यर्थः । **एवं तर्हीति** । विद्यापरीक्षार्थायां कथायां प्रमाणोपन्यासाभाव इत्यर्थः । ननु विवादस्थले प्रमाणमात्रस्योपन्यसनीयत्वात् कथं विवादे हेतुरिष्यत इत्यनुमानमात्रस्योपन्यसनीयत्वोक्तिरित्यत आह **हेतुरितीति** । हेतुरित्ययं शब्दः प्रमाणसामान्योपलक्षको नानुमानमात्रपर इति भावः । **प्रमाहेतुरिति** । विवादे सति हेतुरिष्यत इत्युक्ते विवादनिरासकस्य प्रमाहेतोरेवेष्यमाणत्वयोग्यत्वात् प्रमाहेतुर्लभ्यत इति प्रमाणसामान्यमेव तेनोक्तं भवतीति भावः । ननु विद्यापरीक्षार्थायां कथायां क्वापि प्रमेये प्रमाणोपन्यासरहितवचनेन ज्ञापनीयत्वस्य सत्त्वाद्वादिप्रतिवादिनोरन्योन्याप्तत्वबुद्धिरस्तीत्युक्तम् । तथा चैकत्राप्तत्वेनान्यत्राप्याप्तत्वस्य निश्चिततया तदुक्तिविवादस्यैवाभावात् कथं विवादे हेतुरिष्यत इत्युक्तिरित्यत आह **न हीति** । तथा चैकत्राप्तत्वेनान्यत्राप्याप्तत्वनिश्चयायोगात् तत्र विवादसम्भवेन विवादे हेतुरिष्यत इत्येतद्युक्तमिति भावः । **याज्ञवल्क्येनापीति** । भगवतोऽन्याधारकत्वाभावे सर्वाधारमूलं प्रकृत्याधारत्वादित्युक्तीनामेतस्मिन् खल्वक्षरे गार्ग्य आकाश ओतश्चप्रोतश्चेत्यादौ याज्ञवल्क्याभिप्रेतत्वादग्राह्यो न हि गृह्यते अशीर्यो न हि शीर्यत इत्यादौ च परमात्मनो ग्राहत्वादौ ग्राह्यत्वादिषु प्रमाणाभावरूपहेतूनां याज्ञवल्क्येनोक्तत्वात् तेन तत्र तत्र प्रमाणोपन्यासः कृतः । उक्तं हि बृहदारण्यकभाष्ये भगवतोऽन्याधारत्वं सर्वाधारमूलप्रकृतेरपि





भगवानेवाधार इत्युक्ते युक्तित एव निवारितं भवति । नान्यदतोऽस्ति द्रष्टृत्वादित्युक्तिभिश्च अस्थूलत्वादित्युक्तिभिश्चेति न हि गृह्यत इत्यादिना ग्रहणशरणादिषु सर्वप्रमाणाभावं दर्शयतीति चेति भावः । न च वाच्यं 'यस्मान्न विदुषां वाक्यमाशङ्क्य केनचित्कचित् । तस्माद्वेदेषु सर्वेषु कथाः प्रश्नोत्तरात्मिकाः । न प्रमाणान्तरं तत्र पृच्छन्ति घटनां विना । एतस्मादाश्वलाद्याश्च पप्रच्छुर्नैव कुत्रचित् । आगमं याज्ञवल्क्योक्तेरन्यं तं मैथिलोऽपि चे'ति बृहदारण्यकभाष्ये ज्ञान्युक्तस्थानाशङ्कनीयत्वेन आश्वलादिभिर्याज्ञवल्क्यं प्रति प्रमाणप्रश्न एव न कृत इत्युक्तत्वात् कथमुच्यते याज्ञवल्क्येनापि तच्च तत्र प्रमाणोपन्यासः कृत इतीति उदाहृतवाक्येन प्रमाणान्तरं तत्र पृच्छन्ति घटानां विनेत्यनेन । तत्तत्प्रमेयघटकहेतुव्यतिरिक्तप्रमाणान्तरप्रश्नकरणाभावस्योक्त्या तत्तद्घटकहेतुप्रश्नस्य तदुपन्यासस्य च कृतत्वप्रतीतेर्याज्ञवल्क्येनापि तत्र तत्र प्रमाणोपन्यासः कृत इत्युक्तिसम्भवादिति ।

**श्रीनिधि०—** **बहिरङ्गमिति** । कथास्वरूपनिष्ठत्वाभावादिति भावः । **अन्तरङ्गमिति** । कथास्वरूपनिष्ठत्वेनेति भावः । प्रतिज्ञामात्रेण ज्ञापकत्वरूपप्रवृत्तिप्रकारस्य कथानिष्ठत्वात् । साध्यशब्दो निष्पत्तिपर इत्याह **ज्ञापनीयत्वमिति** । तथात्वे प्रकृतानुपयोगात् अयोगाच्च । संवादे वादिनोरित्यनेन कथावादत्वं ज्ञापितमित्यत आह **तदाश्वासो हीति** । **अपसिद्धान्तादिपरिहारेणेति** ..... द्रष्टव्यम् । आदिपदेन स्ववचनविरोधादिकम् ।

**शे०वा०—** ननु प्रतिज्ञामात्रेत्याद्युत्तरग्रन्थानर्थक्यम् । न च वादसम्बन्धिप्रवृत्तिप्रकारवत्तां विप्रतिपन्नकथाया उपदर्शयितुं तदिति वाच्यम् । तदुपदर्शनस्याप्यनर्थकत्वात् । न च वादत्वस्य मुख्यतासिद्ध्यर्थं तदिति वाच्यम् । तत्त्वनिर्णिनीष्वधिकारिकत्वेन च तस्य सिद्धत्वेन तत्सिद्ध्यर्थत्वायोगात् । न च वादस्यैव मुख्यतासिद्ध्यर्थमेतदिति वाच्यम् । तस्यापि पूर्वोक्तहेतुनैव सिद्धत्वात् । न च प्रकारान्तरेण तदुपपादनार्थत्वादस्यार्थवत्त्वमिति वाच्यम् । भेदकत्वाविशेषे अस्यैव मुख्यभेदकत्वायोगादित्यतोऽसत्यस्मिन्नधिकारिभेदादेरतिप्रसङ्गित्वादिना भेदकत्वाभावेन तस्य बहिरङ्गत्वात् प्रवृत्तिप्रकारभेदस्य च स्वरूपभेदकत्वेनान्तरङ्गत्वादविशेषासिद्ध्या युक्तमस्य तत्साधकत्वमित्याशयवान् तत्परतयोत्तरग्रन्थं योजयति **अपि चेति** । अनेन मूलेऽपिशब्दः प्रकारान्तरसमुच्चयार्थ इत्युक्तं भवति । **क्वापि प्रमेय इति** । इदं च योग्यतयोत्तरवाक्यस्थस्यापि पूर्ववाक्य एवान्वय इत्यभिप्रेत्यानूद्य व्याख्यानमिति ध्येयम् । **उपक्रमेति** । 'जनको ह वैदेहो बहुदक्षिणेन यज्ञेन ईजे । तत्र ह कुरुपाञ्चालानां ब्राह्मणा अभिसमेता बभूवुः । तस्य ह जनकस्य वैदेहस्य विजिज्ञासा बभूव कः स्विदेषां ब्राह्मणानामनूचानतमः' इत्युपक्रमपर्यालोचनयेत्यर्थः । तर्हि याज्ञवल्क्यकथावदित्येव भाष्ये वक्तव्यम् । याज्ञवल्क्यवदिति तु कथमुक्तमित्यतोऽत्र याज्ञवल्क्यशब्देन कथाग्रहणान्नानुपपत्तिरिति भावेन रूढ्यादेरभावात् कथं तच्छब्देन तद्ग्रहणमित्यतो मुख्यवृत्त्या तस्य तत्परत्वाभावेऽपि लक्षणया तत्परत्वमुपपन्नमित्याह **याज्ञवल्क्यशब्देनेति** । लक्षणाबीजभूतशक्यसम्बन्धमुपदर्शयति **तत्कथेति** । तथाऽपि विद्यापरीक्षार्थायां कथायामिति कथं सप्तमीलाभ इत्यतो दृष्टान्तबलादेवेति भावेन दृष्टान्ते सप्तम्यर्थविवक्षायां ज्ञापकमाह **सप्तम्यर्थ इति** । तत्र तस्येवेति स्मरणादिति भावः । **ततः किमित्यत इति** । प्रमाणरहितवचनमात्रेण प्रमेयविशेषस्य प्रज्ञापनीयताया





वादादन्यत्रापि सम्भवान्नानेन वादत्वस्यैव सिद्धिरिति भावः । **एवम्भाव इति** । प्रतिज्ञामात्रसाध्यत्वमित्यर्थः । ननु कथायामेकस्य वादित्वादपरस्य च प्रतिवादित्वान्न तत्र वादिद्वयमस्तीति कथं वादिनोरिति द्विवचनमित्यतोऽत्र वदेते तौ वादिनाविति वादिशब्दस्य योगेन वादिप्रतिवादिपरत्वेन प्रसिद्धवादिपरत्वाभावान्नानुपपत्तिरित्यभिप्रेत्य व्याचष्टे **वादिप्रतिवादिनोरिति** । **अपसिद्धान्तादिपरिहारेणेति** । क्लृप्तप्रश्नदोषभूतापसिद्धान्तादिदोषचतुष्टय-परिहारेण, प्रश्नदोषप्रसक्त्या यथा प्रश्नस्याभासत्वं न स्यात्तथा, प्रमाणप्रश्नोऽवश्यं कर्तव्य इत्यर्थः । तत्र हेतुमाह **विजिगीषुणेति** । अन्यथा प्रश्नदोषैः स्वस्यैव पराजयप्राप्त्याऽपेक्षितविजयालाभप्रसङ्गादिति भावः । केचित्तु ननूच्यमानदशाग्राह्यापसिद्धान्ताद्युद्भावनेन परोक्तखण्डनसम्भवात् कथं विजिगीषोः प्रमाणप्रश्नकर्तव्यत्वाव-धारणमित्यतो यत्रोच्यमानग्राह्यमपसिद्धान्तादिकं लभ्यते । तत्र तस्यैवोद्भाव्यत्वमभिमतम् । न तु प्रमाणप्रश्नस्य कर्तव्यता । यत्र त्वपसिद्धान्तादेः परिहारो यथा भवति तथा वादिनोच्यते तत्र तत एवोच्यमानग्राह्यापसिद्धान्ता-द्यप्रसक्त्या तदुद्भावनेन परखण्डनस्य कर्तुमशक्यत्वात् तत्र परोक्तखण्डनार्थं प्रमाणप्रश्नस्य कर्तव्यत्वमभिप्रेयत इत्यतो नानुपपत्तिरित्याशयेनोक्तमपसिद्धान्तादिपरिहारेणेतीत्याहुः ।

**एवं तर्हीति** । प्रमाणरहितवचनमात्रस्यापि प्रज्ञापकत्व इत्यर्थः । प्रमाणप्रश्ने सर्वत्र प्रमाण-विशेषहेतुवचननियमः प्रतीयते । स चानुपपन्नः । यत्किञ्चित्प्रमाणोपन्यासेनापि प्रमाणप्रश्नपरिहारोपपत्त्या तन्नियमस्य निर्निबन्धनत्वादित्यतोऽत्र प्रमाणविशेषवाचकहेतुशब्दस्य लक्षणया प्रमाणसामान्यपरत्वात् तद्वक्तव्यतानियमपरत्वेन हेतुरूपप्रमाणविशेषवक्तव्यतानियमपरत्वाभावान्नानुपपत्तिरित्याह **हेतुरिति** । सामान्य-विशेषभाव एव लक्षणाबीजभूतः शक्यसम्बन्ध इति भावः । अस्मिन्पक्षे हेतुशब्दस्य लाक्षणिकत्वं परिकल्पनीयं भवतीत्यपरितोषात् पक्षान्तरमाह **प्रमाहेतुरिति वेति** । तथा च मूले हेतुशब्दो न प्रमाणविशेषपरः किन्तु कारणपरः, योग्यतया च प्रमायाः सम्बन्ध इत्युक्तं भवति । ननु विद्यापरीक्षार्थकथायां वादिप्रतिवादिनोरन्योन्यं क्वचिदाप्ततासमाश्वासेन तत एव सर्वत्राप्ततासमाश्वासान्न तत्र प्रमाणोपन्यासस्यावसर इत्यत आह **न हीति** । कथं तर्हि याज्ञवल्क्यकथायां प्रमाणरहितवचनमात्रेणैव विप्रतिपन्नप्रमेयसिद्धिरित्यतो यत्र विषये याज्ञवल्क्य-स्याप्ततावधारणं तत्र तद्वचनमात्रेणार्थसिद्धावपि यत्र न तदवधारणं तत्र तद्वचनमात्रेण प्रमेयासिद्ध्या हेतूक्ते-रङ्गीकारान्नोक्तनियमानुपपत्तिरित्याह **याज्ञवल्क्येनापीति** । **तत्र तत्रेति** । 'अपानेन हि गन्धान् विजानाति । तं हीदं सर्वमाददाना यन्ति तस्मादादित्या इती'त्यादिनेति शेषः । **सकलमिति** । क्वचिदाप्ततासमाश्वासात् तद्वचनमात्रेणार्थसिद्धावपि यत्र न तत्समाश्वासः तत्र तत्प्रमाणोपन्यासतत्समर्थनोपालम्भस्वीकारेण प्रश्नप्रतिज्ञा-भ्युपगममात्रानङ्गीकाराद्वादकथया विद्यापरीक्षणमित्येतत् सकलमित्यर्थः ।

**वा०र०— वादत्वस्यैव** वादत्वजल्पत्वयोः विद्यमानत्वेऽपि वादत्वमेव मुख्यं जल्पत्वममुख्यम् । जल्पसम्बन्धिप्रवृत्तिप्रकारस्याभावादिति प्रदर्शनाय वादसम्बन्धिप्रवृत्तिप्रकारप्रदर्शनमिति न वाच्यमित्यर्थः । **तस्यापीति** । वादत्वस्यैव मुख्यत्वस्यापीत्यर्थः । मुख्यतायाः प्रकृतत्वेऽपि मुख्यत्वस्यापि मुख्यतात्पर्यतया प्रकृतत्वं मनसि निधाय तस्यापीति नपुंसकप्रयोगः । **तस्या अपीति** । विश्लिष्टाकारपाठे तु न शङ्कानव-





पूर्वपक्ष्युक्तयुक्त्यपेक्षया सिद्धान्तीययुक्तीनां व्याप्त्यादिमत्त्वेन दृढत्वादापाततः पूर्वपक्षदिशा प्रतीतार्थप्रच्यावनमेतदधिकरणन्यायेनेत्युक्तं भवति । न्याय इत्यस्यार्थः **प्रकार इति** ।

**वं०प०— तस्य** वेदस्य । तथा उपजीव्यविरोध इत्यर्थः । **तत्** प्राबल्यम् । **कथं तर्हीति** । 'उपजीव्यविरोधे तु नास्यास्तन्मानता भवेदि'ति पूर्वमुपजीव्यागमविरोध एव श्रुतेः प्रतीतार्थप्रच्यावनस्योक्तत्वात् युक्तिविरोधेन तदुक्तौ पूर्वोक्तविरोधः स्यादित्यर्थः । **उपलक्षणत्वेनेति** । दृढयुक्तिविरोधे प्राप्तेऽपि वेदस्य प्रतीतार्थप्रच्यावनं कार्यमित्यपि द्रष्टव्यमित्यर्थः । तदुपपादयति **उपजीव्यं खल्विति** । **तत्** प्राबल्यम् । **युक्त्यन्तरस्येति** । अनुपजीव्यस्यापीत्यर्थः । **परिहारो न्याय इति** । परिहाररूपो न्यायः प्रकार इत्यर्थः ।

**कं०रा०— नन्वेतदिति** । मृन्न वक्ति मृत्वादित्यादि युक्तिविरोधेन मृदब्रवीदित्यादिवेदस्य यत्स्वार्थात्प्रच्यावनमेतदयुक्तं वेदस्य सकलप्रमाणापेक्षया प्राबल्यादित्यर्थः । ननु दर्शनादिकार्यानुमितानां चक्षुरादीनां दूरस्थदर्शनादिकार्यानुसारेण व्याप्तत्वसिद्धौ प्राणा वा अणव इत्यादेस्तेजसा व्याप्तानां प्राणशब्दितेन्द्रियाणां स्वरूपेणाणुत्वमर्थः । न तु सर्वथा व्याप्तत्वाभाव इति युक्तिविरोधेन स्वार्थप्रच्यावनदर्शनात्कथमेतदयुक्तमित्यत आह **यत्किञ्चिदिति** । **वस्त्विति** । विरुद्धयोरुभयोः प्रामाण्ये वस्तुविकल्पप्रसङ्गादित्यर्थः । **कथं तर्हीति** । अनुपजीव्यमृत्वादियुक्तिविरोधेऽपि मृदब्रवीदित्यादि वेदस्य स्वार्थात्प्रच्यावनं यदि तर्हि उपजीव्यविरोधे तु वेदस्यान्यार्थकल्पनेति कथमुक्तमित्यर्थः । **उपलक्षणत्वेनेति** । उपजीव्यविरोधे त्वित्येतत् प्रबलविरोधोपलक्षकत्वेनोक्तमिति ब्रूम इत्यर्थः । **अनेनेति** । दृढयुक्तिविरोधे तु सर्वत्र न्याय ईदृश इत्यनेनेत्यर्थः । **अत्रोदाहरण इति** । मृदब्रवीदित्याद्युदाहरण इत्यर्थः ।

**शे०वा०—** दृढयुक्तीत्युत्तरवाक्ये युक्तेर्व्याप्तिपक्षधर्मताविशिष्टत्वरूपदृढत्वप्रतिपादनानर्थक्यमाशङ्क्य प्रकृतयुक्तिविरोधस्य आगमार्थप्रच्यावनहेतुत्वोपपादनार्थत्वान्न तदिति भावेन युक्तिविरोधमात्रस्यैव तत्प्रच्यावकत्वहेतुत्वसम्भवात् किं तदुपदर्शनेनेत्यतो युक्तिविरोधमात्रस्य तत्प्रच्यावकत्वासामर्थ्यं दर्शयितुं शङ्कते **नन्विति** । युक्तेः श्रुतितो दुर्बलत्वात् तद्बाधेन प्रसिद्धस्यैव मृदादेर्वक्तृत्वादिकमेव श्रुत्यर्थोऽस्तु **किमर्थान्तरकल्पनयेति** भावेनाह **तस्येति** । **प्राबल्यादिति** । प्राबल्यमागमस्यैवेत्याद्युक्तेरिति भावः । कथं तर्हि 'तत्त्वमसि, प्राणा वा अणवो, जनितोत विष्णोरि'त्यादिवेदस्य प्रत्यक्षानुमानविरोधेन स्वार्थप्रच्यावनं, तत्रापि वेदविरोधेन ततो दुर्बलप्रत्यक्षानुमानयोरेवाप्रामाण्यस्य वक्तुं शक्यत्वादित्यतस्तत्र प्रत्यक्षानुमानयोरागमं प्रत्युपजीव्यत्वेनागमापेक्षया प्रबलत्वेन तद्विरोधात् तदुपपत्तिरित्याह **यत्कचिदिति** । **उपजीव्यविरोध एवेति** । 'उपजीव्यविरोधे तु वेदस्यान्यार्थकल्पने'ति पूर्वमुक्तेरिति भावः । तर्ह्यत्राप्युपजीव्ययुक्तिविरोधादेव वेदस्यान्यार्थकल्पनेति किन्न स्यादित्यतो भवेदेवं यदि युक्तेरत्रोपजीव्यत्वं स्यान्न चैवम् । आदिकालीनमृदादेः श्रुत्येकगम्यत्वेन युक्तेर्धर्मिग्राहकत्वाभावात् । न चेदानीन्तनमृदादिकारणत्वेनादिकालीनमृदाद्यनुमानसम्भवेन युक्तेरपि धर्मिग्राहितयोप-





जीव्यत्वान्न श्रुत्येकसमधिगम्यत्वमिति वाच्यम् । गोमयतण्डुलकणादिविजातीयजन्यानामपि वृश्चिकत्व-तण्डूलीयकत्वादिजातिमत्त्वदर्शनेन तत्र व्यभिचारेणोक्तानुमानानवकाशात् । तथा च प्रकृतयुक्तेरनुपजीव्यत्वान्न स्वार्थप्रच्यावकत्वमित्याशयेनाह **न चात्रेति** । ननु चैवं युक्तेर्दृढतया आगमाबाध्यत्वेऽप्युभयोरपि प्रामाण्यो-पपत्तेर्नागमार्थप्रच्यावकत्वमनुपजीव्यत्वात् अन्यथा 'उपजीव्यविरोधे तु वेदस्यान्यार्थकल्पने'ति प्रागुक्तिविरोधा-दित्यत आह **अयमिति । व्याप्तिपक्षधर्मतोपेताया इति** । व्याप्तिपक्षधर्मतोपेततया निरवकाशाया इत्यर्थः । **तर्हीति** । निरवकाशयुक्तिविरोधस्याप्यागमार्थप्रच्यावकत्व इत्यर्थः । ननु च सूत्राणां विश्वतोमुखत्वेन विशेष-मात्रनिष्ठत्वानुपपत्त्या समाने विषये न्यायसञ्चारकत्वादवच्छेदकोपाध्यनुक्तौ चेदमस्योदाहरणमिदं नेति सूत्रोक्तन्यायसञ्चारविषयत्वतदविषयत्वविवेकासम्भवात् तदुपपत्तये निर्णेतव्यावच्छेदकोपाधेरवश्यवक्तव्यत्वात् तदनुक्त्या भाष्ये प्रसक्तन्यूनतापरिहारायावच्छेदकोपाध्यभिधायकतयाऽप्येतदेव योजयति **यद्वेति** । युक्तेर्दृढत्वं न श्रुत्यप्रामाण्यं विनाऽनुपपन्नत्वम् । सिद्धान्तदशायामिहाप्यभावात् पूर्वपक्षदशायां तु पूर्वत्रापि भावात् किन्तु व्याप्तिपक्षधर्मतावत्त्वमेवेत्यभिप्रेत्याह **प्रमितेति** । अत्र च व्याप्तिपक्षधर्मतावत्त्वं सिद्धान्तदशायामपि श्रुति-प्रतीतार्थाभावेनैव सह हेतोर्विवक्षितम् । न त्वभिप्रेतार्थाभावेनापि तत् । विवक्षितं च दृढत्वं प्रकृतयुक्तेरेव जडस्य कर्मज्ञानेन्द्रियादिहीनस्य वक्तृत्वकामयितृत्वादेरनुपपन्नत्वेन जडस्य मृदादेर्वक्तृत्वादिरूपप्रतीतार्थत्यागे जडत्वादेरनुपपद्यमानत्वात् । न तु पूर्वत्रापि । कारीयदिर्वृष्ट्यादिहेतुत्वरूपप्रतीतार्थत्यागेऽपि विसंवादादे-र्वैगुण्यादिनोपपन्नत्वादिति द्रष्टव्यम् ।

**वा०र०— प्राबल्यमागमस्यैवेत्यादीति** । तेषु त्रिषु अक्षादिकरणेषु मध्ये यदागमस्य वेदप्राबल्यमुक्तं तत्तज्जात्यैव स्मृतं उत्सर्गेणैव स्मर्तव्यम् । न तु नियतम् । इत्यादि तत्त्वनिर्णयटीकोक्तरीत्या सम्मति-ग्रन्थोऽवगन्तव्यः । यद्यपि प्राबल्यमित्यादि वाक्यात् आगमस्य औत्सर्गिकं प्राबल्यं सिद्धं इति तस्य सर्वथा बाधार्हत्वाभावः न तद्वाक्यात् सिद्ध्यति तथापि उपजीव्यविरोधे तु इत्याद्युक्तरीत्या क्वचित् बाधेऽपि अनुमानप्रत्यक्षयोरिव बाधबाहुल्यं नास्तीत्यभिप्रायेण एतदुदाहरणम् । अत एव ईक्षत्यधिकरणे तत्त्वप्रकाशिकायां प्राबल्यमागमस्येति । 'जात्या तेषु त्रिषु स्मृतम्' इति युक्तितः स्मृतेः प्राबल्योक्तेरित्युक्तम् । न हि आगमस्येव प्रत्यक्षानुमानयोः औत्सर्गिकं प्राबल्यमस्तीति द्रष्टव्यम् । **प्राणा वा अणव इति** । एतच्चाधिकरणे स्पष्टम् । वृश्चिकतण्डुलीयकादिवत् वर्णादिव्यवस्थोपपद्यते । इति द्वितीयस्तम्बककुसुमाञ्जलिप्रमेयानुसारेण प्रवृत्त देवताधिकरणतत्त्वप्रकाशिकाद्यनुसारेणाह **गोमयतण्डुलेति** । 'तण्डुलीयकादि' इत्यादिपदेन अरण्यादिजन्य-वह्निक्षीरदधिघृततैलकदलीकाण्डादीनां ग्रहणम् । **भाष्ये प्रसक्तेति** । प्रसक्तायां न्यूनता तत्परिहारायेति योजना । भाष्ये न्यूनताप्रसक्तिरित्यतः तत्परिहारायेति तात्पर्यम् । **इहापीति** । एतदधिकरणेऽपीत्यर्थः । पूर्वाधि-करणसमुच्चयार्थो अपिशब्दः । **प्रतीतार्थाभावेनैव सहेति** । यद्यपि व्याप्तेः ससम्बन्धिकपदार्थभूतायाः साध्य-निरूपिततया प्रतीतार्थाभावेन सह व्याप्तिरिति सम्बन्धो युज्यते । न तु पक्षधर्मतापि तेन सहेति सम्बन्धः । तथा





च व्याप्तिपक्षधर्मतयोः प्रतीतार्थाभावेन सह इत्युक्तिः कथमित्याभाति । साध्येन सह हेतोर्नियामकं रूपं व्याप्तिवत् पक्षधर्मतापि । सत्यामपि व्याप्तौ साध्यनिश्चये जननीये पक्षधर्मतायाः अभावस्य विरोधित्वात् । एवं च हेतौ प्रतीताभावेन सह प्रतीतिजनकतोपयोगि इति यावत् । हेतोर्विवक्षितमित्यर्थः । यद्वा व्याप्त्यभिप्रायेणैव सहेत्युक्तिः । छत्रिन्यायेन उभयोपादानमिति । एवमेवाभिप्रेतार्थाभावेन सह तत्प्रतीतिजनकोपयोगि इति यावत् । हेतोर्विवक्षितमित्यर्थः । यदा व्याप्त्यभिप्रायेण सहेत्युक्तिः । छत्रिन्यायेनोभयोः उपादानमिति । एवमेवाभिप्रेतार्थाभावेऽपि इत्येतत् छत्रिन्यायेन योज्यम् ।

**विट्ठल०— यत्किंचिदिति** । यजमानप्रस्तरेत्यादिकमित्यर्थः । ननु दृढयुक्तिविरोधे सति ईदृशो न्याय इत्यनुपपन्नम् । प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतमित्यस्य प्रबलत्वेनास्यानुपपत्तेरित्यत आह **अयं भाव इति** । उपलक्षणत्वं कुत इत्यत आह **उपजीव्यमिति** । सर्वत्रेति पदस्वारस्यात्पक्षान्तरमाह **यद्वेति** ।

**॥ इति युक्त्यन्तरविरोधस्य दृढयुक्त्यन्तरविरोधार्थकत्वान्न तत्रानुपपत्तिः ॥**

**॥ इति सिद्धान्तः — वेदवाक्यान्तरे युक्त्यन्तरविरोधाभावदर्शनेन अप्रामाण्यशङ्कायाः परिहारः ॥**

**॥ इति वेदसमन्वयेन ब्रह्मणो जगत्कारणत्वे साधनीये शङ्कान्तरनिरासः ॥**

## ॥ इति अभिमान्यधिकरणम् ॥

## ॥ २-१-३ ॥

* * *



## ॥ अथ असदधिकरणम् ॥

## ॥ २-१-४ ॥

**ब्र०सू०— ॥ ॐ असदिति चेन्न प्रतिषेधमात्रत्वात् ॐ ॥**

**॥ अथ ब्रह्मणो जगज्जन्मादिकारणत्वे प्राप्तस्य अल्पवाक्ययुतविरोधस्य श्रुतिसंवादित्वेन श्रुत्यागमयोर्बाहुल्यरूपप्राबल्यवत्तया युक्त्या परिहारः ॥**

**॥ अथ तत्रादौ एतदधिकरणस्यारम्भणीयत्वसमर्थनम् ॥**

**॥ अथ तत्र च अनारम्भणीयत्वशङ्का तन्निरासश्च ॥**

**॥ अथ तत्राप्यादौ अनुव्याख्यानोक्तपदानां अर्थपूर्वकोऽन्वयः ॥**

१ **सु०**— ननु च(ा)नारम्भणीयमेवेदमधिकरणम्, 'न विलक्षणत्वादि'त्यनेनैव वेदस्य सकलयुक्तिविरोधानां परिहृतत्वात्, दृढयुक्तिविरोधपरिहारस्य च अभिमान्यधिकरणन्यायसिद्धत्वात्; इत्यतो गतार्थतां परिहरन्नधिकरणस्योपाधिम(प्य)ाह **अल्पवाक्येति** ।

अनु०— अल्पवाक्ययुता युक्तिर्बहुलैव विरोधिनी ।
यत्र तत्र कथं वस्तुनिर्णयः स्यादितीरिते ॥
विरोधियुक्तिबाहुल्यादिति न्यायो विनिश्चितः ।

**यत्र** यदा, वेदस्य **वाक्ययुता युक्तिर्विरोधिनी** स्यात्, **तत्र** तदा, **वस्तुनिर्णयः कथं** स्यात् इति पूर्वपक्षिणेरिते सति, तद्विरोधियुक्तीनां **बाहुल्यात्** प्राबल्यात्, वस्तुनिर्णयो भवेत् **इति** सिद्धान्तः । **इति** एषोऽत्राधिकरणे **न्यायो विनिश्चितः** ।

परि०— **असदिति चेत्** । अधिकरणोपाध्युक्तौ बीजमाह **ननु चेत्यादिना** । **परिहारस्य चेति** । प्रतीतार्थप्रच्यावनेनाविरुद्धार्थान्तरकल्पनरूपस्येत्यर्थः । अल्पपदस्य कृत्यं अग्रे विवक्षुः वाक्ययुतेत्येवानूदितवान् । बाहुल्यादित्यनुवादः, प्राबल्यादिति व्याख्या । वस्तुनिर्णयपदस्यावृत्तिं, भवेदित्यस्यानुवृत्तिं च मत्वाह **वस्तुनिर्णयो भवेदितीति** । अत्रेति शेषः । तस्यार्थः **अधिकरण इति** ।





**यादु०—** **बाहुल्यात्** इत्यनूद्य **प्राबल्यात्** इति व्याख्यानम् ।

**कं०रा०—** **तद्विरोधीति** । पूर्वपक्षयुक्तिविरोधियुक्तीनामित्यर्थः ।

**शे०वा०—** नन्वल्पवाक्ययुतेत्युत्तरभाष्यमनर्थकम् । न च पूर्वाधिकरणीयपूर्वपक्षसिद्धान्तन्यायापेक्षया एतदधिकरणीयपूर्वपक्षसिद्धान्तन्याययोर्भेदोपदर्शनार्थं तदिति वाच्यम् । तदुपदर्शनस्याप्यनर्थकत्वात् । न च गतार्थताशङ्कानिरासस्तत्प्रयोजनमिति वाच्यम् । निरसिष्यमाणविरोधस्य प्रागपरिहृतत्वेन गतार्थताशङ्काया एवानुदयेन तन्निरासार्थत्वानुपपत्तेरित्यतो गतार्थताशङ्कोत्थापनपूर्वकं तन्निरासार्थं न्यायवैषम्योपदर्शनपरतयोत्तरभाष्यं योजयितुं तच्छङ्कां तावदुत्थापयति **नन्विति** । **उपाधिमप्याहेति** । अन्यथाऽस्येदमेवोदाहरणमिदं नेति विवेकानुपपत्तेरिति भावः । साकाङ्क्षतया वाक्याभासत्वशङ्कापरिहारार्थमपेक्षिताध्याहारप्रदर्शनपूर्वकं न्यायवैषम्योपदर्शकतया भाष्यं व्याचष्टे **यत्रेत्यादिना** । बाहुल्यादित्यस्यैव व्याख्यानं **प्राबल्यादिति** ।

**वा०र०—** **अनारम्भणीयमेवेदमिति** मूले पाठः स्वरस एव । नारम्भणीयमेवेदं इति पाठे तु नैवारम्भणीय इति योज्यम् । आरम्भणीयमेव नेति यथाश्रुत एवकारप्रयोजनाभावात् । न्यायापेक्षयेति टीका । यौ न्यायौ तदपेक्षतयेत्यर्थः । **तद्विरोधीति** मूलम् । पूर्वपक्षि उत्प्रेक्षितयुक्तिविरोधीत्यर्थः । एवमुत्तरत्र व्याख्यानमिति अनूद्य व्याख्यानमित्यर्थः ।

**विठ्ठल०—** उत्तरमूलस्योत्सूत्रितत्वपरिहाराय गतार्थताशङ्कापरिहारादिपरतया योजयितुमाह **ननु चेति** । अल्पबहुशब्दयोः कृत्यमग्रे विवक्षुस्तद्भिना योजयति **यत्रेति** । वस्तुनिर्णयः स्यादित्यतस्यावृत्तिमभिप्रेत्योक्तं **वस्तुनिर्णय इति** । स्यादित्यस्य भवेदिति व्याख्यातम् । अत्रेति शेषमभिप्रेत्य तदर्थमाह **अत्राधिकरण इति** ।

**॥ इति अनुव्याख्यानोक्तपदानां अर्थपूर्वकोऽन्वयः ॥**

* * *

**॥ अथ च तत्र एतदनुव्याख्यानोक्तार्थस्य तात्पर्यम् ॥**

**॥ अथ तत्रादौ पूर्वैतदधिकरणयोः पूर्वपक्षसिद्धान्तानां विषयभेदः ॥**

२ **सु०— एतदुक्तं भवति । पूर्वाधिकरणे प्रत्यक्षादिगृहीतव्याप्त्यादिमत्त्वेन दृढया युक्त्या विरुद्धत्वाद्वेदैकदेशस्याप्रामाण्ये सति तद्दृष्टान्तेन ब्रह्मणो जगत्कारणत्वाभिधायकस्यापि वेदस्य वेदत्वादप्रामाण्ये तदसिद्धिरिति पूर्वः पक्षः । सिद्धान्तस्तु युक्तिवद्वेदस्याप्यपौरुषेयत्वेन दृढत्वात् वास्तवविरोधस्यानुपपत्तेः अविरुद्धार्थकल्पनोपपत्तेः नाप्रामाण्यमिति ।**





**इह पुनर्वेदवाक्यान्तरसंवादेन सुदृढया युक्त्या विरुद्धत्वाद् ब्रह्मणो जगत्कारणत्वाभिधात्रीणां श्रुतीनामेव तत्र प्रामाण्यानुपपत्तौ प्रथमाध्यायोक्तवस्तुनिर्णयो न भवेदिति पूर्वः पक्षः । सिद्धान्तस्तु । पूर्वपक्षिणोत्प्रेक्षिताभ्यः श्रुतिसहितयुक्तिभ्योऽपि प्रबलानां तद्विरोधियुक्तीनां सद्भावात्तद्विरुद्धानां पूर्वपक्षश्रुतियुक्तीनामप्रामाण्यादुपपन्नतरः प्रागुक्तोऽर्थ इति ।**

**अतः पूर्वोत्तरपक्षन्याययोरगतत्वेन युक्तोऽधिकरणारम्भ इति । एतच्चानुपदमेवोदाहरणेन प्रपञ्चयिष्यामः ।**

**परि०**— तावता कथमगतार्थतेत्यत आह **एतदुक्तं भवतीति** । **तदसिद्धिः** जगत्कारणत्वासिद्धिः । **सुदृढयेति** । ननु (यद्यपि) प्राचीनयुक्तिर्व्याप्त्यादिमत्त्वात् दृढा । इयं तु तद्धीनत्वाददृढा । अन्यत्रानुपक्षीणत्वे सतीति वक्ष्यमाणयुक्तेर्व्याप्त्यादिमत्त्वेऽपि अविरोधित्वात् । विरोधिन्योस्तु भावत्वयुक्तिपरिशेषरूपयुक्त्योः क्रमाद्व्याप्तिपक्षधर्मतयोरभावादिति चेत् सत्यमेतत् तथापि वेदवाक्यासंवादसंवादाभ्यां पूर्वोत्तराधिकरणयुक्त्योः दृढत्वादृढत्वे ध्येये । श्रुतिसंवादेनात्रत्ययुक्तीनां व्याप्त्यादिमत्त्वमावश्यकमिति तात्पर्यात् । एतेन सोपानारोहणन्यायेन युक्तिदृढयुक्तिसुदृढयुक्तिविरोधानां क्रमात् 'नविलक्षणत्वादि'त्याद्यधिकरणत्रयेण निरासादस्य सङ्गतिरपि सूचिता । **श्रुतिसहितयुक्तिभ्य इति** । विश्वप्रागभावस्य कारणत्वमात्रसाधिका युक्तिरेका । वियदादेर्लये अभावसाधिका भावत्वयुक्तिरन्या । विश्वप्रागभावस्य कर्तृत्वसाधिका परिशेषयुक्तिरपरेति युक्तिभ्य इत्युक्तम् । दूरे वक्ष्यमाणाकर्तृकत्वजीवकर्तृकत्वसाधकयुक्तयो ग्राह्याः । संवादिश्रुतिरग्रे व्यक्ता । **तद्विरोधियुक्तीनामिति** । निषेधैकस्वरूपत्वकार्यत्वविनाशत्वादियुक्तीनामित्यर्थः । **अप्रामाण्यादिति** । श्रुतेः प्रतीतार्थे युक्तेः सर्वथा इति ध्येयम् । अत एवैतन्न्यायेन पत्यादिशब्देभ्य इत्यत्र ब्राह्मणादिश्रुतिब्रह्मलिङ्गान्यथानुपपत्तिरूपयुक्त्या 'स त्रेधा बभूवैषां गुणानामुपादानाय विष्णुर्वाव सत्त्वस्य रजसो ब्रह्मेशानो नाम तमस्' इति वेदवाक्यान्तरसंवादिन्या विरिञ्चब्रह्माभेदरूपप्रतीतार्थप्रच्यावनेनार्थान्तरकल्पनं ततोऽपि प्रबलसिद्धान्तीययुक्त्यागमबलात् कृतं ध्येयम् ।

**श्रीनिधि०— युक्तिवद्वेदस्याप्यपौरुषेयत्वेन दृढत्वादिति** । व्याप्त्यादित्वेन निरवकाशयुक्तिवद्वेदस्याप्यपौरुषेयत्वेन दृढत्वादिति योजना । **पूर्वोत्तरपक्षयोरवगतत्व इति** । एवं पूर्वोत्तरपक्षपर्यालोचनायां सत्यां अधिकरणारम्भानुपपत्तिशङ्का नोदेष्यति । तस्मात्तत्पर्यालोचनाभावनिमित्त एवेयं शङ्केति भावः ।





**शे०वा०—** नन्वेतदधिकरणीयपूर्वपक्षसिद्धान्तन्यायोपदर्शनमात्रेण न न्यायभेदसिद्धिः भेदस्य ससम्बन्धिकपदार्थत्वेनाधिकरणद्वयसम्बन्धिपूर्वपक्षसिद्धान्तन्यायरूपसम्बन्धिद्वयनिरूपणाधीननिरूपणत्वात् इत्यतः तदुभयोपदर्शनेन न्यायभेदमुपपादयति **एतदुक्तं भवतीति** । **एतच्चेतीति** । ब्रह्मणो जगत्कारणत्वाभिधायकश्रुतीनां वेदवाक्यसंवादात् सुदृढया युक्त्याऽविरुद्धत्वादिकमित्यर्थः । **प्रपञ्चयिष्याम इति** । 'अयमस्यार्थ' इत्यादिनेति शेषः ।

**वा०र०—** **अधीननिरूपणत्वादिति** । इह च पूर्वाधिकरणन्यायप्रदर्शनाभावादिति भावः । दृढत्वेऽतिशयं वक्तुं सुशब्दौ मूले । तदुपपादनं **वेदवाक्यान्तरेति** । **वेदवाक्यसंवादादिति** । वेदवाक्यसंवादात् सुदृढाया युक्तितया विरुद्धत्वमिति योजना । आदिपदेन श्रुतीनामेव प्रामाण्यानुपपत्तावित्यादेः ग्रहणम् ।

**स०व्र०—** **तदसिद्धिरिति** । जगत्कारणत्वासिद्धिरित्यर्थः । **प्रागुक्त इति** । जगत्कारणत्वादिलक्षणे इत्यर्थः ।

**विठ्ठल०—** गतार्थतापरिहारप्रकारं विशदयितुमाह **एतदुक्तं भवतीति** । पूर्वाधिकरणे दृढयुक्त्या पूर्वपक्षिते अपौरुषेयत्वेन बलवत्या श्रुत्या सिद्धान्तितम् । ह इति श्रुतिसहितदृढयुक्त्या पूर्वपक्षिते तथापि बलवत्तरयुक्त्या सिद्धान्त इति भेद इति भावः । कथमेतदधिकरणीयपूर्वपक्षयुक्तीनां श्रुतिसाहित्येन सुदृढत्वं कथं च सिद्धान्तयुक्तीनां ततोऽपि बलवत्वं येन गतार्थत्वं प्रत्येष्याम इत्यत आह **एतच्चेति** ।

**॥ इति पूर्वैतदधिकरणयोः पूर्वपक्षसिद्धान्तानां विषयभेदः ॥**

* * *

**॥ अथ च एतदधिकरणोक्तार्थस्य चतुर्थपादोक्तार्थाद्वैलक्षण्यम् ॥**

३ **सु०—** नन्वेवं सति श्रुतीनां श्रुतियुक्तिविरोधपरिहारोऽस्याधिकरणस्यार्थ इत्युक्तं भवति । सोऽयं चतुर्थपादार्थ एवेति तत्रैवास्याधिकरणस्योपनिबन्धनमुचितम् । नात्रेत्यतोऽस्य ततोऽपि वैलक्षण्यं दर्शयितुमुक्तम् **अल्पेति, बहुलेति** च । अत्र **अल्पत्वम्** उपसर्जनत्वम्, **बहुलत्वं** (च) प्रधानत्वमिति ज्ञातव्यम् । **एवशब्दस्तु** 'न गुणप्रधानभावव्यत्यासश्चतुर्थपाद इवे'त्यर्थे ।

**परि०—** 'स्मृतियुक्तिश्रुतिगुणयुक्तयो बहुयुक्तयः' इत्यादेरुत्तरपादोपक्रमे वक्ष्यमाणदिशा अर्थमाह **अत्राल्पत्वमिति** ।





**यादु०— उपसर्जनत्वमिति** । श्रुतिगुणयुक्तय इति वक्ष्यमाणत्वादिति भावः ।

**कं०रा०— एवशब्द इति** । सयुक्तिकश्रुतिविरोधपरिहारात्मके चतुर्थपादे युक्तीनामुपसर्जनत्वं श्रुतीनां तु प्राधान्यमिति यथा गुणप्रधानभावव्यत्यासस्तथात्र नेत्यर्थे बहुलैवेत्यत्रत्य एवशब्दो वर्तत इत्यर्थः ।

**शे०वा०—** ननु वाक्ययुतयुक्तिविरुद्धत्वोक्त्यैव न्यायभेदोपदर्शिनि गतार्थशङ्कानिरासससिद्धेर्भाष्ये श्रुतियुक्त्योरल्पत्वबहुलत्वरूपविशेषणोक्तिर्व्यर्थेत्येतन्मात्रेण न्यायभेदोपदर्शिनि, विशेषणोपादानस्य गतार्थता-शङ्कानिरासार्थत्वासम्भवेऽपि वाक्ययुतयुक्तिविरोधनिरासकतया प्राप्तचतुर्थपादान्तर्भावशङ्कानिरासकत्वान्न तस्या-नर्थक्यमिति भावेन तच्छङ्कानिरासकतया तद्योजयितुं चतुर्थपादान्तर्भावशङ्कामुत्थापयति **नन्वेवं सतीति** । नन्वल्पत्वबहुत्वयोश्चतुर्थपादीयविरोधिश्रुतियुक्तिसाधारणत्वात् कथं चतुर्थपादान्तर्भावशङ्कानिरासकत्वमपीति वैयर्थ्यमेवेत्यतोऽत्राल्पत्वबहुत्वयोः 'स्मृतियुक्तिश्रुतिगुणयुक्तयो बहुयुक्तयः' इत्युत्तरानुव्याख्यानानुरोधेन गुणत्व-प्रधानत्वरूपत्वेन यथाश्रुतार्थत्वाभावादुक्तरूपयोश्च तयोश्चतुर्थपादीयश्रुतियुक्तिसाधारणत्वाभावादुपपन्नं तत्रान्त-र्भावशङ्कानिरासकत्वमिति न वैयर्थ्यमित्यभिप्रेत्य प्रकृतोपयोगितयोत्तरानुव्याख्यानानुरोधेनाल्पत्वबहुत्वे व्याख्याति **अत्राल्पत्वमित्यादिना** । मूले एवशब्दस्य वैयर्थ्यपरिहाराय प्रकृतोपयोगितया तदर्थमाह **एवशब्दस्त्विति** । चतुर्थपादे युक्तेरुपसर्जनत्वं श्रुतेश्च प्रधानत्वमिति यथा श्रुतियुक्त्योर्गुणप्रधानभावो न तथेह श्रुतियुक्त्योः येन तत्रान्तर्भावः स्यादित्यर्थप्रदर्शनाय मूले एवकार इति भावः ।

**वा०र०— तन्मात्रेण न्यायेति** । वाक्ययुतयुक्तिविरुद्धत्वोक्तिमात्रेणेत्यर्थः । एतच्च विशेषणोपादान-गतार्थताशङ्कानिरासार्थत्वासम्भवे हेत्वभिधानम् । न्यायभेदोपदर्शनस्य सिद्धत्वादित्यर्थः । तथा च तेनैव गतार्थताशङ्कानिरासससिद्धेति शेषः । **विशेषणोपादानस्य** अल्पत्वबहुत्वरूपविशेषणोपादानस्येत्यर्थः । एकस्मिन् एवाधिकरणभेदेन व्यत्यास इत्यर्थप्रतीतिनिरासाय पदान्तरापेक्षया व्यत्यास इति व्याचष्टे **चतुर्थपाद इति** ।

**विठ्ठल०—** अल्पबहुलपदयोः कृत्यं वक्तुमाह **नन्वेवमिति** । ननु श्रेष्ठश्चेत्याद्यधिकरणे चतुर्थपादेऽपि नैष प्राण उदेतीत्याद्यल्पवाक्ययुतानां यत्प्राप्तिर्यत्परित्याग इत्यत्रोक्तानां विरोधयुक्तीनां बाहुल्यादत्रापि तथात्वेन कथं वैलक्षण्यमित्यतो नात्रादिशब्देन सङ्ख्याल्पत्वादिकं विवक्षितं किं त्वप्रधानत्वमेवेत्याह **अत्राल्पत्वमिति** । अत एव प्राक् प्राबल्यार्थतया व्याख्यातम् । **एवशब्दस्त्विति** । चतुर्थपादे पूर्वपक्षश्रुतीनामेव प्राधान्ये युक्तीनां तूपसर्जितत्वं न तथा व्यत्यासः किन्तु युक्तीनामेव प्राबल्यं श्रुतीनां तु युक्तिप्राबल्यसम्पादनार्थत्वमेव न तु स्वातन्त्र्येण पूर्वपक्षप्रवेश इत्यर्थ एवशब्दः । एतेन तृतीयपादवैलक्षण्यं च सूचितं भवति ।

**॥ इति एतदधिकरणोक्तार्थस्य चतुर्थपादोक्तार्थाद्वैलक्षण्यम् ॥**

**॥ इति एतदनुव्याख्यानोक्तार्थस्य तात्पर्यम् ॥**

* * *





**॥ अथ उक्तार्थस्य विवरणम् ॥**

४ **सु०—** ननु श्रुतियुक्तिभ्यां पूर्वपक्षिते कथं प्रबलयुक्तिमात्राश्रयेण सिद्धान्तः, कथञ्चित्प्रतिपक्षतामात्रसम्भवादित्यत उक्तं विवृण्वन्नाह **युक्तेस्त्विति** ।

**अनु०— युक्तेस्तु युक्तिबाहुल्यमागमादागमस्य च ।**
**कथं न निर्णयं कुर्यादिति**

पूर्वपक्षयुक्त्यपेक्षया विरोधियुक्तेः **बाहुल्यम्,** तथा पूर्वपक्षागमापेक्षया विरोध्यागमस्य च **बाहुल्यं कथं निर्णयं न कुर्यात्** । पूर्वपक्ष्युत्प्रेक्षितयुक्त्यागमाभ्यां प्रबलौ विरोधियुक्त्यागमौ तद्बाधया वस्तुव्यवस्थां कुरुत इत्यर्थः । कुर्यादिति प्रत्येकं सम्बन्धः । न केवलं सिद्धान्ते प्रबलयुक्तिमात्रं, किन्नाम प्रबलागमोऽप्यस्तीति भावः ॥ **इति** अतः 'अधिकरणारम्भः सम्भवती'ति शेषः । अधिकरणोपाधिव्युत्पादनसमाप्तिद्योतको वा **इतिशब्दः** ।

**परि०—** **बाहुल्यमिति** । पदद्वयस्यापि प्राबल्यमित्यर्थः । इतिशब्दो हेताविति भावेनाह **इत्यत इति** ।

**वं०प०—** श्रुतियुक्तिभ्यां पूर्वपक्षिते प्रबलयुक्तिमात्रस्यागमासहकृतस्य सत्प्रतिपक्षताऽपि नास्तीत्यभिप्रेत्य **कथञ्चित्** इत्युक्तम् ।

**कं०रा०—** ननु पूर्वपक्षयुक्त्यपेक्षया विरोधियुक्तिबाहुल्यं पूर्वपक्षागमापेक्षया विरोध्यागमबाहुल्यं च कथं न निर्णयं कुर्यातामिति वक्तव्ये कुर्यादित्येकवचनं कथमित्यत आह **कुर्यादितीति** । युक्तिबाहुल्यं निर्णयं कथं न कुर्यात् आगमबाहुल्यं च निर्णयं कथं न कुर्यादिति प्रत्येकमेव सम्बन्धः न तु समुदिताभ्याम्, अतः कुर्यादित्येकवचनं युक्तमिति भावः ।

**श्रीनिधि०—** सप्रतिपक्षताया अपि का ? बालसाम्य एव सम्भवात् श्रुतियुक्त्योरनेकत्वेन प्रबलत्वात् युक्तेरेकत्वेन दुर्बलत्वात् **कथञ्चिदित्युक्तं** निरवकाशत्वाभिमानेनेत्यर्थः । **प्रत्येकं सम्बन्ध इति** । अन्यथा द्विवचनप्रयोगोपपत्तेरिति भावः ।





**शे०वा०—** न्यायभेदोपपादनेनाधिकरणारम्भस्य पूर्वेणैव सिद्धेरुत्तरवाक्यस्यानर्थक्यमित्यत उक्तार्थविवरणार्थत्वान्न तदिति भावेन किं तेनापीत्यतस्तत्र प्रसक्तानुपपत्तिपरिहारार्थं तदित्याशयवांस्तत्रानुपपत्तिशङ्कामुत्थापयति **नन्विति** । **प्रबलयुक्तीति** । प्रबलयुक्तेः पूर्वपक्षेऽपि सत्त्वादिति भावः । अङ्गीकृत्य चेदमुक्तम् । वस्तुतस्तु पूर्वपक्षयुक्तेः सिद्धान्तयुक्तिवत् श्रुतिसंवादेन च प्राबल्यादुभयथा प्रबलयुक्तिविरुद्धसिद्धान्तयुक्तेरप्रामाण्यस्यैव प्राप्तत्वान्न सत्प्रतिपक्षत्वमपीति भावेन कथञ्चिदित्युक्तम् । अभ्यस्तयुक्त्यागमशब्दानामेकार्थत्वभ्रान्तिनिरासाय प्रकृताक्षेपपरिहारोपयोगितयाऽर्थभेदं वदन् वाक्यं योजयति **पूर्वपक्षेति** । बाहुल्यमित्यस्यानुकर्षणार्थश्चकार इत्यभिप्रेत्य तमनूद्य व्याचष्टे **च बाहुल्यमिति** । ननु युक्त्यागमयोरेव निर्णयकारित्वात् तद्बाहुल्यस्य च निर्णयकारित्वाभावात् कथं मूले निर्णयकारित्वोक्तिरित्यतो निर्णयकारित्वाभावेऽपि तत्प्रयोजकत्वात् प्रयोजकप्राधान्यविवक्षया तदुपपत्तिरित्यभिप्रेत्य वाक्यार्थमाह **पूर्वपक्ष्युत्प्रेक्षितेति** । युक्त्यागमयोरुभयोरपि निर्णयकारित्वात् कथमेकवचनान्तं कुर्यादिति क्रियासम्बन्ध इत्यतः पूर्वपक्ष्युत्प्रेक्षितयुक्त्यपेक्षया प्रबला युक्तिः कथं न निर्णयं कुर्यात् तदुत्प्रेक्षितागमापेक्षया प्रबल आगमः कथं न निर्णयं कुर्यादिति प्रत्येकं सम्बन्धाश्रयणान्नानुपपत्तिरित्याह **कुर्यादिति प्रत्येकं सम्बन्ध इति** । नन्वस्तु पूर्वपक्ष्युत्प्रेक्षितयुक्त्यागमाभ्यां प्रबलयुक्त्यागमयोस्तद्बाधया वस्तुव्यवस्थापकत्वमिति वस्तुस्थितिः । तावताऽपि यत्र पूर्वपक्ष्युत्प्रेक्षितयुक्त्यागमाभ्यां प्रबलौ युक्त्यागमौ सिद्धान्तसाधकौ स्तः, तत्र ताभ्यां तद्बाधया वस्तुव्यवस्थापनसम्भवप्राप्तावपि प्रकृते प्रबलयुक्तिमात्रस्य सिद्धान्तसाधकत्वेन युक्त्यागमयोस्तदभावान्न प्रबलयुक्तिमात्रेण युक्त्यागमबाधया वस्तुव्यवस्थापनं कर्तुं शक्यम्; पूर्वोक्तरीत्या कथञ्चित्प्रतिपक्षमात्रस्यैव प्राप्तेरित्यतोऽभिप्रायमाह **न केवलमिति** । मूले इतिशब्दस्यानर्थक्यमाशङ्क्यापेक्षितशेषपूरणेन सङ्गतिमाह **इतीति** । अत इत्यादिशेषपूरणे अपरितोषात् पक्षान्तरमाह **अधिकरणेति** ।

**वा०र०—** **तेनापीति** । विवरणेनापीत्यर्थः । **तत्रोक्तार्थो प्रबलयुक्तेरिति** । श्रुतिसहितयुक्तिभ्योऽपि प्रबलानामिति पूर्वं मूले त्वत्रत्यविवरणानुसारेणाधिक्यमुक्तमिति न विरोधः । **प्रागुक्तमूलम्** । प्रथमाध्यायार्थ इत्यर्थः । **श्रुतिसंवादेन चेति** । न केवलं प्रमितव्याप्त्यादिमत्तयेति चशब्दार्थः । पूर्वग्रन्थविरोधपरिहारः पूर्ववदेव द्रष्टव्यः । **उभयथेति** । प्रमितव्याप्त्यादिश्रुतिसंवादाख्यनिमित्तद्वयेनेत्यर्थः । **अभ्यस्तयुक्त्यागमेति** । यद्यपि अभ्यस्तौ यौ युक्त्यागमशब्दौ तयोर्द्वित्वेनाभ्यस्तयुक्त्या आगमशब्दयोरिति वाच्यम् । तथापि युक्तिशब्दस्याभ्यासेन द्वावागमशब्दौ च प्राप्तावित्याशयेन शब्दानामिति बहुवचनम् । न तु बहूनामभ्यासविवक्षया । अभ्यस्ते तु युक्त्यागमशब्दयोः अभ्यासविवक्षयेति विशेषणतापि न तस्य बाधतेति द्रष्टव्यम् । यदा अभ्यस्तेति सन्निधानात् युक्तेरेव विशेषणं शब्दपदं च प्रत्येकसम्बद्धं अभ्यस्तयुक्तिशब्द इति आगमशब्दाविति व्याख्येयम् । ततश्च युक्तिशब्दद्वयमेकीकृत्य आगमशब्दद्वयं यथावस्थितमेव क्षिप्त्वा बहुवचनोपपत्तिरिति ज्ञेयम् । अत्र युक्तेः प्राबल्यं युक्तिबाहुल्यमिति विग्रहमभिप्रेत्य व्याख्यातं मूले **विरोधियुक्तेः बाहुल्यमिति** । **बाहुल्यमित्यस्येति** । युक्तिबाहुल्यं इत्यतः विविक्तस्येति विशेषः । मूले कथं निर्णयं न कुर्यादिति भाष्यानुसारेण उक्त्वा प्रबल-





युक्तिप्रबलागमयोः मेलनेन निर्णयकारितार्थलाभेऽपि प्रत्येकं निर्णयकारित्वं नास्तीति प्रतीतिं वारयितुं युक्त्यागमौ व्यवस्थां कुरुतः इति च व्याख्यातम् । तर्हि भाष्येऽपि कुरुत इत्येवं वाच्यतया एव वचनप्रयोगायोगः इत्याशयेन शङ्कामुत्थापयति **युक्त्यागमयोरुभयोरपीति** । अत्र प्रत्येकमिति शेषः । **कथमेकेति** । एक-क्रियायोगेन उभयोरिदं द्वयं कथं न निर्णयं कुर्यात् इत्युक्ते उभयोर्मिलित्वा एककार्यकारिण्योः न प्रत्येकमिति बुद्धिः स्यादिति भावः । अस्तु तथा बुद्धिः इत्यतः उक्तं **युक्त्यागमयोरित्यादि** । यद्यपि सहकृतापन्नस्थले 'दण्डमृत्पिण्डौ घटं कुरुतः' इत्युक्तेऽपि न प्रत्येकघटकारिताफलोपधानरूपा स्वरूपयोग्यतारूपा वा प्रतीयते इतरापेक्षया कारणताया एवोक्तोभयरूपा प्रत्येकं विद्यमानायाः 'मृत्पिण्डो दण्डश्चेति द्वयं घटं जनयति' इत्येकवचनप्रयोग इव प्रतीयमानत्वात् । तथा च कथं द्विवचनप्रयोगस्यावश्यकता इत्याभाति । तथापि प्रमाणसम्प्लवस्थले 'प्रत्यक्षानुमानागमस्थलजगत्सत्यत्वं गमयन्ति' इत्युक्ते प्रत्येकगमकताप्रत्ययस्य औत्सर्गिक-तया उपलम्भात् 'दण्डमृत्पिण्डादिकं घटं जनयति' इत्यत्र चोत्सर्गतो मेलनेन घटजनकताप्रत्ययस्योपलम्भात् 'यत्र इमौ दण्डपिण्डौ घटं कुरुत' इत्यादौ द्विवचनप्रयोगेऽपि प्रत्येकं प्रकरणतावगमाभावः तत्र मिलित्वेऽपि वक्त्राभिप्रायसिद्धेः । यत्र च 'गङ्गास्नानं यागश्च स्वर्गं करोति' इत्यादौ प्रत्येकं कारणतावगमः तत्र प्रत्येकमिति वक्त्राभिप्रायसिद्धेश्च प्रत्येकार्थक्रियाकारितास्थले व्यक्त्यनुसारेण वचनप्रयोगस्यावश्यकत्वसिद्ध्या प्रकृतेऽपि तथाविधस्थलतया द्विवचनप्रयोगस्य कर्तव्यत्वात् एकवचनप्रयोगायोगः इत्यभिप्रायान्न दोषः । एतेन एक-वचनान्तस्यापि इदं द्वयं इति पूरणे सम्बन्धसम्भवात् नानुपपत्तिरियमित्यपि परास्तम् । तावतापि मेलनेन कार्यकारिताप्राप्तेः तस्याश्चानभिमतत्वात् । एतेनैव एकं क्रियापदं तस्य कथं उभाभ्यां अन्वयः इत्याशङ्का-परिहाराय प्रत्येकं सम्बन्धवर्णनं मूले इति व्याख्यानमप्यपाकृतम् । इदं द्वयं इत्यादिपूरणे तदन्वयोपपत्तेः । कुरुत इति द्विवचनप्रयोगेऽपि एताविति पूरणमावश्यकमेव । कुर्यादित्यस्य प्रत्येकं प्रयोगकर्तव्यताशयस्तु गौरवदुष्टः । तदेतदाह **एकवचनान्तेति** । यदुक्तं प्रत्येकं निर्णयकारितालाभाय द्विवचनप्रयोगः कार्यः । तत्प्रयोगस्य औत्सर्गिककारणतावगमकत्वादिति । तत्र ब्रूमः । यद्यप्यत्र द्विवचनाभावात् औत्सर्गिकः तत्प्रत्ययो न सम्भवति । तथापि 'गङ्गास्नानं यागश्च स्वर्गं करोती'त्यादाविव प्रत्येकमिति पूरणेन औत्सर्गिकमेलनेन एककार्यकर्तृतां विहाय प्रत्येकं तत्कार्यकर्तृतायाः एकवचनप्रयोगेऽपि प्रत्ययवाक्यवत्येव प्रत्येकं कार्यकारिता-स्थले प्रत्येकं क्रियासम्बन्धस्यापि गङ्गास्नानं इत्यादावेव व्युत्पन्नत्वात् । ततश्च कुर्यात् इत्यस्य इदं द्वयमिति पूरणे प्रत्येकं तत्सम्बन्धाभिप्रायकत्वात् युक्तं प्रत्येकं निर्णयकारितालाभः इति परिहरति **पूर्वपक्ष्युत्प्रेक्षित इति** । एवमेवंजातीयके मूलटीकादौ योजना ज्ञेया । यत्र च क्रियापदान्तराभावनिबन्धनाशङ्का तत्र क्वचित् एकस्यैव क्रियापदस्योभयत्र प्रत्येकं सम्बन्धात् न पदान्तरसम्बन्धावश्यकतेति प्रतिपादनेऽपि न दोषः । अत एव वचनलिङ्गव्यत्यासादिनापि एकविशेषणान्वयोपपादनं **प्रत्यक्षमुपजीव्यं स्यात्** इत्यादौ कृतम् । ननु अस्तु इत्याद्युत्तरटीकायामपि प्रबलयुक्त्यागमयोः इत्यादौ प्रत्येकमिति पूरणीयम् । **न प्रबलयुक्तीति** । तस्या एव प्रबलागमबाधकता तु न युक्तेति भावः । व्यवस्थापनस्य कर्तुमशक्यत्वेऽपि किमित्यत आह **पूर्वोक्तेति** । यत् प्राक् कथञ्चित् प्रतिपक्षसम्भवादित्युक्तम् । तदुक्तरीत्या प्रतिपक्षमात्रस्यैव प्राप्तेः । तत्प्राप्तेः आशङ्कितायाः





परिहारस्यानेन भाष्येणाप्रतीतेः अस्य भाष्यस्य प्रकृतानुपयोग इत्यतः इत्यर्थ इति योजनीयमिति वदन्ति । **वस्तुतस्तु कथमेकवचनान्तेति** । एकवचनान्तावपि युक्त्यागमशब्दौ आगमश्चेति द्वन्द्वनिर्देशात् तद्बलाद्वा तद्द्वन्द्वानुप्रयोगरूप इमाविति‌पदपरामृष्टौ भवतः इति शक्यते वक्तुम् । कुर्यात् इत्येतत्तु कुरुतः इत्यर्थसमर्पकं कथं स्यात् येनोक्तस्य युक्त्यागमाभ्यां सम्बन्धसम्भवः इत्याशयः । यद्यपि एतत् द्वयं कुर्यादिति सम्बन्धाङ्गीकारे बाधकाभावः तथापि तथाध्याहार एव दोष इति भावः मूलकारस्येत्यदोषः । एवं च यथाश्रुत एव ग्रन्थो योजनीय इति ज्ञातव्यम् ।

**स०व्र०—** सिद्धान्तश्रुतेः स्वभावप्रयुक्तप्राबल्यसत्त्वेऽपि पूर्वपक्षश्रुतियुक्त्योर्बहुत्वप्रयुक्तप्राबल्यस्याधिकस्यापि सत्त्वाद्बाध एव सम्भवतीत्यभिप्रायेण कथञ्चिदित्युक्तम् ।

**विठ्ठल०— कथश्चिदिति** । युक्तिमात्रस्य श्रुतियुक्त्यपेक्षया दुर्बलत्वात् कथञ्चिदित्युक्तम् । उत्पत्स्यमानप्रागभावेन चात्र असच्छब्देन प्रागभावग्रहणे भाष्यन्यायविवरणतत्त्वप्रकाशिकाविरोधः । तत्रासच्छब्दस्य शून्यपरत्वप्रतीतेरिति वाच्यम् । तत्रत्यासच्छब्दानामपि प्रागभावपरत्वमेवेति चन्द्रिकायामुक्तत्वात् । भाष्यानुव्याख्यानयोरनेकार्थत्वात् न तट्टीकयोर्विरोध इति भावबोधेऽप्युक्तत्वाच्च । यो यदपेक्षया कुविन्दस्य पूर्वभावित्वेऽपि तुर्यादीनामपि कारणत्वात् स एव कारणमिति न हि सम्भवतीत्यर्थः ।

**॥ इति उक्तार्थस्य विवरणम् ॥**
**॥ इति अनारम्भणीयत्वशङ्का तन्निरासश्च ॥**
**॥ इति एतदधिकरणस्यारम्भणीयत्वसमर्थनम् ॥**

* * *

**॥ अथ उक्तार्थस्य सूत्राक्षरानुसारेण उदाहरणनिष्ठं व्युत्पादनं ॥**
**॥ अथ तत्र सूत्रोक्तपूर्वपक्षानुवादो द्वेधा ॥**
**॥ अथ तत्रादौ एकां वृत्तिमनुसृत्य सूत्रोक्तपूर्वपक्षानुवादः ॥**

५ **सु०—** तदिदमुदाहरणनिष्ठं व्युत्पादयितुं पूर्वपक्षमनुवदति सूत्रकारः **असदिति चेदिति** । अयमस्यार्थः । न ब्रह्मणो जगत्कर्तृत्वं युक्तम्, प्रमाणाभावात् । 'सदेव सोम्येदमग्र आसीत्तत्तेजोऽसृजत'त्यादिश्रुतिरस्तीति चेन्न, तस्या युक्तिविरुद्धत्वेन भवदभिमतार्थे प्रामाण्याभावात् । तथा हि । महाप्रलये तावदुत्पत्स्यमानकार्यप्रागभावोऽवश्यमङ्गीकरणीयः, अन्यथा सर्गादौ कार्योत्पादायोगात् । न चास्यान्यत्र चरितार्थतोपलभ्यते । ततश्च स एव सकलकार्यकारणं भविष्यति ।





अयमत्र प्रयोगः । महाप्रलयवर्ती कार्यप्रागभावो महदादिकार्यकारणं भवितुमर्हति, अन्यत्रानुपक्षीणत्वे सति नियमेन तत्पूर्वभावित्वात्; योऽन्यत्रानुपक्षीणत्वे सति नियमेन य(तः)त्पूर्वभावी, स तस्य कारणम्, यथा कुविन्दः पटस्येति ॥ महदादिकं वा प्रागभाव-कार्यम् अनन्यथासिद्धनियतपश्चाद्भावित्वात्, यत् यदनन्यथासिद्धनियतपश्चाद्भावि तत् तत्कार्यम्, यथा पटः कुविन्दस्येति ।

नन्वत्र जगत्प्रागभावस्य जगत्कारणत्वमात्रं वा साध्यम्, अन्ययोगव्यवच्छेदेन वा । आद्येऽर्थान्तरता, प्रागभावस्य कारणत्वेऽपि ब्रह्मकारणतासम्भवात् । द्वितीये व्याप्त्यभावः । न हि 'यो यदपेक्षया पूर्वभावी, स एव तत्कारणं, नान्यः' इति नियमोऽस्ति, ततः प्राग-भावस्य जगत्कारणत्वेऽपि तत्समानन्यायानामीश्वरादीनामपि तत्कारणत्वमङ्गीकार्यमिति ॥ मैवम् । स्यादेतदेवम्, यदीश्वरादीनां प्रलये सत्त्वमेव स्यात् । न चैतदस्ति । सिद्धान्तिना कारणत्वेनाशास्यमानमीश्वरादिकं प्रलयेऽसद्भवितुमर्हति भावत्वान्महदादिकार्यवदिति युक्तिवि(रुद्धत्वात्)रोधः । एवञ्च(श्चेदी)ईश्वरादीनां प्रलयेऽसत्त्वसिद्धौ प्रागभावस्य कार-णत्वमात्रसाधनेऽपि तस्यैव कारणत्वमिति सिद्ध्यति ॥ ननु च यत्कार्यं तत्सकर्तृक-मिति नियमान्महदादिकर्तृत्वेनेश्वरोऽवश्यमङ्गीकरणीयः । न । प्रलये तत्सत्ता(त्त्वा)ऽभावस्य प्रमितत्वेन प्रागभावस्यैव जगत्कर्तृत्वोपपत्तेः । न चैतदनुमानजातमुदाहृतश्रुतिविरुद्धत्वे-नाप्रमाणमिति साम्प्रतम्, 'असदेवेदमग्र आसीत् । तदसदेव सन्मनोऽकुरुत । असतः सदजायते'त्यादिश्रुतिसंवादित्वेन श्रुतिमात्रतः प्राबल्यात् । प्रबलयुक्तिविरुद्धायाश्च श्रुतेः स्वार्थपरित्यागस्यातीताधिकरणे स्थितत्वात् । प्रागभावस्यापि स्वरूपसत्त्वादिना सदेवे-त्यादिप्रयोगविषयत्वोपपत्तेः ।

ननु 'एतेन सर्वे' इत्यसदादिशब्दानां ब्रह्मार्थत्वमुक्तम् । तत्किं शब्दानामन्यत्र शक्तिरेव नास्ति, किं वा श्रुतेस्तत्र तात्पर्याभावः । नाद्यः, समाकर्षाङ्गीकारात् । न द्वितीयः, युक्त्युपेतायास्तत्र तात्पर्योपपत्तेः । तथाऽपि प्रागभावस्यैव कारणत्वं कर्तृत्वं च न क्वाप्युप-लब्धमिति चेन्न, अलौकिकार्थस्य यथागमं ग्राह्यत्वात् । सन्ततोत्पत्तिप्रसङ्गस्तु ब्रह्मवादि-नोऽपि समानः । इच्छादिकारणानां कादाचित्कत्वेन तत्समाधानं ममापि समानम् । अत एव श्रुतिराह 'तन्मनोऽकुरुते'ति । तत् तस्मात्, तत्तत्प्रागभावस्यैव तत्तत्कर्तृत्वादुक्त-





**मयुक्तमिति । तदिदमुक्तम् असदिति । अभावः श्रुत्या जगत्कर्तृत्वेनोच्यते, अनुमीयते च तथा, तस्मात् स एव जगत्कर्तेति ।**

**अत्रासच्छब्दो भावसाधनः श्रुत्यनुगमार्थमभावे प्रयुक्तः ।**

**परि०— युक्तिविरुद्धत्वेनेति** । प्रलये सर्वासत्त्वसाधकभावत्वयुक्तिसहितया प्रागभावस्य कारणत्वसाधकयुक्त्या, तथा कार्यस्य सकर्तृकत्वनियमात् प्रलये भावमात्रस्य अभावेन तत्कर्तृत्वायोगे परिशेषादभावस्यैव कर्तृत्वमिति परिशेषरूपयुक्त्या च विरुद्धत्वेनेत्यर्थः । प्रलये तत्सत्ताभावस्येत्यादिनाऽग्रे परिशेषेण कर्तृत्वं सिषाधयिषुरादौ कारणत्वमात्रं तावत्साधयितुं वक्ष्यमाणहेतोर्विशेष्यासिद्धिं तावन्निराह **महाप्रलय इत्यादिना** । सूत्रेऽसच्छब्दः छान्दसभावार्थः सन् शत्रन्त अभावपर इति भावेनाह **उत्पत्स्यमानकार्यप्रागभाव इति** । सूत्रानुसारेण प्रयुक्तमेकवचनं समुदायाभिप्रायम् । तत्तत्कार्यप्रागभावाः इत्यर्थः । तेषामनेकत्वेऽपि प्रमितत्वादप्रमितेश्वरादपि लाघवमिति भावः । नष्टकार्यप्रागभावमादायान्योन्याभावादिकमादाय च बाधवारणायोत्पत्स्यमानकार्येति, प्रागिति च विशेषणद्वयम् । **अवश्यं** नियमेनेत्यर्थः । एतेनाश्रयासिद्धिरपि निरस्ता । विशेषणासिद्धिं निराह **न चास्येति** ।

**महदादिकार्यकारणमिति** । महदादिकार्यजननशक्त्युपेतमित्यर्थः । एवं च साध्यावैशिष्ट्यशङ्कानवकाश इति ध्येयम् ।

**तत्समानन्यायानामिति** । अन्यत्रानुपक्षीणनियतकार्यपूर्वभाववतामित्यर्थः । **स्यादेतदिति** । **एतत्** ईश्वरादिकारणत्वम् । एवं प्रागभावसमानन्यायतया स्यात् तदेत्यर्थः । सूत्रेऽसच्छब्दः कर्त्रर्थकशत्रन्तः सन् अभावप्रतियोगिपर इति भावेन प्रयोगान्तरसूचकत्वेन वृत्त्यन्तरमुपेत्य प्रयोगमाह **सिद्धान्तिनेत्यादिना** । सिद्ध्यसिद्धिभ्यामीश्वरपक्षकासत्त्वसाधनायोगात्सिद्धान्तिनेत्यादिविशेषणम् । तावता नन्वत्रेत्यादिना कृतचोद्यस्य कः परिहार इत्यतो भावत्वयुक्तिसहिता सती प्राचीनयुक्तिरेव सिद्धान्तविरोधिनी विवक्षितार्थसाधिकेत्याह **एवं चेति** । **तस्यैव कारणत्वमिति** । कर्तृत्वोपादानत्वादिना सर्वेणापि रूपेणेति भावः । सर्वेण रूपेण तस्यैव कारणत्वमित्येतच्छङ्कोत्तराभ्यां व्यनक्ति **ननु चेति** । परिहरति **नेति** । **तत्सत्त्वे(त्ते)ति** । ईश्वरादिसत्ताभावस्येत्यर्थः । एतच्चोपलक्षणम् । यत्कार्यं तत्सोपादानकमिति नियमात् । महदाद्युपादानत्वेन प्रधानमवश्यमङ्गीकरणीयमिति चेत् न, प्रलये अभावत्वयुक्त्या तत्सत्ताभावस्य प्रमितत्वेन मायावाद्यङ्गीकृतब्रह्मण इव कर्तृभूत-





प्रागभावस्यैवोपादानत्वोपपत्तेरित्यपि ध्येयम् । ईश्वरकर्तृत्वविरोधित्वात् कर्तृत्वांश एवोपपादितो नोपादानत्वांशः स तूपलक्षणयोपात्त इति ध्येयम् । **उदाहृतेति** । सदेव सोम्येत्यादिश्रुतीत्यर्थः । 'असदेवेदमग्रे'ति प्रागभावस्य नियतपूर्ववृत्तित्वयुक्तिसंवादिनी । 'तदसदेवे'ति श्रुतिः प्रागभावस्य कर्तृत्वसाधकपरिशेषयुक्तिसंवादिनी । तृतीया तु कार्यस्य प्रागभावमात्रजन्यत्वसंवादिनी । न च श्रुतावसच्छब्दः तुच्छपर इति वाच्यम् । आसीदित्यादिसत्त्वोक्त्यादिविरोधादिति भावः । **स्वार्थ-परित्यागस्यातीताधिकरणे स्थितत्वादिति** । एतेन पूर्वसिद्धान्तन्यायेन पूर्वपक्षप्रवृत्तेरापवादिकी सङ्गतिरित्यपि सूचितम् । **स्वरूपसत्त्वादिनेति** । कार्योन्मुखत्वादिना मनोऽकुरुतेत्यादियोगः आदिपदार्थः ।

**एतेन सर्व इतीति** । 'एतेन सर्वे व्याख्याता' इति पूर्वाध्यायान्तिमाधिकरणे 'नैव साधयितुं शक्यः' इत्यादियोगेन असत्पदवाच्यतुच्छस्येश्वराधीनतया तदधीनत्वन्यायेन च ब्रह्मार्थत्वमुक्तम् । तथा च कथं तेनान्यप्राप्तिरुच्यत इति भावः । अन्यत्रापि वृत्त्यङ्गीकारादिति भाष्यदिशा समाधत्ते **तत्किमिति** । **अन्यत्रेति** । भावव्युत्पत्त्यादिना अभावादावित्यर्थः । एतेन सर्व इत्यत्र असत्पदस्य तुच्छपरत्वमुपेत्य विचारप्रवृत्तावपि इह भावव्युत्पत्त्यादिना योगेन अभावार्थत्वोपगमेन विचार-करणमविरुद्धमिति ज्ञेयम् । **तत्रेति** । अभावादौ । **समाकर्षेति** । भगवदर्थकानामपि शब्दानामन्यत्र न्यूनवृत्त्या वाचकत्वेन व्यवहारस्य समाकर्षादित्यधिकरणे स्वीकारादित्यर्थः । **युक्त्युपेताया इति** । न चैवं स्वार्थपरत्वाय श्रुतिर्युक्तिमपेक्षते, युक्तिः स्वप्रामाण्याय श्रुतिसंवादापेक्षेत्यन्योन्याश्रय इति शङ्क्यम् । युक्तेः सदेवेत्यादिश्रुत्यर्थबाध एव श्रुतिसंवादापेक्षा न तु प्रागभावकारणत्वादिसाधन इति तत्र परानपेक्षत्वात् । **कारणत्वं कर्तृत्वं चेति** । कारणत्वमुपादानत्वं ध्येयम् । **ब्रह्मवादिनो-ऽपीति** । ब्रह्मैवोपादानं कर्ता चेति वदतोऽपि कर्त्रुपादानसत्त्वादजस्रकार्योत्पत्तिप्रसङ्ग इत्यर्थः । **ममापि समानमिति** । अभाव(स्यापि का)स्य कादाचि(त्ककार्योन्मुखत्वादिरूपेच्छा)त्केच्छादि-मत्त्वोपगमादिति भावः । **उक्तमिति** । ब्रह्मणो विश्वकर्तृत्वमित्यर्थः । सर्वं सूत्रारूढतया दर्शयति **तदिदमुक्तमिति** । असदिति सूत्रखण्डेनेति योज्यम् । **अत्रेति** । सूत्रे, सूत्रस्यास्मिन्नर्थ इति वा । **असच्छब्द इति** । नञुपपदसच्छब्द इत्यर्थः । अस् भुवीत्यस्माद्भावे छान्दसशतृप्रत्यये श्नसोरल्लोपे नञ्समासे असदिति रूपम् । कर्तृसाधनेऽप्येवमेव प्रक्रिया । प्रतिपत्तिलाघवायाभाव इत्येव कुतो नोक्तं सूत्र इत्यत आह **श्रुतीति** । असदेवेदमग्र आसीदित्यादिश्रुतीत्यर्थः । एतेन श्रुतावपि भावसाधन इति सूचितम् ।





**गु०दी०— अत्रासच्छब्दो भावसाधन** इत्यत्र उत्पत्स्यमानकार्यजातस्य सत्त्वं नेति भावसाधनतयाऽभावे प्रयुक्त इत्यर्थः । **श्रुत्यनुगमार्थम्** इत्यत्र 'असदेवेदमग्र आसीदि'ति श्रुत्यनुगमार्थमित्यर्थः । श्रुतौ हि 'सन्न भवतीत्यसदि'ति तत्र कर्तृव्युत्पत्त्यङ्गीकारेऽविद्यमानस्यैव कारणतोक्ता स्यात् तच्चानुपपन्नम् । अतो भावव्युत्पत्तिमादाय प्रागभावस्य कारणत्वपरा श्रुतिरिति सिद्धम् । अतः श्रुत्यनुगमायेत्युक्तम् ।

**यादु०— उत्पत्स्यमानप्रागभाव इति** । न च अत्रासच्छब्देन प्रागभावग्रहणे भाष्यन्यायविवरणतत्त्वप्रकाशिकाविरोधः, तत्रासच्छब्दस्य शून्यपरत्वप्रतीतेरिति वाच्यम् । तत्रत्यासच्छब्दानामपि प्रागभावपरत्वमेवेति चन्द्रिकाकारैरुक्तत्वात् । वस्तुतस्तु भाष्यानुव्याख्यानयोरनेकार्थत्वात् न तट्टीकयोर्विरोध इति भावबोधकारैर्निपुणतरं समर्थितं तदेवानुसन्धेयम् । **कारणं भवितुमर्हतीति** । अत्र शक्तिरूपं कारणत्वं वा तत्पदवाच्यं वा साध्यतया विवक्षितमतो न साध्याविशिष्टतेति ध्येयम् । **तत्समानन्यायानामिति** । अनन्यथासिद्धनियतपूर्ववर्तिनामित्यर्थः । **सन्ततोत्पत्तीति** । प्रागभावस्य सत्त्वेन प्रलयेऽपि कार्योत्पत्तिप्रसङ्ग इत्यर्थः । **अत्रासच्छब्द इति** । असच्छब्दान्तर्गतः सच्छब्द इत्यर्थः । एवमग्रेऽपि । **भावसाधन इति** । भवनं सदिति भावसाधन इत्यर्थः । शतृप्रत्ययस्य भावार्थत्वं छान्दसमिति भावः । ननु किमेवमस्वरसासच्छब्देन, अभाव इत्येव कस्मान्नोक्तमित्यत आह **श्रुत्यनुगमेति** । सूत्रं श्रुत्यनुसारीति भावः ।

**वं०प०—** वक्ष्यमाणानुमाने आश्रयासिद्धिं परिहरति **महाप्रलय इति** । विशेषणासिद्धिं परिहरति **न चेति** । **नियमोऽस्तीति** । तथा सति दण्डो घटापेक्षया पूर्वभावीति स एव कारणमिति स्यात् । तथा च चक्रादेरकारणता स्यादिति भावः । **उक्तमिति** । ततश्चासदेवेति श्रुतिर्न प्रागभावस्य कारणताप्रापिकेत्यर्थः । **युक्त्युपेताया इति** । उपपत्तेस्तात्पर्यलिङ्गत्वादिति भावः । **भावसाधन इत्यादि** । नञुपपदात् शदॢ विशरणेत्यादि धातोर्भावे कर्तरि वा क्विपि तस्य लोपे च सदिति रूपम् । पश्चान्न सत् असदिति भवति ।

**कं०रा०— न चेति** । अस्योत्पत्स्यमानकार्यप्रागभावस्यान्यत्रोपक्षीणता नैवोपलभ्यत इत्यर्थः । **उदाहृतेति** । 'सदेव सोम्येदमग्र आसीदि'त्यादिश्रुतिविरोधेनेत्यर्थः । **स्वार्थपरित्यागस्येति** । तथा च सदेवेत्यादिश्रुतिर्न ब्रह्मविषयेति भावः । ननु सदेवेत्यादिश्रुतिर्न ब्रह्मविषयेति वदता प्रागभावविषया सेति वाच्यम् । तच्चायुक्तम् । प्रागभावस्य सत्तादिजातिविरहेण सदेवेत्यादिवाक्यगतसदादिशब्दप्रयोगविषयत्वानुपपत्तेरित्यत आह **प्रागभावस्यापीति** । ननु 'एतेन सर्वे व्याख्याता व्याख्याता' इत्यत्र असदादिशब्दानां ब्रह्मार्थकत्वस्योक्तत्वात् 'असदेवेदमग्र आसीदि'त्यादेः कथं प्रागभावविषयत्वमिति शङ्कते **नन्विति** । परिहरति **तत्किमित्यादिना** । ननु प्रागभावस्यैव कारणत्वे तस्य सदा सत्त्वात् कार्यस्य सततोत्पत्तिप्रसङ्ग इत्यत आह **सततेति** । ननु ब्रह्मकारणत्वपक्षे तदिच्छादेः कादाचित्कत्वेन सततोत्पत्तिर्न प्रसज्यत इत्यत आह **इच्छादीति** । **अत एवेति** । प्रागभावस्यैव कारणत्वे सततोत्पत्तिप्रसङ्गस्य तदिच्छा कादाचित्कत्वेन समाधेयत्वादेव तदसदेव सन्मनोऽकुरुतेति श्रुतिरसच्छब्दितप्रागभावस्येच्छा कादाचित्कत्वमाहेत्यर्थः । ननु





कर्तृसाधनस्यासच्छब्दस्यैव प्रयोगे किं प्रयोजनमित्यत आह **श्रुत्यनुगमार्थमिति** । 'असदेवेदमग्र आसीदि'-त्यादिश्रुतावसच्छब्दस्यैव सत्त्वात्सूत्रस्य श्रुत्यनुगमार्थं स एव प्रयुक्त इति भावः ।

**श्रीनिधि०— महदादिकारणं भवितुमर्हतीति** । कारणमिति ज्ञेयो भवितुमर्हतीत्यर्थः । अन्यथा साध्याविशेषप्रसङ्ग इति द्रष्टव्यम् । **प्रागभावकार्यमिति** । अत्रापि तत्त्वेन ज्ञेयत्वं साध्यम् । उक्तानुपपत्तेरेव । **उदाहृतश्रुतिविरुद्धत्वेनेति** । 'सदेव सोम्येदमग्र आसीदि'त्युदाहृतश्रुतिविरुद्धत्वेनेत्यर्थः ।

**शे०वा०—** नन्वसत्कारणं न हीत्याद्युत्तरभाष्यमनर्थकम् । न चैतत् 'न' इति सिद्धान्तांशव्याख्यान-रूपत्वान्नानर्थक्यमिति वाच्यम् । असत्कार्यमित्युत्तरानुव्याख्यानानुसारेणासदिति सौत्रखण्डस्य भावत्वेनेश्वरा-द्यसत्त्वस्थित्या प्रागभावकर्तृताया श्रुत्यनुमानप्रमेयत्वप्रतिषेधार्थकस्यास्य 'न' इति सिद्धान्तांशव्याख्यानत्वा-योगादित्यतो न केवलम् 'असदि'ति चेदिति सौत्रखण्डस्येश्वराद्यसत्त्वसाधकत्वं किन्नाम प्रागभावकर्तृत्व-साधकत्वमपीति नास्य तद्व्याख्यानत्वानुपपत्तिरिति भावेन सूत्रखण्डं द्वेधा योजयितुं तत्प्रसञ्जयति **तदिद-मित्यादिना** । सर्ववैशिष्ट्ये विष्णोर्युक्तिविरोधनिरासकत्वादस्याधिकरणस्यैतदध्यायान्तर्भावमुपपादयितुं तथा पूर्वपक्षमारचयति **अयमर्थ इत्यादिना** । काऽसौ विरोधिनी युक्तिरित्यतस्तामुपदर्शयितुं करिष्यमाणानुमाने आश्रयासिद्धिहेतुविशेषणासिद्धी तावत्परिहरति **महाप्रलय इत्यादिना** । **कार्योत्पादायोगादिति** । प्रागसतः सत्तासम्बन्धस्यैवोत्पादशब्दार्थत्वादिति भावः । करिष्यमाणानुमाने हेतुविशेषणासिद्धिं परिहरति **न चास्येति** । अस्तु उत्पत्स्यमानकार्यप्रागभावस्य महाप्रलयेऽवस्थानमन्यत्र अचरितार्थत्वं च, किमेतावतेत्यतः पटं प्रति कुविन्दस्येवानन्यथासिद्धनियतपूर्वक्षणवृत्तित्वादुत्पत्स्यमानकार्यप्रागभावस्योत्पत्स्यमानसकलकारणत्वप्राप्तिरित्याह **ततश्चेति** । महदादिप्रागभावस्य पक्षत्वात्तदन्यस्य चोक्तसाधनोपपन्नस्य महदादिकारणस्यासिद्ध्या दृष्टान्ताभावेन विशेषव्याप्त्यसम्भवात् सामान्यव्याप्तिमाह **य इति** । **नियमोऽस्तीति** । कुविन्दादौ व्यभिचारादिति भावः । **तत्समानन्यायानामिति** । प्रागभाववदनन्यथासिद्धनियतपूर्ववर्तिनामित्यर्थः ।

**प्रागभावस्यैव जगत्कर्तृत्वोपपत्तेरिति** । ईश्वरतत्कर्तृत्वकल्पनापेक्षया क्लृप्तस्य प्रागभावस्य कर्तृत्व-मात्रकल्पनस्यैव लघुत्वादिति भावः । **उदाहृतेति** । सदेव सोम्येदमग्र आसीदित्यादिरूपेत्यर्थः । श्रुतियुक्त्योः श्रुतेः स्वभावप्राबल्यादिति भावः । **साम्प्रतं** युक्तमित्यर्थः । ततश्च न तद्विरोधेन सदेव सोम्येत्यादिश्रुतेरस्मदभि-मतार्थे प्रामाण्याभाव इति भावः । **संवादित्वेनेति** । उक्तानुमानजातस्येति शेषः । ततश्च युक्तिविरोधमात्रस्य श्रुतेः स्वार्थात्प्रच्यावनासमर्थत्वेऽपि प्रबलयुक्तिविरोधस्य तत्समर्थत्वान्न सदेवेत्यादेर्भवदभिमतार्थे प्रामाण्यमिति भावः । युक्तिविरोध इव प्रबलयुक्तिविरोधोऽपि न तत्र समर्थ इति वदन्तं प्रति तथा सति व्याप्तिपक्षधर्मतोपेततया प्रबलयुक्तिविरोधेन मृदब्रवीदित्यादिवचनानां प्रतीतार्थे प्रामाण्याभावो न स्यादित्यभिप्रेत्य तत्रेष्टापत्तिं परिहरति **प्रबलेति** । अतीताधिकरणेऽभिमानिव्यपदेशस्त्वित्यधिकरण इत्यर्थः । ननु मृदब्रवीदित्यादिवचनानां प्रबलयुक्ति-विरोधेन प्रतीतार्थत्यागो युक्तः । मृदाद्यभिमानिदेवतारूपाबाधितार्थान्तरमादायार्थत्वोपपत्त्या प्रामाण्याव्याहतेः ।





इह तु सदेवेत्यादेः प्रतीतार्थत्यागे न प्रामाण्यसम्भवः । अबाधितस्यार्थान्तरस्याभावादित्यतोऽत्रापि प्रागभावरूपार्थान्तरमादायार्थवत्त्वान्नाप्रामाण्यप्रसङ्ग इत्यभिप्रेत्य सदेवेत्यादेः प्रागभावे सावकाशतामुपपादयति **प्रागभावस्यापीति** ।

**ब्रह्मार्थत्वमुक्तमिति** । ततश्च सदेवेत्येतत्समानार्थस्य असदेवेत्यादेर्न युक्तिसंवादकत्वेन तत्प्राबल्यापादकतेत्यर्थः । **तथाऽपीति** । घटप्रागभावस्य घटं प्रति कारणतायाः कर्तृत्वस्य च लोकेऽदर्शनात् महदादिकार्यप्रागभावस्य महदादिकारणत्वं तत्कर्तृत्वं चायुक्तमित्यर्थः । लोकेऽशरीरस्य कर्तृत्वादर्शनेऽपि यथा आगमबलादीश्वरस्याशरीरस्यैव कर्तृत्वं, यथा वा लोके उपादानस्य कर्तृत्वादर्शनेऽपि परमते आगमबलादुपादानस्यैव कर्तृत्वं तथेहापि प्रागभावान्तरे कर्तृत्वादर्शनेऽप्यागमबलान्महदादिप्रागभावस्य महदादिकर्तृत्वं नानुपपन्नमित्याशयेनाह **अलौकिकार्थस्येति** । ननु चैवं यदोत्पत्तिरिष्यते ततः पूर्वमपि महदादेरुत्पत्तिः स्यात् तदाऽपि प्रागभावस्य सत्त्वादन्यस्य चापेक्षणीयस्याभावादित्यतः तर्हि त्वत्पक्षेऽपि प्रलये उत्पादकस्य ब्रह्मणः सद्भावादन्यस्य चापेक्षणीयस्याभावादुत्पत्तिप्रसङ्गस्तुल्य इत्याह **सन्ततेति** । ननु न ब्रह्ममात्रं कर्तृ किन्तु ज्ञानेच्छादिरूपकादाचित्ककारणान्तरसचिवमेव । तथा चापेक्षणीयस्य कारणान्तरस्य सद्भावासद्भावाभ्यामुपपन्नावुत्पत्तेः कालविशेषभावाभावौ इत्यतः तर्हि मत्पक्षेऽपि तत्सहितस्यैव प्रागभावस्य कर्तृत्वात् तद्भावाभावकृतौ उत्पत्तेः कालविशेषभावाभावावित्याह **इच्छादीति** । **तदिति** । सन्ततोत्पत्तिप्रसङ्गेत्यर्थः । ननु ब्रह्मणश्चेतनत्वेन तस्य ज्ञानेच्छाद्युपपत्त्या तद्विशिष्टस्य तस्य कर्तृत्वोपपत्त्या तत्कादाचित्कत्वेन मत्पक्षे उक्तप्रसङ्गपरिहारोपपत्तावप्यचेतनत्वाद्विश्वप्रागभावस्य ज्ञानेच्छाद्यनुपपत्त्या न तद्विशिष्टस्य तस्य कर्तृत्वमिति नेच्छादिकादाचित्कत्वेनोक्तप्रसङ्गपरिहारस्त्वत्पक्ष इत्यतः शब्दगम्यस्यार्थस्य यथाशब्दमङ्गीकर्तव्यत्वेन चेतनत्वादेस्तद्भावाभावाप्रयोजकत्वात् प्रकृते च 'तदसदेव सन्मनोऽकुरुते'ति श्रुतावसच्छब्दार्थस्य विश्वप्रागभावस्य मनःशब्देन वा कर्त्रर्थकलकारेण वा ज्ञानेच्छाद्युक्तेर्युक्त एव तत्कादाचित्कत्वेन सन्ततोत्पत्तिप्रसङ्गपरिहारो मत्पक्ष इत्याशयवानाह **अत एवेति** । उपन्यस्तपूर्वपक्षस्योत्सूत्रत्वशङ्कानिरासाय सूत्रारूढतामुपपादयति **तदिदमिति** ।

**अभाव इति** । प्रागभाव इत्यर्थः । नन्वसच्छब्दस्य शून्ये रूढस्य कथं प्रागभावपरत्वमित्यतो योगेन तद्दर्शयति **अत्रेति** । **भावसाधन इति** । भवनं सत्, न सत् असदिति भावसाधनान्त इत्यर्थः । यद्यपि शतृप्रत्ययः कर्तर्येव विहितो न तु भाव इति भावसाधनत्वं नाश्रयितुं युक्तम् । तथाऽपि कर्तरि विहितोऽपि, छन्दसि भावेऽपि भवतीत्यभिप्रेत्य भावसाधनत्ववचनमिति ध्येयम् । ननु लाघवादावश्यकत्वाच्चाभाव इत्येव हि वक्तव्यं किमसच्छब्देनेत्यतः सूत्रस्य श्रुत्यनुसारित्वादसदेवेत्यादिश्रुत्यनुगतिसूचनार्थमसच्छब्दप्रयोग इत्याह **श्रुतीति** ।

**वा०र०— भावत्वेनेति** । भावत्वरूपहेतुनेत्यर्थः । सौत्रखण्डस्येश्वराद्यसत्त्वसाधकत्वं किं नामेत्येव पाठः । अर्थपदं तु अधिकं लेखकप्रसादादिति बोध्यम् । ननु कारणात्मना सत एव कार्याकारेण परिणामपक्षे





अत्यन्तसत्कार्यवादे वा महदादेः प्रलये सत्त्वमेवास्तीति तदसत्त्वनिबन्धनः प्रागभावो न सिद्ध्यतीत्यतः अतः सत्तासम्बन्ध एवोत्पत्तिरिति वदतो मते सत्कार्यवादाभावात् तद्वादस्याप्रामाणिकत्वाच्च युक्तमेव महदादेः प्रलये सत्त्वाभावनिबन्धनप्रागभावसत्त्वसाधनं इत्याशयेनोत्पादशब्दार्थमाह **प्रागसत इति** । एतेन प्रलये प्रागभावानभ्युपगमे तद्रूपकारणाभावात् कार्यं न स्यात् (इति) यथाश्रुतं एव व्याख्यानं निरस्तमित्यपि सूचितम् । प्रलये प्रागभावाभावे तद्रूपकारणाभावात् इति व्याकुर्वतापि प्रागभावाभाव इत्यनेन कार्यसत्त्वमेवोक्तं भवति । तथा च प्रलये कार्यसत्त्व इति लब्धे उत्पादायोगस्य प्रागसतः उत्पादितरीत्या एव उपपादनीयत्वात् प्रकारान्तरेणोक्तिः व्यर्थेति । **नन्वत्रेत्यादि** मूलम् । **असदिति** । सौत्रखण्डस्याद्यर्थमभिप्रेत्य एतच्च 'असत् अभावः अपरापि वृत्तिः' इत्युत्तरमूले स्पष्टम् । अनन्यथासिद्धनियतेति उक्तमूलानुसारेणेदम् । **ईश्वरतत्कर्तृत्वेति** । ईश्वरश्च तत्कर्तृत्वं च तदुभयकल्पनापेक्षया इत्यर्थः । **कर्तृमात्रस्येति** । धर्मितद्धर्मकल्पनातो धर्ममात्रकल्पनायाः लब्धलघुत्वादित्यर्थः । मूले **असदेवेदमग्र आसीत् तत् असदेव सन् मनोऽकुरुत असतः सदजायतेत्यादीति** । यद्यपि भाष्ये 'असदेवेदमग्र आसीत्' इत्येतावदेव वाक्यं असत्कारणत्वसाधकयुक्त्युपोद्बलकत्वेनोदाहृतम् । तथापि सिद्धान्तसाधकत्वेनाभिप्रेतछान्दोग्यस्थ 'सदेव सोम्येदमग्र आसीत्' इत्येतद्वाक्ये सन्निहित 'तद्धैक आहुः असदेवेदमग्र आसीत्' इति वाद्यन्तरोक्तानुवादस्थस्यासदेवेति वाक्यस्य ग्रहणमिति प्रतीतिः स्यात् । न चासौ युज्यते । असतः प्राप्तिप्रतिपादक सर्वशब्दानां इत्यादि भाष्यतट्टीकाविरोधापातात् । न हि छान्दोग्यस्थ 'असदेवेदं' इत्येतद्वाक्यगतासच्छब्दस्य 'एतेन सर्वे व्याख्याताः' इत्यत्र भगवत्परत्वमुपपादितमस्ति । येन यत्रान्यवाचकत्वेऽपि अविरोधः तत्रान्यदपि अमुख्यतयेति भाष्यानुसारेण तदधीनत्वन्यायेनान्यत्रापि वृत्त्या असतः प्राप्तिः स्यात् । अतः तावन्मात्रस्योदाहरणं स्थलान्तरस्थवाक्यस्य प्रतीकोपादानतया एव भाष्ये कृतम् । न तु छान्दोग्यस्थवाक्याभिप्रायेण इत्याशयेन स्वयं तच्चोदाहरणं कृतम् । तत् **असदेव सन्मनोऽकुरुतेति । तत्** प्रलयकालीनं **असदेव सत् मनः** तत्परिणामभूतं ज्ञानादिकं **अकुरुत** अकरोत् । अत एव एतेन शिष्टेति सूत्रव्याख्यानावसरे मनसः इति भाष्यपदस्य ज्ञानेच्छाप्रयत्नार्थत्वं मूले वक्ष्यते । असतः सदजायतेति वाक्यं 'देवानां पूर्वे युगे सतः सदजायत' इत्यादि ऋगतं (ऋग्गतं) उदाहृतम् । आदिपदेन तु असद्वा इदमग्र आसीत् इत्येतत् वाक्यग्रहणम् । तस्य एतेन सर्वे इत्यत्र मूले उदाहरणात् । उदाहरिष्यते च तदिह टीकायामिति विवेकः । असद्व्यपदेशान्नेति चेत् इत्येतत्सूत्रीय परापव्याख्यानानुवादावसरे च तद्वाक्यद्वयं उदाहरिष्यते । तत्र तदासीत् इति च वाक्यशेषः उदाहृतः । एतेन छान्दोग्यवाक्याश्रयणेन व्याख्यातारो निरस्ता वेदितव्याः इति ज्ञातव्यम् । आनन्दमयाधिकरणचन्द्रिकायां तु टीकायां 'असद्वा इदमग्र आसीत्' इत्यस्येत्यादिना अपरममुख्यवृत्त्या अन्यपरत्वराहित्योक्तावपि तत्पक्षे टीकास्वारस्याभावः आयातीत्यतो 'यद्वा ब्रह्मे'त्यादिना बलवत्त्वं प्रकारान्तरेण निरूपितम् । तथैव तट्टीकोक्तेः । तत्त्वप्रकाशिकाग्रन्थे अत्र च चन्द्रिकानुसारेण निष्कर्षः कार्योऽस्ति । **युक्तमित्यर्थ इति** । युक्ते द्वे साम्प्रतमित्यभिधानात् इति भावः । स्वार्थात् प्रच्यावनासमर्थत्वेऽपीत्यपिपदयुक्तः पाठः । समर्थत्वेनेति तृतीयान्तपाठेऽपि अयमेवार्थः । तत्समर्थत्वात् इति पाठः । **व्याप्तिपक्षधर्मतेति** । धर्मोपेततया प्रबलाया युक्तिः इति सम्बन्धः । **कारणतायाः कर्तृत्वस्य च**





**इति** । कारणत्वमात्रस्य दर्शनेऽपि कारणत्वकर्तृत्वयोः उभयोरपि दर्शनाभावादित्यर्थः । घटप्रागभावस्य कारणत्वेऽपि कर्तृत्वाभावादित्याशयः । **भावसाधन इतीति** । भावो धात्वर्थः ससाधनं अभिधेयं यस्येति तथोक्तः भाववाचक इति यावत् । एवं पिपीलिकालिपिश्चापि प्रमाणं इत्येतत् मूलटीकायां व्याख्यातप्रकारेण ज्ञातव्यम् । 'तुल्यास्य प्रयत्नमि'ति सूत्रीयभाष्यगत 'प्रपूर्वात् यततेः भावसाधनः न प्रत्ययः' इत्यत्र 'भावसाधनमित्यस्य भावे अभिधेयेन प्रत्ययः क्रियते । तेन नशब्दस्य भावसाधनत्वं भवती'त्युक्तं कैय्यटे । सच्छब्दस्य भवनरूपभाववाचकत्वेऽपि असच्छब्दस्य तद्वाचकत्वाभावात् । भावसाधनपदं तदन्ततया व्याख्याति **भावसाधनान्त इति** । **यद्यपि शतृप्रत्यय इति** । यद्यपि शतुर्लडादेशतया पृथक्प्रत्ययत्वं अस्तीति शत्रादेशकर्तर्येव विहितः इत्येव वाच्यं, तथापि लटः प्रत्ययत्वेन तदादेशशतुरपि प्रत्ययत्वं इत्याशयेन शत्रादेशः कर्तरीत्येवात्र विवक्षितमिति न दोषः । न त्वशतृप्रत्यय एव स्वतन्त्रोऽभ्युपेयः 'इङ्धार्योः शत्र कृच्छ्रिणी' इत्यादिना धीयन् इत्यादौ तस्य सत्त्वेऽपि प्रकृते लडादेशतया स्वतन्त्रप्रत्ययत्वाभावात् इति बोध्यम् । शतुः कर्तर्येव विधानं तु पचन्तं चैत्रं पश्य पचता कृतं पचते देहीत्यादौ कर्तुरेव बोधात् इत्यादि ..........आकरे स्पष्टम् ।

**स०व्र०— अन्यथेति** । महाप्रलय उत्पत्स्यमानकार्यप्रागभावं यो नाङ्गीकरोति स प्रष्टव्यः; किं ध्वस्तस्योत्पत्तिः, किं वा उत्पन्नस्य । नोभयम्, उत्पादासम्भवात् । तस्मात् प्रागभावप्रतियोगिन इति वक्तव्यम् । तथा च प्रागभावानङ्गीकारे सर्गादौ कार्योत्पादो न सम्भवतीत्यर्थः । उक्तेरेव कारणत्वेनाभिप्रेतत्वान्न साध्यावैशिष्ट्यमिति ध्येयम् । **अनन्यथासिद्धनियतपश्चाद्भावित्वादिति** । अन्यथासिद्धात् अन्यः नियतः पश्चाद्भावो यस्येति विग्रहः ।

बाहुल्यादित्यस्य व्याख्यानं **प्राबल्यात् इति** । ननु अतीताधिकरणे अर्थान्तरसम्भवेन स्वार्थपरित्यागस्य कर्तुं शक्यत्वेऽपि 'सदेव सौम्य' इत्यादिश्रुतेः अर्थान्तराप्रतीत्या तस्य कर्तुमशक्यत्वेन प्रबलत्वात् तद्विरोधेन प्रागभावकर्तृत्वप्रतिपादकयुक्तिजातस्यैवाप्रामाण्यमित्यत आह **प्रागभावस्यापीति** ।

ननु 'असतः सदजायत' इत्यादिश्रुतेः, 'एतेन सर्वे व्याख्याता व्याख्याता' इत्यनेन असदादिशब्दानां ब्रह्मपरत्वस्य समर्थितत्वेन, ब्रह्मपरत्वेन तत्संवादित्वाभावेन प्रागभावकर्तृत्वादिप्रतिपादकयुक्तिजातस्य दुर्बलत्वात्, युक्तेः 'सदेव' इत्यादिश्रुतिविरुद्धत्वात् तस्यैवाप्रामाण्यमित्यभिप्रेत्य शङ्कते **नन्वेतेनेति** । परिहर्तुं पृच्छति **तत्किमिति** । **युक्तिसहिताया (युक्त्युपेताया) इति** । अयं भावः । श्रुतिद्वयस्य परस्परं विरोधे प्राप्ते तयोरन्यबाधकत्वे सामर्थ्यासम्भवेन स्वयं लब्धावकाशा युक्तिः अन्यतरागमस्यार्थनिश्चयं सम्पाद्य(दयित्वा) तत्सहकारं च स्वयं सम्पाद्य प्रबला सती अन्यतरागमं बाधत इति । **तत्प्रागभाव इति** । यथा ब्रह्मणः एकत्वेऽपि तत्तदिच्छानुसारेण तत्तत्कर्तृत्वम्, एवं प्रागभावस्यापि तत्तदिच्छानुसारेण तत्तत्कर्तृत्वमित्येवाभिप्रेतम् । न तु तत्तत्प्रागभावानामनन्तानां कर्तृत्वमिति ध्येयम् । **असच्छब्द इति** । भवनं सत् । न सत् असदिति





भावसाधनान्त इत्यर्थः । ननु 'अभाव इति चेत्' इत्यनुक्त्वा सूत्रकारेण असदिति असच्छब्दप्रयोगे किं निमित्तमित्यत आह **श्रुत्यनुगमार्थमिति** । **उपपत्तीति** । उपपत्तिविरुद्धो वेदार्थो न सम्भवति इत्येकवाक्यतया योज्यम् ।

**विट्ठल०— इत्यादिश्रुतिसंवादित्वेनेति** । असदेवेति प्रागभावस्य नियतपूर्ववृत्तित्वयुक्तिसंवादिनी असदेवेति तस्य कर्तृतासाधकपरिशेषरूपयुक्तिसंवादिनीयाकार्यस्य प्रागभावमात्रजन्यत्वसंवादिनी असदेवेत्यादिस्तर्हि कोऽर्थ इत्यत आह **प्रागभावस्यापीति** । अत्रादिशब्देन प्रामाण्यविषयग्रहणम् । **नन्वेतेन सर्व इति** । 'एतेन सर्वे व्याख्याता व्याख्याता' इति सूत्र इत्यर्थः । परिहरति **तत्किमिति** । एतेन सर्व इत्यत्र असत्परत्वमुपेत्य विचारप्रवृत्तावपि इह योगे भावार्थतोपगमेन विचारकरणमविरुद्धमिति ज्ञेयम् । ननु प्रागभावस्य कारणत्वेऽनादिनित्यत्वात् तस्य प्रलयकार्योत्पत्तिः स्यादित्यत आह **सन्ततोत्पत्तीति** । **अत्रासच्छब्द इति** । असच्छब्दान्तर्गतसच्छब्द इत्यर्थः । सच्छब्द इति क्वचित्पाठः । भवनं सदिति भावसाधन इत्यर्थः । ननु तर्ह्यभाव इति चेदित्यनुक्त्वा असदिति चेदिति कुतः सूत्रकारेणोक्तमित्यत आह **श्रुतीति** । असच्छब्द इति शेषः । सूत्रं श्रुत्यनुसारीति भावः ।

**चषक— अत्रासच्छब्द इति** । असच्छब्दशरीरे प्रविष्टः सच्छब्द इत्यर्थः । **भावसाधन इति** । शतृप्रत्ययस्य धात्वर्थानुवादकत्वं छान्दसमिति भावः ।

**॥ इति एकां वृत्तिमनुसृत्य सूत्रोक्तपूर्वपक्षानुवादः ॥**

* * *

**॥ अथ तत्र द्वितीयां वृत्तिमनुसृत्य सूत्रोक्तपूर्वपक्षानुवादः ॥**

६ **सु०— अपराऽपि वृत्तिः, 'भावत्वहेतुना कार्यवदीश्वरादिकमपि प्रलयेऽसदनुमीयत' इति । अत्रासच्छब्दः कर्तृसाधनः ।**

**परि०— अपरापि वृत्तिः** । अन्योऽप्यर्थः सूत्रखण्डस्येत्यर्थः । तामाह **भावत्वेति** । **असदिति** । अविद्यमानमित्यर्थः । एतद्वृत्त्यन्तरसूचनार्थं चासच्छब्दप्रयुक्तः सूत्र इति भावः । **अत्रेति** । अस्मिन्नर्थम् । **कर्तृसाधन इति** । नास्तीत्यसदित्येवंरूपेणेत्यर्थः ।

**यादु०— अपराऽपि वृत्तिरिति** । अपरमपि व्याख्यानमित्यर्थः ।

**कं०रा०—** अर्थान्तरसिद्ध्यर्थं चासच्छब्दप्रयोग इत्यभिप्रेत्य असदिति पूर्वपक्षांशस्यान्यां व्याख्यां करोति **अपरा वृत्तिरिति** ।

